# वैदिकवाङ्मय-निर्वचनकोषः





डॉ० रूप किशोर शास्त्री

## ग्रन्थीयम्

वैदिक वाङ्मय-निर्वचनकोषाभिधानेऽस्मिन् ग्रन्थे प्रायशस्तेषां सर्वेषामेव निर्वचनानां सङ्ग्रहो विद्यते, यानि स्वयमेव दिशानिर्देशकारकाणि स्वतः प्रमाणभूतानि चेति। महर्षिणा यास्काचार्येण मूलरूपेण तेषां निर्वचनानां विस्तृतं. स्वरूपं विशदमायामञ्च समुद्घाट्य निघण्टुं निरुक्त-शास्त्रञ्च प्रामाणिक ग्रन्थ रूपेण सकलज्ञानपिपासुलोकाय दिव्योपहाररूपेण समुपहतम्। वर्त्तमान समये वैदिक पदावलिभाष्यकरणे निर्वचन शैल्येव साधकतमं प्रमाणम्।

वैदिकवाङ्मय-निर्वचनकोषेऽस्मिन् विश्वेषां ऋगादि संहितानां ब्राह्मणग्रन्थानामारण्यकानामुपनिषदां, स्मृति-शास्त्रादीनाञ्च वैदिकसाहित्यसम्बद्धानां स्वतः परतश्च व्यक्तव्याख्यातप्रत्यक्षपरोक्षातिपरोक्षगतवृत्तित्रयविध-निरुक्तीनां प्रस्तवनेन सह समुद्धृतस्यैकैकस्य निर्वचनस्य धातु निर्देशपुरस्सरं प्रस्तवनमेवाभीष्टम्। येन सकल विद्वज्जन-मनीषि-लेखक-शोधज्ञानपिपासवो जनाः अन्यान्यपाठकाश्च निर्वचन सम्बन्धिनीं सकलां सामग्रीं विषयवस्तु च एकस्मिन्नेव स्थाने समुपलभेरन्। भविष्यति काले च सामान्येन शोधदृष्ट्या विविध वैदिक विधानां विधानाञ्च चिन्तनं भूयिष्ठ प्रशस्तरूप विकासमाप्नुयादित्येव ग्रन्थस्यास्य मूल प्रयोजनम्।

मूल्यम् : रु. 800/-




# वैदिकवाङ्मय-निर्वचनकोषः

[ संहिता-ब्राह्मण-आरण्यक-उपनिषद्-स्मृत्यादि-ग्रन्थेभ्यो धातुनिर्देशपूर्वकसङ्कलितानि निर्वचनानि ]





डॉ० रूप किशोर शास्त्री
रीडर, वेद विभाग
गुरुकुल काङ्गड़ी विश्वविद्यालय
हरिद्वार




प्रतिभा प्रकाशन
दिल्ली





प्रथम संस्करणम् २००१ क्रिश्त्वब्दः



ISBN : 81-7702-043-9

मूल्यम् : ८००/- रूपये

*प्रकाशक:*

**डॉ० राधेश्याम शुक्ल**

एम०ए०, एम० फिल्०, पी-एच०डी०

**प्रतिभा प्रकाशन**

(प्राच्यविद्या-प्रकाशक एवं पुस्तक-विक्रेता)

29/5, शक्ति नगर, दिल्ली-110007

दूरभाष : 011-7451485

*अक्षर संयोजक :*

कम्पोग्राफिक प्वॉइन्ट

ब्रह्मपुरी, दिल्ली-53

*मुद्रक :*

तरुण ऑफसेट, दिल्ली

# ENCYCLOPAEDIA OF VEDIC ETYMOLOGY

*[In the reference of Vedic Saṁhitās, Brāhmaṇas, Āraṇyakas, Upaniṣads & Smṛtis etc.]*

**Dr. ROOP KISHOR SHASTRI**
Reader, Department of Vedic Literature
**Gurukul Kangari University**
**Haridwar**




**PRATIBHA PRAKASHAN**
DELHI

First Edition 2001



ISBN : 81-7702-043-9

Price : Rs. 800 /-
$ 80

Published by :
Dr. Radhey Shyam Shukla
M.A., M.Phil., Ph.D.
for **Pratibha Prakashan**
(Oriental Publisher & Booksellers)
29/5, Shakti Nagar, Delhi-110007
Tel. : 7451485

Laser Typesetting :
COMPO GRAPHIC POINT
Delhi-110053

Printed at :
Tarun Offset, Delhi

ओ३म्

देवस्य पश्य काव्यं न ममार न जीर्यति।

–अथर्ववेद, १०/८/३२

परमदेव परमात्मा के काव्य (वेदरूपी ज्ञान)
का दर्शन (स्वाध्याय) करो,
क्योंकि वह ज्ञान कभी
नष्ट नहीं होता,
न ही जीर्ण
होता
है।

# पूर्वार्चिकम्

वेदसहितमखिलं वैदिकवाङ्मयं निर्विवादं विश्वस्य प्राचीनतमं साहित्यमस्ति, नास्त्यत्र कश्चित् संशयः। मनीषिभिर्वेदज्ञानमादिज्ञानमुरीकृतमिति। सृष्ट्यादौ अग्नि-वायु-आदित्य-अङ्गिरादि ऋषीणां हृदयेषु परमात्मप्रेरितमिदं ज्ञानं सकल-विद्यानां मूलकारणमिति सतर्कं प्रतिपादितं महर्षिणा दयानन्द स्वामिना। परन्तु वेदेषु आध्यात्मिक-आधिदैविक-आधिभौतिक रहस्यात्मकस्थलेषु परवर्त्तिव्यवहार्यभाषा - वैदिकभाषयोर्वैभिन्न्येन समुचितेष्वर्थेषु च प्रायशः सन्देहः क्रियते। असाक्षात्कृतधर्मजनेभ्योऽर्थकाठिन्यं दृष्ट्वैव साक्षात्कृतधर्मभिर्महर्षिभिर्वेदानां व्याख्यानस्वरूपाः ब्राह्मण-आरण्यक-उपनिषद्-वेदाङ्ग-उपाङ्गादि ग्रन्थाः समये-समये निरमायिषत, ग्रन्थराशिरयं वैदिकवाङ्मयनाम्ना व्यवह्रियते।

वेदज्ञानाय शब्दार्थज्ञानाय च व्याकरणनिरुक्तादिग्रन्थानां ज्ञानं परमावश्यकम् । विशिष्ट-व्याख्या-पद्धति-प्रमाणभूतत्वान्निर्वचनशास्त्रं निरुक्तं वा पाणिनीय शिक्षायां वेदाङ्गानामन्यतममङ्गं स्वीकृत्य **''निरुक्तं श्रोत्रमुच्यते''** इत्यनेन वेदपुरुषस्य श्रोत्रं सुस्पष्टं समुद्घोषितम्। सत्यमेवैतत् यथा श्रोत्रशक्तिविपन्नो जनः शब्दार्थग्रहणेऽसमर्थः तथैव वीतनिरुक्तज्ञानो जनः वेदार्थज्ञानेऽक्षमः सर्वथा।

निर्वचनशब्दो निरुपसर्गाद् '√वच' धातोः ल्युट् प्रत्यये कृते सति निष्पद्यते, यस्यार्थोऽस्ति कथनं, व्याख्यानं, स्पष्टीकरणं वा अर्थवैभवप्रदर्शनमेव निर्वचनशास्त्रस्य क्षेत्रमस्ति। निरुक्तस्य दुर्गवृत्तौ दुर्गाचार्येण स्पष्टमेव लिखितमस्ति- **'अपिहितस्य अर्थस्य परोक्षवृत्तौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्यवचनं निर्वचनम्'**। ऋग्वेद भाष्यभूमिकायां सायणाचार्यः निरुक्तार्थं कुर्वन्नाह- **'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्'**। अस्याभिप्रायो यदर्थप्राधान्यमेव निरुक्तशास्त्रस्य लक्ष्यमस्ति। यास्कः स्वयमेव निरुक्त शास्त्रे- **'अर्थनित्यः परीक्षेत'** इति सिद्धान्तं स्थापयति यदर्थमभिलक्ष्यीकृत्य केनचित् वृत्तिसामान्येन पदस्य

निर्वचनमवश्यं विधेयमपरां प्रक्रियामुपेक्षीकृत्य गौणीकृत्य वाऽपि यतो हि निरुक्तन्तु वेदार्थदीपकमस्ति। प्राच्य नैरुक्तप्रक्रिया: परम्परायाश्च वेदार्थज्ञाने प्रकरणात्मकं प्रासङ्गिकं व्यावहारिकञ्चेति स्वरूपं विद्यते। निरुक्त-प्रक्रियेयं बहुविधा वरीवर्ति खलु यथा अर्थानुगामी धातुनिर्देशपुरस्सरै:, समानार्थकधातुभि:, पर्यायवाचकपदै:, शब्दगताक्षरै:, प्रत्यक्ष-परोक्ष-अतिपरोक्षवृत्तिभि:, वर्णविकार-आगम-विपर्यय-नाश-वर्णान्तर प्रयोगादिभि:, उपसर्ग-निपातनिर्देशपूर्वकै:, लोकव्यवहारैश्च वेदार्थं पदव्याख्यानञ्च सम्भव:।

भाषावैज्ञानिकदिशा पदस्य त्रयो विन्दव: प्रसिद्धा:-शब्दोच्चारण-शब्दस्वरूप- शब्दार्था:। एषु मुख्यता शब्दार्थस्यैव, यस्य प्रस्फुटनं निर्वचनशास्त्रेणैव सम्बोभवीति। अष्टाध्याय्या: ६/३/१०९ सूत्रस्य व्याख्यायां काशिकाकारो लिखति-

**वर्णागमोवर्णविपर्ययश्च द्वौ चापरौ वर्णविकार नाशौ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्।।**

यास्क-सिद्धान्तानुसारं निर्वचनानि प्रत्यक्ष-परोक्ष-अतिपरोक्षवृत्तिपरकङ्गतानि सन्ति। यत्र प्रकृति-विकृत्योर्विभाग: स्पष्टत: प्रतीयते अथवा वर्णसाम्यदृष्ट्या अर्थदृष्टिरप्यनुवर्त्तते तत्र व्याकरणादिनियमसम्पन्नानि तानि निर्वचनानि यास्कमते समर्थवृत्तिपरकाणि, दुर्गमते च प्रत्यक्षवृत्तिपरकाणि एव, प्राय: एतानि **"शब्दनिर्वचनानि"** अपि उच्यन्ते। यत्र प्रकृति-विकृती न स्पष्टे भवत: तानि **"उणादयो बहुलम्''** (अष्टा०, ३।३।१) सूत्रेण सम्पद्यमानानि कार्याणि व्याकरणनियमशिथिलानि प्रसङ्गानि प्रत्यक्षवृत्तिपरकाणि सन्ति। तृतीयकोटिगतानि प्रकृति-विकृतिरहितानि, कल्पनाऽऽधारितानि" **''पृषोदरादीनि यथोपदिष्टम्''** (अष्टा०, ६।३।१०९) सूत्रेण कल्पितानि पञ्चविधनिरुक्तप्रक्रियाभि: कृतानि निर्वचनानि अतिपरोक्षवृत्तिपरकाणि प्रसिद्धानि।

वैदिकवाङ्मयसम्बद्धा: यावन्त: कोषास्सन्ति ते प्रकृति-प्रत्ययात्मकपदार्थज्ञापका ऐतिहासिक पृष्ठभूमिद्योतका एव। "तास्त्रिविध: ऋच: .........." इत्यनुसारेण आध्यात्मिक-आधि-भौतिक-आधिदैविकात्मिका ऋचो भवन्ति। एतेषां पदार्थानां ज्ञानं प्रत्यक्षवृत्तिपरक-वैदिककोषैर्न सम्भवति। वर्त्तमाने काले समुपलब्धा: शब्दकोषा: पदार्थज्ञाने सहायकास्तु सन्ति, परन्तु येषु पदार्थेषु परोक्षमतिपरोक्षमर्थगाम्भीर्यमस्ति, तन्न तेषां पदानां देश-काल-वस्तु प्रकरण-ऊहात्मकपदार्थज्ञाने वैदिक शब्दकोषाणामनौचित्यमेव प्रदर्शितं भवति। ये केवलं शब्दार्थकोषेषु निर्भरास्ते मन्त्रैर्वैदिकपदैश्च साकमन्यायं कुर्वन्तीयं महत्यनर्थकरी न्यूनता चेति।

न्यूनतामेनां दूरीकर्त्तुं प्राच्य-ऋषि-मनीषि-भाष्यकारै: निर्वचनप्रक्रिया समाश्रिता। निर्वचनस्य मूलन्तु वेदे समुपलब्धमेव। व्याकरण-प्रक्रियया शब्दकोषैश्च ये पदा: न स्पष्टीभूता: तेषां

पदानामर्थ-गाम्भीर्यं निर्वचनप्रक्रिया प्रस्तौति, इदमेव निर्वचन-प्रक्रियायाः प्रमुख वैशिष्ट्यमस्ति। प्रायः निर्वचनानि सन्दर्भप्रकरणानुकूलानि भवन्ति। निर्वचनशास्त्रादेव भाषाविज्ञानमपि प्रारभ्यते। निर्वचन प्रक्रियायाः आधारभूतं भाषाविज्ञानं सर्वासां भाषाणां वैज्ञानिकीं व्याख्यां कर्तुं समर्थमिति। एभिः कारणैः निर्वचनकोषस्य महती आवश्यकता अनुभूयते स्म चिरकालतः। अखिल वैदिक वाङ्मये समुपलब्ध-निर्वचनानामेकत्र सङ्कलनं विधाय प्रस्तवनमेवोद्देश्यमहञ्च दृढं विश्वसिमि यदनेन निर्वचनकोषेण सर्वे ग्रहीतलाभाः विदितवेदितव्याः अधिगतयाथातथ्याः सुज्ञाः विज्ञाश्च भविष्यन्ति।

**"वैदिकवाङ्मय-निर्वचनकोषः"** इत्याख्यायां निर्वचन शोधकार्य-योजनायां विचार्य्य निष्कर्षोऽयं प्राप्यते यद्यपि उक्त कोषस्य सीमा तु निस्सीमैव, पुनरप्यस्य मुख्यं क्षेत्रं वैदिकवाङ्मयोऽस्ति। एतेषु ग्रन्थेषु पद-वाक्य-प्रसङ्गानि परस्परं साम्यं भजन्ते, परन्तु प्रकरण-सन्दर्भ-विषयवस्तु वैभिन्न्येनार्थभेदोऽपि जायते। वस्तुतः निर्वचन प्रक्रिया तु व्याख्या-पद्धतिरेव, यद् व्याकरणेनापि न भवति तन्निरुक्तेन सम्भवति।

निर्वचनात्मक-व्याख्याशैल्या कस्यापि पदस्यार्थप्रकाशः सम्बोभवीति। कश्चिच्छब्दः विभिन्नेषु ग्रन्थेषु बहुश आगतः, तस्य व्याख्याशैलीमभिलक्ष्य किं स्वरूपम्? एतत् कार्यं निर्वचनेनैव स्पष्टीकृतम्, एतानि निर्वचनानि वैदिकवाङ्मये सर्वत्र विकीर्णानि, तानि विकीर्णानि निर्वचनानि एकत्र संगृह्याकारादिक्रमेण **"वैदिकवाङ्मय-निर्वचनकोषः"** नाम्ना ग्रन्थो निरमायि मया। एकत्रैकपदस्य नैकनिर्वचनानि मिलिष्यन्ति। उपलब्धेषु निर्वचनपदेषु निहित वस्तु-प्रकरण-सन्दर्भयुताः याः याः धातवः प्राप्यन्ते ताः धातवोऽपि निर्दिष्टाः, एता एव अर्थप्रदर्शने सहायकाः खलु। बहुविधार्थसंयुक्तमिदं निर्वचनशास्त्रं सर्वेभ्यः सहायकं भविष्यति। निश्चितमेतत् यदनेन ग्रन्थेन वेदार्थप्रकाशो भविष्यति अविद्यान्धकारश्च नाशमेष्यतीति।

वैदिकवाङ्मय क्षेत्रे प्रेरणास्पदान् कर्णवासस्थ महर्षि दयानन्दस्मारक संस्थापकान् पूज्यपाद-गुरुवर्यान् स्व०पं० बाबूलाल दीक्षित महाभागानार्यसमाज संस्थाञ्च श्रद्धया स्मरामि। वेदवेदाङ्ग ग्रन्थेषु दत्तरुचिरहं साम्प्रतं यत्किमप्यस्मि तत्सर्वं गुरोरार्यसमाजसंस्थायाश्च प्रसाद एव। वेदार्थ प्रक्रियायां निर्वचन शास्त्रस्यातिशयं महत्त्वमवगम्य दिल्ली विश्वविद्यालये-ऽध्यापनकालादेव निरुक्ताध्ययने यथाकिञ्चित् परिश्रमं कृतवानहम्। निर्वचनकोष निर्माणदिशायां विचारश्च मे दृढ़तामगात् यत् एकैकस्य पदस्य नैकानि निर्वचनानि पृथक-पृथक् वैदिक ग्रन्थेषु उपलब्धानि कथन्नैतान्यन्वेष्य संगृह्य चैकस्यनिर्वचन कोषस्य पूर्तिङ्गच्छेत्, इदमेवास्ति रहस्यं निर्वचन कोषनिर्माणस्य, फलतः साम्प्रतं निर्वचनकोषः पूर्तिमगादिति।

१९९३ तमे ईसवीय संवत्सरे विश्वविद्यालय अनुदान आयोगस्य समक्षे वैदिक वाङ्मय-निर्वचनकोषस्यैक: प्रस्ताव: अनुदानार्थ विधत्त:, आयोगेन प्रस्तावोऽसौ स्वीकृत: तथा चार्थिकीं सहायतां कृत्वाऽऽयोगेनाहं वीतचिन्त: कृत:। यथामति यथाशक्ति च श्रमं विधाय शोधकार्यं पूर्तिं कृतवान्। एतदर्थमायोग: तस्याधिकारिण: कर्मचारिणश्च धन्यवादार्हा: प्रशंसार्हाश्च।

समये-समये विषयगता: बाधा: समागता:, परन्तु गुरुवर्यैराचार्यै: विद्वद्भिश्च मार्गो मे प्रशस्तीकृत:। तेषु विद्वत्सु स्वनामधन्या: सन्ति-प्रो० वाचस्पति उपाध्याय, कुलपति ला० ब० शा० विद्यापीठं दिल्ली, प्रो० रमारञ्जन मुखर्जी, पूर्व कुलपति कलकत्ता, सामवेद भाष्यकार आचार्य रामनाथ वेदालङ्कार पूर्व निदेशक दयानन्द शोध पीठ चण्डीगढ़, प्रो० ओ३म् प्रकाश पाण्डेय, अतिथि प्रोफेसर फ्रांस तथा हरिद्वारस्थ-गुरुकुल काङ्गड़ी विश्वविद्यालयीया: पूर्वकुलपति श्री सुभाष विद्यालङ्कार महाभागा: तथा च प्रोफेसर-पद-विभूषिता: (स्व०) रामप्रसाद वेदालङ्कार-वेदप्रकाशशास्त्रि-नारायण शर्म्म, जयदेव वेदालङ्कार-भारतभूषण विद्यालङ्कार-महावीर अग्रवाल-मनुदेव बन्धु प्रभृतय:।

वेद विभागस्य मे सर्वे हितैषिण: प्राध्यापकाश्च शोधकार्ये सहायका अभूवन् धन्यवादार्हास्सर्वे ते। प्रिय: डॉ० अशोक कुमार शर्मा जे० आर० एफ०, प्रिय: डॉ० विनोद कुमार जोशी, योजना सहायक:, प्रिय: तरुणकुमार ऋषि: कम्प्यूटर टङ्कणकश्च, एतेषां यथायोग्यमहं साहाय्यं प्राप्य योजनाया: शोधकार्यं कृतवान्, एतेभ्य: कार्यालयीय-सहयोगिभ्य: मे शुभकामना: आशीर्वचांसि सर्वदा।

आभारयुतै: शब्दै: देहरादून वास्तव्य स्व० रायबहादुर शिवचरणदास महाभागानां सुपुत्रवर्यान् श्री एम०एम० सब्रवाल महोदयानपि स्मरामि सादरं, येषां सङ्गणकसम्बन्धी-साहाय्येन सुचारुत: शोधकार्यं सम्पन्नतामगात्।

अन्ते च प्राच्य-अर्वाच्य-साक्षात्कृतधर्म-असाक्षात्कृतधर्मऋषि-मनीषि-लेखक-विद्वद्वराणां परोक्षापरोक्षसहयोगिणाञ्च कृतीन्, विचारान् दिशा-निर्देशानधिगम्योपकृतोऽस्मि। तेभ्य: सर्वेभ्य: औपचारिक-सूत्र निबद्धोऽहं कृतज्ञतां ज्ञापयन् समृद्ध आर्यावर्त्तीय परम्परां श्रद्धयाऽनुसरामि। पुनश्च काचिदपि त्रुटि-निराकरणाय विद्वद्वरेभ्य: पुरत: विनम्र प्रयासममुं नैय्यायिकप्रवर जयन्तभट्टीय शब्देषु प्रस्तौमि।

**कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमा:।**
**वचो विन्यास वैचित्र्यमात्रमत्र विचार्यताम् ॥**

विदुषां विधेय:

**रूप किशोर:**

# PREFACE

The Vedic literature alongwith all the *`Saṁhitās'* (Most sacred scriptures), is unqestionably the most ancient and the oldest literature of the world. The wise men (profound thinkers) regarding the knowledge of the *Vedas* as the first knowledge and as the knowledge inspired by God into spirit of those sages who had communion with the Universal Soul have recognised it as the repository of all the true learning and the perennial source of all the branches of knowledge and learning discovered afterwards. But due to the presence in the *Vedas* of some spiritual mysteries, those proceedings from the supernatural or divine agencies and those which are material, and due to the language of the *Vedas* being different from those languages which were used subsequently, there is often expressed doubt at some places with regard to the proper meaning of certain terms in the *Vedas*. Keeping in mind the possibilities of facing difficulties with regard to the meaning of these terms by those who do not have communion with God, those sages and profound thinkers who had such communion composed as far as possible on certain occasions in the form of explanatory scriptures on *Vedas* such as *'Śākhās'*, *'Brāhmaṇa granthas'*, *'Āraṇyakas'*, *'Upaniṣads'*, *'Kalpa sūtras'*, *'Prātiśākhyas'*, *'Śikṣā Granthas'* and *'Sūtra granthas'.* This collection of ancient scriptures is referred to as Vedic literature.

For the knowledge of *Vedas* and for understanding the meaning of the words the knowledge of grammar and the process of *Nirukta* has been regarded to be the most essential. By authenticity of its most excellent style of interpreting, this '*nirvacana śāstra*' or *Nirukta* has been spoken of as the '*śrotra*' or ear of the *Vedas* in form of a man (*Veda Puruṣa*) by the Pāṇinīya educationist regarding it as an important organ of *'Veda'* in the *'Pāṇinīya Śikṣā'*. It is true that as one devoid of hearing power is completely unable to hear, in the same way in the absence or lack of the art of interpreting one will remain completely incompetent in knowledge of meaning of the *Vedas*.

The term *'nirvacana'* (etymology) is derived from the root word '✓*vaca*' (✓वच) having the prefix *'nir'* with the suffix '*lyuṭ*' (ल्युट्), the meaning of which is 'statement', 'explanation' or 'clarification'. It is the demonstration of the profundity

of meaning which is the scope of etymon (*nirvacana* or '*Nirukta śāstra*'). Śrī Durga Singh, in his book '*Durgavṛtti*' has clearly explained the form of the process of interpretation by saying that - ''अपिहितस्य अर्थस्य परोक्षवृत्तौ अतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम्।''

Ācārya Sāyaṇa, in his book 'ऋग्वेदभाष्यभूमिका', has regarded the knowledge of meaning as the main subject of the process of etymons when he has said that ''अर्थावबोधे निरपेक्षतया पदजातं येनोक्तं तन्निरुक्तम्।'' It is known from this that it is the theory of meaning, being the principal thing, which is the main principle of the science of etymology. The aim of a term is the expression of meaning,meaningful context and its demonstration in the precincts of propriety. Yāska himself establishes this principle saying that ''अर्थ नित्यः परीक्षेत.'' The other processes may be neglected or may be given a secondary place, but the expression of meaning is the first or main thing. They present the contextual, referential and practical form, specially, in knowledge of meaning of *Veda*, of the process and tradition of the *Nirukta*. The jurisdiction of the process of *nirvacana* or etymology is to express proper meaning. This method of expression of meaning and interpretation is made possible by the indication of root which follows meaning, by that of synonymous root, by more than one roots which follow the meaning, by the synonymous term, by the indication of the representative root of the separate terms used possibly for letters occuring in word or the synonymous term,by the use in the form of direct (प्रत्यक्ष), indirect (परोक्ष) or extremely indirect method (अतिपरोक्षवृत्ति) occuring in a term, or with the indication of disorder of letter (वर्णविकार), addition of a letter to a word (वर्णागम), metathesis; i.e. reversion of a letter (वर्णविपर्यय), destruction of a letter (वर्णनाश) in a term and use of difference of letters and by the indication of various meanings of the prefixes (उपसर्ग) and *'nipātas'* (निपात)।

In the explanation of *'Aṣṭadhyāyī'* (अष्टाध्यायी-6.3.109), Kāśikākāra quoting ''वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्ण विकार नाशौ। धातोस्तदर्थातिशयेन योगः तदुच्यते पञ्चविधं निरुक्तम्'' has already presented the aforesaid five concepts of valid or real knowledge according to the meaning quoting this sentence. From the point of view of a philologist there are three marked points of a term; namely, pronunciation of a word (शब्दोच्चारण), form of a word (शब्दस्वरूप) and meaning of a word (शब्दार्थ). But the proper aim is to express the meaning of a word, the expression or manifestation is easily possible through the etymological process.

According to the principle of *Nirukta* etymologies are divisible into those having direct nature, those having indirect one and those having extremely indirect one, where the division of '*prakṛti*' (*dhātu*) or root and *vikṛti* or disorder i.e. the cause and effect or regional qualities etc. appear clearly or where along with the study of the similarity of letter the view of meaning is also positive. According to Yāska such etymologies due to having the rules of grammar etc., are capable

natured (समर्थवृत्तिपरक), and in the language of Ācārya Durga there are direct natured (प्रत्यक्षवृत्तिपरक); it is this which is often referred to as 'word etymon' (शब्दनिर्वचन) also. The second is that class where the context of nature (प्रकृति) and disorder (विकृति) does not become clear as it does in the above mentioned '*vṛtti*' (a grammatical process), and those classes which Maharṣi Pāṇini saying 'उणादयो बहुलम्' (अष्टा०, 3.3.1) has counted as having similarity of meaning and having looseness of rules of grammar and under the process of *Uṇādi* (उणादि). Such type of above etymologies are referred to as having indirect nature, and due to this very reason they have been called as 'meaning based etymology' also. Besides these etymologies there is the third class of such terms where the division of *prakṛti* and *vikṛti* etc. does not appear to exist at all and such type of etymological terms are assumed by imagination. Maharṣi Pāṇini by saying ''पृषोदरादीनि यथोपदिष्टम्'' (अष्टा०, 6.1.109) has regarded them as different from the other ones *'prakṛti pratyaya'* etc. From the point of view of the primacy of meaning many changes such as '*varṇāgama*', '*varṇaviparyaya*' '*varṇanāśa*', '*varṇādeśa*' etc. are made in such terms according to the need. Such etymons have been regarded as being extremely indirect natured (अतिपरोक्षवृत्तिपरक).

Whichever encyclopaedias are related to the Vedic literature, they are, certainly, informative of the *prakṛti pratyayātmaka* substance of words and are certainly of historical background, but as in the *'Nirukta'* of Yāska "--तास्त्रिविधः ऋचः" the 'Ṛcās' have been said to have conceived in them the dignity and sanctity of the spiritual, supernatural and physical meanings. The revelation of knowledge of the words and their simple meanings can never be possible through the Vedic encyclopaedias having apparent natured disposition (प्रत्यक्षवृत्तिपरक). The dictionaries available at present are helpful directly in giving knowledge of meaning of a word (पदार्थ). But in those verses in which there is hidden and most hidden depth of meaning there in place, time, object, context and conjectural the knowledge of meaning of these terms is unambiguously known. It is possibly the reason that those who depend merely on word meaning dictionaries do sheer injustice in the presentation of the contextual meaning of the 'Vedic verses', and it is a great and absolutely contrary meaning-deficiency in itself.

The ancient sages, profound thinkers and interpreters have everywhere taken the support of the etymological system in order to remove such deficiency. Its origin is clearly available in the *Vedas*. The main characteristic of etymon is that the presentation of the profundity of meaning of those terms whose meaning is not revealed in grammar or dictionaries is done by etymology. Generally, etymons are according to context and reference. Therefore, etymologies are absolutely helpful and beneficial in revealing the meaning of context and terms which seem difficult to understand. It is a great merit of the etymological system that it is quite capable in explaining all the aspects of Philology.

It is due to keeping in mind the above mentioned main utility that the great

need of etymological encyclopaedia has been accepted as a help to interpret the form of etymologies of difficult terms available generally in the whole Vedic literature. These etymologies are the key to the meaning of *Veda* and of crypto-semantics. Therefore, collecting and presenting the whole Vedic literature at one place will certainly give dimension to an ancient classical mighty plan. At the same time its full use in the worldly and Vedic meaning of a word (पदार्थ) will certainly be extremely helpful and useful.

Casting an eye on the scheme of work of etymologies entitled '*Vedic Vāṅmaya-Nirvachana Koṣa*' it is known that although the limits of the above mentioned encyclopaedia of etymologies are endless, even then, originally, its main field is Vedic literature only. In these scriptures many terms, sentences and contexts are somewhat similar to one another, but there occurs difference of meaning according to context, reference and subject-matter. To see explanation and context in those places becomes quite proper. As a matter of fact etymology is a kind of explanation-system by which revelation of context becomes possible by taking *prakṛti-pratyaya* etc. Besides this, explanation should be given through the medium of roots, words and clear meanings of direct, indirect and extremely indirect terms and terms having the nature of being synonymous, it is this which is the most excellent distinction of the etymological explanation method or style and the meanings which remain unconfirmed and unrevealed even through grammar can possibly be revealed through etymology only.

The meaning of some term quoted in a scripture has been revealed through the medium of etymological-explanation-method; what has been its context and reference? Again, suppose that some term has often occurred in one book or even in other ones, what has been its form or nature in the explanation method, this work was done by etymologies and these etymologies due to their being in separate scriptures are in scattered condition. These have been compiled alphabetically after collecting them in the form of a beneficial, useful book of the size of an encyclopaedia. The researchers, profound thinkers and readers should easily get sufficient matter only from one such encyclopaedic scripture. It will save the time, energy and money of those who are curious to know. Due to so much material being available at one place it will be sufficiently helpful in knowing the meaning according to context. At the same time many etymologies of one word or term will be available to see which will be sufficient for discrimination of meaning. Even the indications of all those roots which are available in the present etymological terms and the use of whom is found or may be according to object, context and reference in the subject have almost been given in each etymolising term. These will prove to be sufficiently helpful in the revelation of meaning. Moreover, through this encyclopaedia, the knowledge of the place, time, object, context and conjectural styles of

the sages, hermits will become possible to profound thinkers, authoritative persons and Acharyas which is most useful in arriving at the meaning of *Veda*. It is because of the form of the ancient style of the meaning of *Veda*. It is certain and undoubted that it will give strength to the revelation of the meaning of *Veda* and the darkness of ignorance and lack of knowledge will be eradicated.

He, who inspired me to study the field of deep, serious subjects as Vedic literature and linguistics has been mainly my revered Gurudev late Pt. Babulal Dixit, founder of Maharshi Dayanand Smarak, Karnvas (Bulandshahar). Whatever I am, the whole credit of making me goes to the institution of Arya Samaj and my *Gurudev*. The debt which I owe to them can not possibly be paid back in any way. My study, teaching, writing etc. are all still going on in this very field. Seeing the extreme importance of the art of etymology in the process of the meaning of *Veda*, strong interest in the field of Vedic literature was awakened since the time when I did teaching at the university of Delhi. The firm determination that an Etymological Encyclopaedia should be prepared in this connection had also taken place in the mind so that the many etymologies of one term which are scattered in different scriptures could be compiled and made available etymologicaly at one place.

Looking for means and resources for the above stated work, in 1993, I submitted in the form of a major research project entitled *"Vedic Vāṅmaya Nirvachan Koṣa"* (Encyclopaedia of Vedic Etymology) for acceptance and sanction to the University Grants Commission. The commission accepting the proposed project entrusted to me the responsibility of working on this excellent issue. By giving grant the University Grants Commission relieved me of all care with regard to means and resources. Indeed, the obtainment of target is perfectly possible where proper labour and hardwork and the availability of means for it complement each other. The proper labour and hard work of mine and means and resources of the Commission the present *Nirvachan Koṣa* is the fruit of these two. Besides, the availability of resources and means through the Commission, the affectionate cooperation and encouragement of the authorities will always be remembered by me. For this, I am heartily grateful to them.

To compelete this major reseach work I had to face mountain high difficulties which were reduced to the size of mustard seed by my teachers, Acharyas and learned persons and the obstacles of my path were removed by them. Among the most prominent and respectable of these are interpreter of *Sāmveda*, Acharya Ram Nath Vedalankar, Ex. Pro. Vice-Chancellor, Gurukul Kangri University, Haridwar, Prof. Vachaspati Upadhyaya, Vice-Chancellor, Lal Bahadur Shastri Vidyapeeth, New Delhi; Prof. Ramaranjan Mukharji, former Vice-Chancellor, Ravindra Bharati University, Calcutta; Prof. Bharat Bhushan Vidyalankar, Prof. Ved Prakash Shastri, Prof. Jaidev Vedalankar, Prof. Narayan Sharma, Prof. Mahaveer Aggarwal, Prof.

Manudev Gurukul Kangri Vishvavidyalaya, Haridwar; Prof. Omprakash Pandey, Lucknow University, Lucknow ex. visiting Prof. in France etc.

When this project was sanctioned to me, then Vice-chancellor Shri Subhash Vidyalankar, Pro-Vice Chancellor and Acharya Prof. Ram Prasad Vedalankar, Gurukul Kangri University, Haridwar, all the teaching staff of the department of *Veda* and several those of the other departments of the university who were my benefactors expressed their joy on this major research work; gave me sufficient cooperation, suggestions and encouragement and thus caused this research work to move ahead without hindrances. I remember all of them with great respect.

Fortunately, the contribution and role of Dr. Ashok Kumar Sharma, scholar of Vedic literature, in the capacity of Junior Research Fellow; Research Scheme Assistant Dr. Vinod Joshi and Shri Rajveer Singh and the remained extremely remarkable. All these gave their full attention, devotion and friendly eye towards the progress of the project and did not show any slackness on their part in getting the work completed in proper time. For this, being over-whelmed with emotions of good wishes towards these office assistants of mine I express a sincere disire for their higher and brighter future.

With humble words of gratitude I have the pleasure to state that if I had not got the affection and full cooperation of religious and respectable person Shri M.M. Sabharwal S/o late Rai Bahadur Shiv Charan Das Sabharwal, resident of Rajpur Road, Dehradun, it would not had been possible for me to complete this most important Vedic research work in proper time.

In the end, I wish to state that I have been benefited by the precious words, ideas and guidelines etc. in one way or the other of respectable ancient and modern sages who had communion with the divine and those who did not have such communion, by the profound thinkers, writers and learned persons and the direct or indirect collaborators. To express a sense of gratitude to all of them in a formal way saying 'कृतज्ञोऽस्मीति' will be to follow a rich Indian tradition. Again, respectfully expecting the forbearance of any mistake which might have crept in I submit my humble effort of compiling this encyclopaedia before the learned ones with the following words of Jayanta Bhaṭṭa, the well known scholar of *'Nyāya śāstra'*.

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः।
वचो विन्यास वैचित्र्यमात्रमत्र विचार्यताम्।।

*A Devotee of the Enlightened Ones,*

**Haridwar**

**Roop Kishor Shastri**

# शब्द-सङ्केत-सूची

| | | | |
|---|---|---|---|
| अ०वै० गृ०सू० | अग्निवैश्य गृह्यसूत्र | का० स्मृ० | कात्यायन स्मृति |
| अथर्व० | अथर्ववेद | केन० उप० | केनोपनिषद् |
| अथर्व० शि०उप० | अथर्वशिरोपनिषद् | कौ० गृ० सू० | कौषीतकि गृह्यसूत्र |
| अद्वय० उप० | अद्वयतारकोपनिषद् | कौ० ब्रा० उप० | कौषीतकि ब्राह्मणोपनिषद् |
| अन्न० उप० | अन्नपूर्णोपनिषद् | कौ० ब्रा० | कौषीतकि ब्राह्मण |
| अ०ना०उप० | अमृतनादोपनिषद् | खा० गृ० सू० | खादिर गृह्यसूत्र |
| अ० स्मृ० | अष्टादशस्मृति | गर्भ० उप० | गर्भोपनिषद् |
| आ० स्मृ० | आङ्गिरस् स्मृति | ग० ता० उप० | गणेशतारकोपनिषद् |
| आ० उप० | आत्मबोधोपनिषद् | गो० गृ० सू० | गोभिलीय गृह्यसूत्र |
| आप० गृ०सू० | आपस्तम्ब गृह्यसूत्र | गो० ब्रा० | गोपथ ब्राह्मण |
| आ० गृ० सू० | आश्वलायन गृह्यसूत्र | गो० उ० ता० उप० | गोपालोत्तरतापिन्युपनिषद् |
| आ० ब्रा० | आर्षेय ब्राह्मण | गो०पू० ता०उप० | गोपालपूर्वतापिन्युपनिषद् |
| आ० श्रौ० सू० | आश्वलायन श्रौतसूत्र | गौ० ध० सू० | गौतम धर्मसूत्र |
| ईश० उप० | ईशोपनिषद् | छा० उप० | छान्दोग्योपनिषद् |
| ऋ० | ऋग्वेद | छा० ब्रा० | छान्दोग्य ब्राह्मण |
| ऐ० आ० | ऐतरेयारण्यक | जा०उप० | जाबाल्युपनिषद् |
| ऐ० उप | ऐतरेयोपनिषद् | जा०द०उप० | जाबालदर्शनोपनिषद् |
| ऐ०ब्रा० | ऐतरेय ब्राह्मण | जै० आ० | जैमिनीयार्षेय |
| कपि० सं० | कपिष्ठल संहिता | जै०उप०ब्रा० | जैमिनीयोपनिषद् ब्राह्मण |
| का०श्रौ०सू० | कात्यायन श्रौतसूत्र | जै०ब्रा० | जैमिनीय ब्राह्मण |
| का० शु०सू० | कात्यायन शुल्ब सूत्र | ता०ब्रा० | ताण्ड्य ब्राह्मण |
| काठ०सं० | काठक संहिता | ता०सा०रा | तारसारोपनिषद् |
| का० सं० | काण्व संहिता | त्रि०ता०उप० | त्रिपुरा तापिन्युपनिषद् |

| | | | |
|---|---|---|---|
| त्रि० शि०ब्रा०उप० | त्रिशिखिब्राह्मणोपनिषद् | मै० सं० | मैत्रायणी संहिता |
| तु० अ०उप० | तुरीयातीतोपनिषद् | मु० उप० | मुण्डकोपनिषद् |
| तैत्ति० आ० | तैत्तिरीय आरण्यक | यजु० | यजुर्वेद |
| तै० उप० | तैत्तिरीयोपनिषद् | याज्ञ० स्मृ० | याज्ञवल्क्य स्मृति |
| तै० ब्रा० | तैत्तिरीय ब्राह्मण | यो० चू० उप० | योगचूड़ामणि उपनिषद् |
| तै० सं० | तैत्तिरीय संहिता | यो० त० उप० | योंगतरङ्गिण्युपनिषद् |
| दे० अ०ब्रा० | देवताध्याय ब्राह्मण | रा०ता०उप० | रामपूर्वतापिन्युपनिषद् |
| ना० परि०उप० | नारद परिब्राजकोपनिषद् | ला० श्रौ० सू० | लाट्यायन श्रौत सूत्र |
| निरु० | निरुक्त | व० उप० | वराहोपनिषद् |
| नृ० पू०ता०उप० | नृसिंहपूर्वतापिन्युपनिषद् | वा० श्रौ० सू० | वाराह श्रौतसूत्र |
| परम० उप० | परमहंसोपनिषद् | व्या० स्मृ० | व्यास स्मृति |
| प०ब्र०उप० | परब्रह्मोपनिषद् | श०ब्रा० | शतपथ ब्राह्मण |
| पा०गृ० सू० | पारस्कर गृह्यसूत्र | शर० उप० | शरभोपनिषद् |
| पा०ब्र० उप० | पाशुपत ब्रह्मोपनिषद् | शंख० स्मृ० | शंख स्मृति |
| पा०म०भा० | पाणिनीय महाभाष्य | शां० गृ० सू० | शांखायन गृह्यसूत्र |
| पा०स्मृ० | पारस्कर स्मृति | शां० ब्रा० | शांखायन ब्राह्मण |
| प्रणव० उप० | प्रणवोपनिषद् | शा० उप० | शाण्डिल्योपनिषद् |
| प्र०उप० | प्रश्नोपनिषद् | शा०सू० | शाण्डिल्य सूत्र |
| बटु० उप० | बटु उपनिषद् | ष०ब्रा० | षड्विंश ब्राह्मण |
| बृहद्० उप० | बृहदारण्यकोपानिषद् | सर्व० सा० उप० | सर्वसारोपनिषद् |
| बौ० ध० सू० | बौधायन धर्मसूत्र | सं० उप० ब्रा० | संहितोपनिषद् ब्राह्मण |
| बौ०श्रौ०सू० | बौधायन श्रौतसूत्र | साम० | सामवेद |
| ब्र० वि० उप० | ब्रह्मविन्दूपनिषद् | सा० वि०ब्रा० | सामविधान ब्राह्मण |
| म०उप० | महोपनिषद् | सा० श्रौ० सू० | सामवेदीय श्रौतसूत्र |
| मां० उप० | माण्डूक्योपनिषद् | सु० उप० | सुबालोपनिषद् |
| मा०गृ०सू० | मानव गृह्यसूत्र | सू० ता० उप० | सूर्यतापिन्युपनिषद् |
| मा०. श्रौ० सू० | मानव श्रौतसूत्र | हा० स्मृ० | हारीत स्मृति |
| मै० उप० | मैत्राण्युपनिषद् | | |

## अकामी

यो हि वै त्वकामेन कामान्न कामयते सोऽकामी भवतीति। -गो० उ० ता० उप० ८

अ (नञ्)+✓कमु-कान्तौ।

## अकूपारः

अकुपरणस्य दानस्य, आदित्योऽप्यकूपार उच्यते। अकूपारो भवति दूरपारः। समुद्रोऽप्यकूपार उच्यते। अकूपारो भवति महापारः। कच्छपोऽप्यकूपार उच्यते। अकूपारो न कूपमृच्छतीति।।

-निरु०, ४/१८

अ (नञ्)+कु+✓पृ-पालनपूरणयोः, अ (नञ्) +कूप+✓ऋ-गतौ।

## अक्तुः

समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः। -ऋ०, ३/१७/१

सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः। -ऋ०, ६/६९/३

व्यञ्जते दिवो अन्तेष्वक्तूनविशो न युक्ता उषसो यतन्ते। -ऋ०, ७/७९/२

अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै। -ऋ०, १०/१४/९

✓अञ्जु-व्यक्तिम्रक्षणकान्तिगतिषु।

## अक्रः

अक्रः आक्रमणात्। -निरु०, ६/१७

अ+✓क्रमु-पादविक्षेपे।

## अक्षः

अश्नोतेरित्येको। क्षरतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके। अनूपे गोमान् गोभिर्यदा क्षियति अथ सोमो दुग्धाभ्यः क्षरति। सर्वे क्षियतिनिगमा इति शाकपूणिः। -निरु०, ५/३

अक्षा अश्नुवत एनानिति वा। अभ्यश्नुवत एभिरिति वा। -निरु०, ९/७

अक्षो यानस्याञ्जनात्। -निरु०, १३/१२

✓अशूङ्-व्याप्तौ संघाते च, ✓क्षि-निवासगत्योः।

## अक्षरः

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।

ततः क्षरत्यक्षरं तद्विश्वमुपजीवति।।

-ऋ०, १/१६४/४२

सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः अधि वि क्षरन्ति। अथर्व०-१३/१/४२

यदक्षरत् तस्मादक्षरम्। -श० ब्रा०, ६/१/३/६

तदक्षरदेव। यदक्षरदेव तस्मादक्षरम्। यद्वेव क्षरन्नाक्षीयत तस्मादक्षयम्। अक्षयं ह वै नामैतत्। तदक्षरमिति परोक्षमाचक्षते।

-जै० उ० ब्रा०, १/७/२/१-२

अथ किं उपास्से इति। अक्षरमिति। कतमत् तदक्षरमिति। यत् क्षरन्नाक्षीयतेति। कतमत् तत् क्षरन्नाक्षीयतेति। इन्द्र इति। कतमः स इन्द्र इति। योऽक्षन् रमत इति। कतमः स योऽक्षन् रमत इति। इयं देवतेति होवाच।।

-जै० उ० ब्रा०, १/१४/२/८-९

एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम्।

-ऐ० आ० २/२/२

दशधा वा एतद् अतिविध्येमान् क्षरति शत धेमान् सहस्रधेमान् तस्मात् एतत् एवाक्षरं गेयम्।

-जै० ब्रा० २/१०

अक्षरन्न क्षरति।

-जै० ब्रा० २/२५८

यदक्षरं न क्षरते कथञ्चित्।

-अ० ना० उप०, २४

व्यक्तमेवाक्षरं तस्मादक्षरम्।

-गो० उ० ता० उप०, ९

अक्षरं न क्षरति। न क्षीयते। अक्षयं भवति।

-निरु०, १३/१२

अक्षरं न क्षरं विद्यात्, न क्षीयते न क्षरतीति वाऽक्षरम्। अश्नोतेर्वा सरोऽक्षरम्। अश्नुत इत्यक्षरम्।

-पा० म० भा० १/१ प्रत्याहार सूत्र झ भ ञ्

अ (नञ्)+✓अशूङ्-व्याप्तौ संघाते च, अ (नञ्) ✓क्षि-क्षये।

## अक्षिः

अक्षि चष्टेः। अनक्तेरित्याग्रायणः।

-निरु०, १/९

अश्नोतेरयमौणादिकः करणसाधनः सि प्रत्ययः। अश्नुतेऽनेनेत्यक्षि। -पा० म० भा०, ३/२/११५

✓चक्ष्-दर्शने, ✓अञ्ज्-व्यक्तिम्रक्षणकान्तिगतिषु, ✓अशूङ्-व्याप्तौ संघाते च।

## अक्षितिः

स यो मय्यक्षितिरिति विद्वान्यजते तस्येष्टं न क्षीयते। -शां० ब्रा०, ७/४

श्रद्धैव सकृदिष्टस्याक्षितिः स यः श्रद्दधानो यजते तस्येष्टं न क्षीयते। -कौ० ब्रा०, ७/४

अ (नञ्) ✓क्षि-क्षये।

## अक्षी

अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन्।

अध क्षरन्ति सिन्धवो न सृष्टा प्र नीचीरग्ने अरुषीरजानन्।। -ऋ०, १/७२/१०

तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्। -ऋ०, १/११६/१६

✓चक्ष्-दर्शने, अ (नञ्) ✓क्षि-क्षये।

## अगोह्यः

अगोह्य आदित्योऽगूहनीयः। -निरु०, ११/१६

अ (नञ्)+✓गुहू-संवरणे।

## अग्निः

अग्निर्देवाँ अनक्तु न उभे हि विदथे कविरन्तश्श्चरति दूत्यं नभन्तामन्यके समे।

-ऋ०, ८/३९/१

अग्निर्नयन्नववास्त्वम्। -ऋ०, १/३६/१८

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान्। -यजु०, ४०/१६

आ ग्ना अग्ने इहावसे। -ऋ०, १/२२/१०

प्रणीतोऽग्निरग्निना। -यजु०, १९/१७

स सह्म परिणीयते होता मन्द्रो दिविष्टिषु। उत पोता निषीदति। -ऋ०, ४/९/३

तद्वा एनमेतदग्रे देवानामजनयत तस्मादग्निः। अग्निर्ह वै नामैतद् यदग्निरिति। स जातः पूर्वः प्रेयाय। यो वै पूर्व एति-अग्र एतीति वै तमाहुः। सा उ एवास्य अग्निता। -श० ब्रा०, २/२/४/२

स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निः। अग्निर्ह वै तमग्निरित्याचक्षते।

-श० ब्रा०, ६/१/१/११

अग्निः कस्मात्। अग्रणीर्भवति। अग्रं यज्ञेषु प्रणीयते। अङ्गं नयति सन्नममानः। अक्नोपनो भवतीति स्थौलाष्ठीविः। न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इतात्। अक्ताद्दग्धाद्वा। नीतात्। स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः। तस्यैषा भवति। -निरु०, ७/१४

अग्र+✓णीञ्-प्रापणे, अ (नञ्)+ ✓क्नूयी-शब्दे, उन्दे च, ✓अगि-गतौ, ✓इण्-गतौ ✓अञ्जू -व्यक्तिम्रक्षणकान्तिगतिषु=अ + ग् -दग्ध ( ✓दह् -भस्मीकरणे ) -ग्, +नि-णीञ्-प्रापणे-नि>अग्नि, ✓अञ्चु-गतिपूजनयोः +✓नि-नये।

## अग्निष्टोमः

स वा एषोऽग्निरेव यदग्निष्टोमस्ततं यदस्तुवंस्तस्मादग्नि स्तोमस्तमग्निस्तोमं संतमग्निष्टोमित्याचक्षते।

-श० ब्रा० ३/९/३/३२, ऐ० ब्रा० १४/५

स वा एषोऽग्निरेव यदग्निष्टोमः।
तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं सन्तमग्निष्टोम इत्याचक्षते परोक्षेण, परोक्षप्रिया एव हि देवाः। -ऐ० ब्रा० १४/५
अग्निः+✓ष्टुञ्-स्तुतौ।

## अग्निहोत्रं

गौर्वा अग्निहोत्रम्, य एव प्राणानामहौषीत् तस्य हुतादजनीति। अग्नेर्हुतादजनीति तदग्निहोत्रस्याग्निहोत्रत्वम्। -तै० ब्रा०, २/१/६/३
तुभ्यमेवेदं हूयाता इत्यब्रवीत्। स एतद्भागधेयमभ्यजायत। यदग्निहोत्रम्। तस्मादग्निहोत्रमुच्यते, इति
-तै० ब्रा०, २/१/२/५-६
अग्निहोत्रं हूयते यत् सायं जुहोति तेनैवं रात्र्यै रमयति यत् प्रातस्तेनाह्नं एषा वा अग्ना आहुतिः प्रथमा हुता यदग्निहोत्रं तस्मादग्नौ सर्वा आहुतयो हूयन्तेऽथैषैवाग्निहोत्रमुच्यतेऽग्निहोत्रं ह वै नाम नास्मादन्यस्समानेषु वसीयान् भवति यस्यैवमग्निहोत्रं हूयते। -का० सं०, ६/१-२,
तद्यदेतस्या अग्रे आहुतेरुदैत, तस्मात्सूर्योऽग्निहोत्रम्। - श० ब्रा०, २/३/१/१
अग्नि+✓हु-दानादानयोः, ✓+ह्वेञ्-अग्नि+स्पर्द्धायां शब्दे च।

## अग्नीध्रः

अथाऽग्नीध्रीयेऽग्निं निदधति।
-शां० ब्रा०, ९/५
अग्निः+✓धृञ्-धारणे।

## अग्रं

अग्रमागतं भवति। -निरु०, ६/३
✓अगि-गतौ।

## अग्रिया

सर्वेऽग्रगमनेनेति वाग्रगरणेनेति वाग्रसम्पादिन इति वापि वाग्रमिति। -निरु०, ६/१६
✓अगि-गतौ।

## अग्रेगुवः

देवीरापोऽग्रेगुवोऽग्रेणीयोऽग्रेऽस्य यज्ञस्य प्रेता।
- मै०, १/१/११
देवीराप इत्यग्रेगुव इति ता यत्समुद्रं गच्छन्ति तेनाग्रेगुवः। -श० ब्रा०, १/१/३/७
अग्रे+✓गम्-गतौ।

## अघं

जहि यो नो अघायति शृणुष्व सुश्रवस्तमः।
-ऋ०, १/१३१/७
अघं हन्तेः। निर्ह्रसितोपसर्गः। आहन्तीति।
-निरु०, ६/११
आ+✓हन्-हिंसागत्योः।

## अघशंसं

अघस्य शंसितारम्। - निरु०, ६/११
अघ+✓शंस्-स्तुतौ।

## अघ्न्या

अघ्न्याहन्तव्या भवति। अघघ्नीति वा। तस्या एषा भवति। - निरु०, ११/४३
अ (नञ्)+✓हन्-हिंसागत्योः।

## अङ्कः

अङ्कोऽञ्चतेः। -निरु०, २/२८
✓अञ्चु-गतिपूजनयोः।

## अङ्कुशः

अङ्कुशोऽच्यतेः। आकुचितो भवतीति वा।
-निरु०, ५/२८
✓अञ्चु-गतिपूजनयोः,आङ्+✓ कुच-सङ्कोचने।

## अङ्गं

अङ्गमङ्गनात्। अञ्चनाद्वा। -निरु०, ४/३

अङ्ग इति क्षिप्रनाम। अङ्क्तमेवाञ्चितं भवति।
-निरु०, ५/१७

✓अञ्चु-गतिपूजनयोः।

## अङ्गारः

अङ्गारेष्वङ्गिरा। अङ्गारा अङ्कनाः (अञ्चनाः)। - निरु०, ३/१७

✓अकि-लक्षणे, ✓अञ्चु-गतिपूजनयोः।

## अङ्गिरस्

अङ्गानां हि रसः। -श० ब्रा०, १४/१/१/२१

एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः।
-छा० उप०, १/२/१०

तं वरुणं मृत्युमप्यश्राम्यदभ्यतपत्समतपत्तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत्सोऽङ्गरसोऽभवत्तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते। -गो० ब्रा०, १/१/७

सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः। सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः प्राणो वा अङ्गानां रसः प्राणो हि वा अङ्गानां रसतस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानां रसः।
-बृहद्० उप०, १/३/८, १/३/१९

✓अगि-गतौ, अङ्ग+ ✓सृ-सर्वणे गतौ।

## अङ्गिरसां निवेष्टः

तद् यद् एनान् सर्वाभ्यो दिग्भ्यः पशवोऽभिन्यवेष्टन्तं तन् निवेष्टस्य निवेष्टत्वम्।
-जै० ब्रा०, ३/२५०

अङ्गिरसां+नि +✓वेष्ट-वेष्टने।

## अङ्गिरसां सङ्क्रोशः

यत् (अङ्गिरसः) सङ्क्रोशमानाः स्वर्गं लोकम् आयंस् तत् व् सङ्क्रोशस्य सङ्क्रोशत्वम्।
- जै०ब्रा०, ३/४७

अङ्गिरसाꣳसङ्क्रोशो भवति। एतेन वा अङ्गिरसः सङ्क्रोशमानाः स्वर्गं लोकमायन्।
-ता०ब्रा०, १२/३/२२-२३

अङ्गिरस्+सम्+✓क्रुश-आह्वाने रोदने च।

## अङ्गुल्यः

अङ्गुल्यः कस्मात्। अग्रगामिन्यो भवन्तीति वा। अग्रगालिन्यो भवन्तीति वा। अग्रकारिण्यो भवन्तीति वा। (अग्रसारिण्यो भवन्तीति वा) अङ्कना भवन्तीति वा। अञ्चना भवन्तीति वा। अपि नाभ्यञ्जनादेव स्युः।
-निरु०, ३/८

अग्र+✓गम्-गमने, अग्र+✓गल-स्रवणे, ✓अकि-लक्षणे, ✓अञ्चु-गतिपूजनयोः, ✓अञ्ज्-व्यक्तिम्रक्षणकान्तिगतिषु।

## अच्युतः

प्राच्यावयदच्युता ब्रह्मणस्पतिः।-ऋ०, २/२४/२

त्वद्भियेन्द्र पार्थिवानि विश्वा च्युता चिच्यावयन्ते रजांसि। -ऋ०, ६/३१/२

ते (देवाः) यदृतूनभिह्वयमाना अथाग्निमायतनात् नाच्यावयन्तस्मादग्निरच्युतः। न ह वा आयतनाच्च्यवते - यस्मिन्नायतते, भवति-य एवमेतमग्निमच्युतं वेद॥ -श० ब्रा०, १/६/१/६

अ (नञ्)+✓च्युङ्-गतौ।

## अछिद्रं

ततो वै सोऽछिद्रः प्रजया पशुभिरभवत्। तद् एवाछिद्रस्याछिद्रत्वम्। -जै० ब्रा०, ३/२१८

यद्वा एतस्याह्नश्छिद्रमासीत्तद्देवा अच्छिद्रेणाप्यौहꣳस्तदछिद्रस्याछिद्रत्वम्।
-ता० ब्रा०, १४/९/३६

अ (नञ्)+✓छिदिर-द्वैधीकरणे।

## अजएकपादः

अज एकपादजन एकः पादः। एकेन पादेन

पातीति वा। एकेन पादेन पिबतीति वा। एकोऽस्य पाद इति वा। -निरु०, १२/२९

अ (नञ्)+✓जनी-प्रादुर्भावे+एक+✓पद-गतौ।

## अजरं

अजरमजरणधर्माणम्। -निरु०, ४/२७

अ (नञ्)+✓जृष्-वयोहानौ।

## अजा

अजा ह्यग्नेरजनिष्ट शोकात्सोऽपश्यज्जनितारमग्रे। -यजु०, १३/५१, -अथर्व० ४/१४/१

अजा ह वै नामैषा यदजा एतया ह्येनमन्तत आजति।

अजाश्वेति पूषणमाह। अजाश्व अजा अजनाः। -निरु०, ४/२५

अ (नञ्)+✓जनी-प्रादुर्भावे, ✓अज-गतिक्षेपणयोः।

## अजीगः

जिगर्तिर्गिरतिकर्मा वा। गृणातिकर्मा वा। गृह्णातिकर्मा वा। -निरु०, ६/८

✓गृ-निगरणे।

## अज्मं

अज्ममजिनमाजिमश्वाः। -निरु०, ४/१३

✓अज-गतिक्षेपणयोः।

## अञ्जः

ततो वै तेऽञ्जसा स्वर्गं लोकं आरोहन्। तद् एवाञ्जसोऽञ्जस्त्वम्। -जै० ब्रा०, ३/२०९

✓अञ्जु-व्यक्तिम्रक्षणकान्तिगतिषु।

## अञ्जस्कीयः

एतेन वै नमी साप्यो वैदहो राजाञ्जसा स्वर्गं लोकमैदञ्जसागामेति तदञ्जस्कीयानामञ्जस्कीयत्वम्। -ता० ब्रा०, २५/१०/१७

✓अञ्जु-व्यक्तिम्रक्षणकान्तिगतिषु।

## अञ्जिः

चित्रैरञ्जिभिर्वपुषे व्यञ्जते वक्षः सु रुक्माँ अधि येतिरे शुभे। -ऋ०, १/६४/४

जुष्टतमासो नृतमासो अञ्जिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः। -ऋ०, १/८७/१

सूर्यस्याञ्यङ्क्ते समनगा इव व्राः। -ऋ० १/१२४/८

कन्यां इव वहतुमेतवा उ अञ्ज्यञ्जाना अभि चाकशीमि। -ऋ० ४/८५/९

✓अञ्जु-व्यक्तिम्रक्षणकान्तिगतिषु।

## अणुः

अणुरनु स्थवीयांसमनु। उपसर्गो लुप्तनामकरणो यथा संप्रति। -निरु०, ६/२२

✓अण्-शब्दार्थे।

## अतिग्राह्यं

तद्यत् एनान् अत्यगृह्णत् तस्मादतिग्राह्या नाम। -श० ब्रा०, ४/५/४/२

देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत। तदति ग्राह्यैरतिगृह्यावारुन्धत। तदतिग्राह्याणामतिग्राह्यत्वम्। -तै० ब्रा०, १/३/३/१

यदतिग्राह्या गृह्यन्ते। यदेवान्यैर्ग्रहैर्यज्ञस्य नावरुन्धे। तदेव तैरतिगृह्यावरुन्धे इति। -तै० ब्रा०, १/३/३/१

अति+✓ग्रह्-उपादाने।

## अतिछन्दः

अतिछन्दाश्छदेरर्थे। -दे० ब्रा०, ३/१९

अतिछन्दा वै छदिश्छन्दः। सा हि

सर्वाणिच्छन्दांसि च्छादयति।

-श० ब्रा०, ८/२/४/५

तद्यदेषा पशूंश्छन्दांस्यत्ति तस्मादतिछन्दा। अतिछन्दा ह वै तामतिछन्दा इत्याचक्षते परोक्षम्।

-श० ब्रा० ८/६/२/१३

अति+✓छदि-संवरणे।

## अतिथिः

अतिथेरातिथ्यम्। -यजु०, ५/१

अतिथिरभ्यतितो गृहान्भवति। अभ्येति तिथिषु परकूलानीति वा। परगृहाणीति वा।

-निरु०, ४/५

✓अत्-सातत्यगमने, अ (नञ्)+तिथिः, ✓अति-अभिपूजितार्थे।

## अतिमानः

तेऽतिमानेनैव पराबभूवुः। तस्मान्नातिमन्येत। पराभवस्य हैतन्मुखं यदतिमानः।

-श० ब्रा०, ५/१/१/१, ११/१/८/१

अति+✓माङ्-माने।

## अतिमुक्तिः

तदेतं मृत्युमतिमुच्यते। सैषाग्निहोत्रे मृत्युरतिमुक्तिः।

-श० ब्रा०, २/३/३/९

अति+✓मुच्लृ-मोचने।

## अतिवादः

अतिवादेन वै देवा असुरानत्युद्याथैनानत्यायंस्तथै-वैतद्यजमाना अतिवादेनैवाप्रियं भ्रातृव्य-मत्युद्याथैनमतियन्ति। -ऐ० ब्रा० ३०/७

अति+✓वदि-अभिवादनस्तुत्योः।

## अतूर्तः

अतूर्तो होतेति शंसत्ययं वा अग्निरतूर्तो होता इमं ह कश्चन तिर्यञ्च तरति।

-ऐ० ब्रा०, १०/२

अतूर्त्तो राजातूर्ण इति वा। अत्वरमाण इति वा।

-निरु०, ९/१०

बद्धं अतूर्णमिति वा अत्वरमाण इति वा।

-निरु०, १०/३२

अ (नञ्)+✓तुर्-त्वरणे, अ (नञ्)+✓तृ-प्लवनसंतरणयोः।

## अत्ता

आदित्यो वा अत्ता। तस्य चन्द्रमा एवाहितयः। चन्द्रमसं ह्यादित्य आदधति। इत्यधिदेवतम्।

-श० ब्रा०, १०/६/२/३

प्राणो वा अत्ता, तस्यान्नमेवाहितयः। अन्नं हि प्राणा आदधति। इति नु अग्नेः।

-श० ब्रा०, १०/६/२/४

स वै यः सोऽत्ता - अग्निरेव सः।

-श० ब्रा०, १०/६/२/२

आ+✓धृञ्-धारणे।

## अत्यः

अत्योऽसि मयोऽसि इति अत्येवैनं नयति। तस्मादश्वः पशूनत्येति। तस्मादश्वः पशूनां श्रैष्ठ्यं गच्छति। -श० ब्रा०, १३/१/६/१

अत्या अतनाः। -निरु०, ४/१३

✓अत-सातत्यगमने।

## अत्रिः

वागेवात्रि। वाचा हि अन्नमद्यते। अत्तिर्ह वै नामैतत् यदत्रिरिति सर्वस्यात्ता भवति। सर्वमस्यान्नं भवति य एवं वेद। -श० ब्रा०, १४/२/२/६

वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्रिर्ह वै नामैतद्य-दत्रिरिति सर्वस्यात्ता भवति, सर्वमस्यान्नं भवति य एवं वेद। -बृहद्० उप०, २/२/४

अत्रैव तृतीयमृच्छतेत्यूचुः तस्मादत्रिः न त्रयः इति। -निरु०, ३/१७

✓अद्-भक्षणे+✓त्रैङ्-पालने, अ (नञ्)+त्रि।

## अथर्वन्

न हीत्यथार्वाङ्नमेतास्वेवाप्स्वन्विच्छेति तद्यदब्रवीदथर्वाङेनमेतास्वेवाप्स्वन्विच्छेति तदथर्वाऽभवत्, तदथर्वणोऽथर्वत्वम्।

-गो० ब्रा०, १/१/४

अथर्वाणोऽथनवन्तः। थर्वतिश्चरतिकर्मा। तत्प्रतिषेधः। तेषामेषा साधारणा भवति।

-निरु०, ११/१८

अ (नञ्)+✓थर्व-गतिकर्मा हिंसायां च।

## अदाम्यः

ते (देवाः) ऊचुः। अदभाम वाऽएनान इति तस्माददाभ्यो न वै नोऽदयग्नीति तस्माद् दाभ्यो वाग्वादाम्यः। -श० ब्रा०, ११/५/९/५

अ (नञ्), +✓दम्भु-दम्भने।

## अदारसृत्

दिवोदासं वै भरद्वाजपुरोहितन्नानाजनाः पर्य्ययतन्त स उपासीददृषे गातुम्मे विन्देति तस्या एतेन साम्ना गातुमविन्दङ्गातुविद्वा एतत्सामानेन दारेनासृन्मेति तददारसृतोऽदारसृत्वं विन्दते गातुन्न दारे धावत्यदारसृता तुष्टुवानः।

-ता० ब्रा०, १५/३/७

अ (नञ्)+✓दृ-विदारणे+✓सृ-सर्पणे।

## अदितिः

इयं हीदं सर्वं ददते। -श० ब्रा०, ७/४/२/७

सर्वं वाऽत्तीति तददितेरदितित्वम्।

-श० ब्रा०, १०/६/५/५

यत् तदादत्त तददितिः। -का० सं० ८/४-५

स यद्यदेवा असृजत् तत्तदत्तुमध्रियत। सर्वं वा अत्तीति। तददितेरदितित्वम्। सर्वस्यात्ता भवति।

-श० ब्रा०, १०/६/५/५

अ (नञ्)+✓दो अवखण्डने, अ (नञ्)+✓दीङ्-क्षये ✓अद्-भक्षणे।

## अद्मसद्

अद्मान्नं भवति। अद्मासादिनीति वा अद्म सानिनीति वा। -निरु०, ४/१६

✓अद् -भक्षणे+✓षद्लृ विशरण-गत्यवसादनेषु।

## अद्रिः

ते मर्मृजत ददृवांसो अद्रिं तदेषामन्ये अभितो वि वोचन्। -ऋ०, ४/१/१४

अपो यदद्रिं पुरुहूत दर्दराविर्भुवत्सरमा पूर्व्यं ते। -ऋ०, ४/१६/८

ग्रावाणो न सूरयः सिन्धुमातरः आदर्दिरासो अद्रयो न विश्वहा। -ऋ०, १०/७८/६

अद्रिरादृणात्यनेन। अपि वात्तेः स्यात्। ते सोमादो। इति ह विज्ञायते। -निरु०, ४/४

✓अद्-भक्षणे, आ+✓दृङ्-आदरे।

## अधरः

अधरोऽधोऽरः। -निरु०, २/११

अधस्+✓ऋ-गतौ।

## अधः

न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा।

-निरु०, २/११

अ (नञ्)+✓धाव्-धावने।

## अधिराजा

अधिराजो राजसु राजयातै।

-अथर्व०, ६/९८/१

अधि+✓राजृ-दीप्तौ।

## अधिवासं

सर्वभूताधिवासं च यद्भूतेषु वसत्यधि।

-ब्र० वि० उप०, २२

अधि+✓वस्-निवासे।

## अधोरामः

अधोराम सावित्रः। अधस्तात्तद्वेलायां तमो भवत्येतस्मात्सामान्यात्। अधस्ताद्रामोऽध-स्तात्कृष्णः। कस्मात्सामान्यादिति। अग्निं चित्वा न रामामुपेयात्। रामा रमणायोपेयते न धर्माय। कृष्णजातीयै तस्मात्सामान्यात्।

-निरु०, १२/१३

अधो+✓रमु-क्रीडायाम्।

## अध्रिगुः

अध्रिगुर्मन्त्रो भवति। गव्यधिकृतत्वात्।
अपि वा प्रशासनमेवाभिप्रेतं स्यात्।
शब्दवत्त्वात्। अग्निरप्यध्रिगुरुच्यते।
अधृतगमनकर्मवन्। इन्द्रोऽप्यध्रिगुरुच्यते।

-निरु०, ५/११

अ (नञ्)+✓धृङ्-अवस्थाने+✓गाङ्-गतौ।

## अध्वर्युः

अध्वर्युरध्वरर्युः। अध्वरं युनक्ति। अध्वरस्य नेता। अध्वरं कामयत इति वा। अपि वाधीयाने युरुपबन्धः। -निरु०, १/८

अ (नञ्)+✓ध्वर्-हिंसाकर्मा+✓युजिर्-योगे।

## अध्वरः

अध्वर इति यज्ञनाम। ध्वरतिर्हिंसा कर्मा। तत्प्रतिषेधः। -निरु०, १/८

अध्वर्तव्या वा इमे देवा अभूवन्निति तदध्व-रस्याध्वरत्वम्। -तै० सं०, ३/२/२/४

एव न शेकुर्धूर्वितुम्, ते पराबभूवुः। तस्माद्यज्ञोऽध्वरो नाम।

-श० ब्रा०, १/४/१/४०

तृतीयसवने त्र्यम्बकांस्तेऽसुरा अपक्रामन्तोऽब्रुवन्न वा इमे ध्वर्तवा अभूवन्निति तदध्वस्याध्वरत्वम्।

-का० सं०, २३/१८

अ (नञ्)+✓ध्वर्-हिंसाकर्मा।

## अनड्वान्

वोढाऽनड्वानित्याह। अनडुह्येव वीर्यं दधाति। तस्मात्पुरा वोढाऽनड्वानजायत।

-तै० ब्रा०, ३/८/१३/२

✓अन्-प्राणने+✓वह्-प्रापणे।

## अनन्तः

अथ कस्मादुच्यतेऽनन्तो यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चायास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः।

-अथर्व० शि० उप० ४, बटु० उप० १

अ (नञ्)+अन्त।

## अनमीवाः

ता अस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधः। -यजु०, ४/१२

अन् (नञ्)+✓अम-रोगे।

## अनवायं

अनवायमनवयवम्। यदन्ये न व्यवेयुः।

-निरु०, ६/११

अन् (नञ्)+अव+✓इण्-गतौ।

## अनशनन्

तद् यदेतमनशित्वेवोपसंगच्छन्ते तस्मादेषोऽनशनन्।

-श० ब्रा०, २/३/२/३

अन् (नञ्)+✓अश्-भोजने।

## अनस्

अनोः वायुरनितेः अपि वोपमार्थे स्यात् अनसः इव शकटादिव। अनः शकटमानद्धमस्मिंश्ची-वरम्। अनितेर्वा स्यात्। जीवनकर्मणः। उपजीवन्त्येनत्।

-निरु०, ११/४७

✓अन्-प्राणने।

## अनाशकामनं

अथ यदानाशकामनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते।
-छा० उप०, ८/५/३

अन् (नञ्)+✓नश्-नाशने+✓कमु-कान्तौ।

## अनिलः

तद्वायुः न ह्येष इलयति। -शां० ब्रा०, २७/५
तद्वायुर्न ह्येष कदाचनेलयति।
-ऐ० ब्रा०, ५/२५

✓अन्-प्राणने, अन् (नञ्)+✓इल्-प्रेरणे।

## अनुभूः

अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति। सुवर्गस्य लोकस्यानु भूत्यै, इति। -तै० ब्रा०, ३/८/१७

अनु+✓भू-सत्तायां।

## अनुमतिः

अनु नोऽद्यानुमतिर्यज्ञन्देवेषु मन्यताम्।
-यजु०, ३४/९

यत् ते नाम सुहवं सुप्रणीतेऽनुमते अनुमतं सुदानु।
-अथर्व०, ७/२०/४

अनुमतिरनुमननात्। -निरु०, ११/२९
अन्वद्य नोऽनुमतिर्यज्ञं देवेषु मन्यताम्।
-अथर्व०, ७/२०/१

आनुमतेन प्रचरति इयं वा अनुमतिः इयमेवास्मै राज्यमनु मन्यते। -तै० ब्रा०, १/६/१/४-५
इयं वा अनुमतिः। स यस्तत्कर्म शक्नोति कर्तुम् यच्चिकीर्षति इयं हास्मै तदनुमन्यते।
-श० ब्रा०, ५/२/३/४

धात्रे पुरोडाशं द्वादशकपालं निर्वपति। संवत्सरो वैधाता संवत्सरेणैवास्मै प्रजाः प्रजनयति अन्वेवास्मा अनुमतिर्मन्यते।
-तै० ब्रा०, १/७/२/१

अनु ✓ मन् - ज्ञाने।

## अनुमन्यमानः

अनुमन्यतामनुमन्यमानः प्रजावन्तं रयिमक्षीयमाणम्। -अथर्व०, ७/२०/३

अनु ✓मन्-ज्ञाने।

## अनुयाजा

तद् यत्तासु सर्वासु इष्टासु अथैतत् पश्चेवानुजयति तस्मादनुयाजा नाम।
-श० ब्रा०, १/८/२/७

अनु+✓यज्-देवपूजासङ्गतिकरणदानेषु।

## अनुरूपं

पूर्व्वमु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्व्वरूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वम्। -ता० ब्रा०, १२/७/८, १३/७/७
यत्पूर्वꣳ रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वम्।
-ता० ब्रा०, ११/६/४, १२/७/७, १३/१/९

अनु+✓रुच-दीप्तावभिप्रीतौ च।

## अनुलेपनं

तदनुलेपनम्। तेनानुलिम्पेत्।
-सा० वि० ब्रा०, २/६/१३, २/६/१८

अनु+✓लिप्-उपदेहे।

## अनुष्टुप्

स्तोमासस्त्वा विचारिणि प्रतिष्टोभन्त्यक्तुभिः।
-ऋ०, ५/८४/२

अनुष्टुबनुस्तोभनात्। अन्वस्तौदिति हि ब्राह्मणम्।
-दे० ब्रा०, ३/७-८

गायत्रीमेव त्रिपदां सतीं चतुर्थेन अनुष्टोभतीति च ब्राह्मणम्। -निरु०, ७/१२, दे० ब्रा०, ३/८
अनुष्टुबनुष्टोभनात्। -निरु०, ७/१२
अनु+✓ष्टुञ्-स्तुतौ।

## अनुसंतवी

अनुसंतवीत्वत्। तनोतेः पूर्वया प्रकृत्या निगमः।

-निरु०, २/२८

अनु+सम्+✓तनु-विस्तारे।

## अनूपः

अनूपा अनुवपन्ति लोकान्स्वेन स्वेन कर्मणा। अयमपीतरोऽनूप एतस्मादेव। अनुप्यत उदकेन। अपि वान्वाबिति स्यात्। यथा प्रागिति। तस्यानूप इति स्यात् यथा प्राचीनमिति।

-निरु०, २/२२

अनु+✓डुवप्-बीजसन्ताने छेदने च, अनु+✓आप्लृ-व्याप्तौ।

## अन्तः

अन्तोऽततेः। -निरु०, ४/२५

✓अम-गत्यादिषु।

## अन्तकः

एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गच्छति। अथ म्रियन्ते। तस्मादेष एवान्तकः।

-श० ब्रा०, १०/४/३/२

✓अम-गत्यादिषु।

## अन्तर्यामः

यतस्तद्यदस्यैषोऽन्तरात्मन् यतः। यद्वा एनेनेमाः प्रजा यताः। तस्मादन्तर्यामो नाम।

-श० ब्रा०, ४/१/२/२

य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यं ततो यमयतीति। -श० ब्रा०, १४/३/७/३

अन्तः+✓यमु-उपरमे, अन्तः+✓या-प्रापणे।

## अन्तरिक्षं

अथो यद् अस्मिन् सर्वस्मिन् अन्तर ईक्षते तस्मात् अन्तरिक्षम्। -जै० ब्रा०, २/५६

ततो वै ते ( देवाः ) अन्तरिक्षाद् एवान्तरिक्षेण विजित्य स्वर्गं लोकं आरोहन् तद् एवान्तरिक्ष-स्यान्तरिक्षत्वम्।

-जै० ब्रा० ३/४५

तद् इदं अन्तरिक्षम् अभवत्। अन्तरेव वा इदं उभयं अभूद् इति। तद् अन्तरिक्षस्यान्तरिक्षत्वम्।

-जै० ब्रा० २/२४४

अन्तरा क्षान्तं भवति। अन्तरेमे इति वा। शरीरेष्वन्तरक्षयमिति वा। -निरु०, २/१०

इदमेवेदमग्रे अन्तरिक्षमासीत् तद्वेवाप्येतर्हि। तद्यदेतदन्तरिक्षम्। य एवायं पवते एतदेवान्तरिक्षम्। एष ह वा अन्तरिक्षो नाम।।

-जै० उ० ब्रा०, १/६/१/१-२

तद्यदस्मिन्निदं सर्वमन्तः तस्मादन्तर्यक्षं। अन्तर्यक्षं ह वै नामैतत्। तदन्तरिक्षमिति परोक्षमाचक्षते।

-जै० उ० ब्रा०, १/६/१/४

तयोर्वियतोर्योऽन्तरेणाकाश आसीत् तदन्तरिक्षमभवत्। ईक्षं हैतन्नाम ततः पुरा। अन्तरा वा इदमीक्षमभूदिति तस्मादन्तरिक्षम्।

-श० ब्रा०, ७/१/२/२३

तृतीयमच्छिनत्तदन्तरिक्षमभवदन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वं हो इति।

-ता० ब्रा०, २०/१४/२

अन्तर्+✓ईक्ष-दर्शने,अन्तर् +✓क्षि-निवासगत्योः, अन्तर्+( नञ् )+✓क्षि-क्षये।

## अन्तिकं

अन्तिकं कस्मात्? आनीतं भवति।

-निरु०, ३/९

✓अन-प्राणने, आ+✓णीञ्-प्रापणे।

## अन्धस्

अन्ध इत्यन्ननाम। आध्यानीयं भवति। तमोऽप्यन्ध उच्यते, नास्मिन् ध्यानं भवति न दर्शनम्। अन्धन्तम इत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव। -निरु०, ५/१

✓अद्-भक्षणे, आ+✓ध्यै-चिन्तायाम्, अ ( नञ् )+✓ध्यै-चिन्तायाम्।

## अन्नं

नितिक्ति यो वारणमन्नमत्ति। -ऋ०, ६/४/५
अन्नमन्नमदन्तमद्मि। -साम० पू०, ६/१/६
अन्नमश्नामि। -अथर्व०, ७/१०१/१
अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः। अन्नं हि भूतानां ज्येष्ठं। तस्मात्सर्वोषधमुच्यते। सर्वं वैतेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्द्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति। -तैत्ति० आ०, ८/२
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति। -तैत्ति० उप० ब्र० व०, २/२/१
अन्नं न निन्द्यात्। तद्व्रतं। प्राणो वा अन्नं। शरीरमन्नादं। प्राणे शरीरं प्रतिष्ठितं। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितं। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। -तैत्ति० आ०, ९/७
अन्नं प्र यच्छन्त्यन्नाद एव भवति। -तै० सं०, २/३/६/२
अन्नमत्ति। -मै० उ०, ५/१, ५/२
अन्नमद्यते। -मै० उ०, ३/१२
अन्नमु वै चन्द्रमाः। अन्नेन अशनयां घ्नन्ति। -जै० उ० ब्रा०, १/१/३/४
अन्नं वै सप्तदशो यत्सप्तमध्ये भवन्ति पञ्चपञ्चाभितोन्नमेव तन्मध्यतो धीयतेऽनशनायुको यजमानो भवत्यनशनायुकाः प्रजाः।। -ता० ब्रा०, २/७/७
अहमन्नमन्नमदन्तमद्मि इति। -तै० ब्रा०, २/८८/५९
आनतं भूतेभ्यः। अन्तेर्वा। -निरु०, ३/९
तदाहुर्मध्यतः संवत्सरस्योपेत्यं मध्यतो वा अन्नं जग्धं धिनोति। -ता० ब्रा०, ४/१०/३
तस्माद्यदनेनान्नमत्ति। -बृ० उप०, १/३/१८
वाचा वा इदं स्वदितमन्नमद्यते, अन्नाद्यस्योपाप्त्यै। विश्वरूपं वा इदमन्नमद्यते। -शां० ब्रा०, १८/८
यस्य वै देवा अन्नमदन्त्यदन्ति तस्य मनुष्या अन्नम्। -मैत्रा०, २/३/२३-३५
सर्वभूतान्नमत्ति। -मैत्रा उप०, ५/२
सवितृप्रसूतं वा इदमन्नमद्यते, अन्नाद्यस्योपाप्त्यै। -शां० ब्रा०, ८/५, १२/८
✓अद्-भक्षणे, +✓अन-प्राणने, आ+✓णम-प्रह्वत्वे नमत्वे इत्यर्थः।

## अन्नपूः

अन्नं केतः। अन्नपूरन्नं नः पुनात्वित्येतत्। -श० ब्रा०, ६/३/१/१९
अन्न+✓पूञ्-पवने।

## अन्नादः

अत्त्य अन्नं अन्नादो भवति। -जै० ब्रा०, १/२०४
अन्नमत्त्यन्नादो भवति य एवं वेद। -ता० ब्रा०, १९/११/५
आह बहुतमात्पुरुषादन्नमत्ति। अन्नादो भवति। य एवं वेद। -श० ब्रा०, २/१/२४
अन्नमत्ति अन्नादो भवति। -ष० ब्रा० २/१/१४
अन्न+✓अद्-भक्षणे।

## अन्यः

अन्यो नानेयः। -निरु०, १/६
अ (नञ्) ✓णीञ्-प्रापणे।

## अन्वाहार्यः

तद्यदेतद्धीनं यज्ञस्यान्वाहरति। तस्मादन्वाहार्यो नाम। -श० ब्रा०, ११/१/८/६
अनु+आ+✓हृञ्-हरणे।

## अंशुः

अंशुः शमष्टमात्रो भवति। अननाय शं भवतीति वा। -निरु०, २/५
✓अशूङ्-व्याप्तौ।

## अंशुग्रहः

प्रजापतिर्वाऽएष यदंशु सोऽस्यैष आत्मैव। आत्मा ह्ययं प्रजापतिः। तदस्यैतमात्मानं कुर्वन्ति-यत्रैतं गृह्णन्ति। तस्मिन्नेतान्प्राणान्दधाति। यथा यथैते प्राणा ग्रहा व्याख्यायन्ते॥ -श० ब्रा०,४/६/१/१

अंशु+✓ग्रह-उपादाने।

## अंसत्रः

अंहसस्त्राणम्। धनुर्वा। कवचं वा।

-निरु०, ५/२५

✓अम्-गत्यादिषु+स (सहितं)+✓त्रा-रक्षणार्थे, अंस+✓त्रा-रक्षणार्थे।

## अंहतिः

अंहतिश्चांहश्चांहुश्च हन्तेः। निरूढोपधात्। विपरीतात्। -निरु०,४/२५

अ (नञ्)+✓हन्-हिंसागत्योः।

## अंहुरः

अंहुरोऽंहस्वान्। अंहूरणमित्यप्यस्य भवति।

-निरु०, ६/२७

✓अहि-गतौ, आ+✓हन्-हिंसागत्योः।

## अपऽअप

अपोहत्यपोहतिशक्रः। -निरु०, ६/१९

अप-उपसर्गः पादपूरणार्थकः शब्दो वा, अप+✓अप-अपसरणे।

## अपचितिः

अथैषोऽपचितिः। प्रजापतिः प्रजा असृजत। ता एनं सृष्टा नापाचयन्। -जै० ब्रा०, २/१००

अप+✓चिञ्-चयने, अप+✓चिति-संज्ञाने।

## अपत्यं

अपत्यं कस्मात्। अपततं भवति। नानेन पततीति वा। -निरु०, ३/१

अप+✓तनु-विस्तारे

## अपराजितं

सोऽतो न पराजयते। तद् वा अपराजितं यद् अग्निहोत्रम्। -जै० ब्रा० १/४

अ (नञ्) परा+✓जि-जये।

## अपस्याः

अथ या अस्मात्ता आप आयन् एतास्ता अपस्याः।

-श० ब्रा०, ७/५/२/४५

यद्वेवापस्या उपदधाति प्रजापतेर्विस्रस्तादाप आयन्। -श० ब्रा०, ७/५/२/४४

अप+✓इण्-गतौ।

## अपांक्षयः

चक्षुर्वा अपांक्षयः। तत्र हि सर्वदैवापः क्षियन्ति।

-श० ब्रा०, ७/५/२/५४

अपाम्+✓क्षि-क्षये।

## अपाङ्गर्भः

आपो गर्भं जनयन्तीरित्यपाङ्गर्भः पुरुषः स यज्ञः। -गो० ब्रा०, १/१/३

✓आप्लृ-व्याप्तौ+✓गृ-निगरणे, अप+आङ्+✓गृ-शब्दे, ✓गभ-गृहणार्थे वा।

## अपाङ्

अपाङ् अपाञ्चयति।

-निरु०, १४/२३

अप +✓अञ्चु - गतिपूजनयोः।

## अपांसदनं

द्यौर्वाऽअपां सदनम्। दिवि ह्यापः सन्नाः।

-श० ब्रा०, ७/५/२/५६

अप+ ✓अन्-प्राणने+ ✓षद्लृ- विशरणगत्यवसादनेषु।

## अपानः

स यदेवापानेन अपानिति स एव पाप्मा।

-जै० उ० ब्रा० २/१/१/१६

अपानश्चन्द्रमा देहमाप्याययति सुव्रत।

-अ० पू० उप०, ५/२९

तमभ्यपानेदपानापानं मे यच्छेति।

-ऐ० ब्रा०, ८/३

यदपानिति सोऽपानः। -छा० उप०, १/३/३

अप+✓अन्-प्राणने।

## अपामयनं

इयं वा अपामयनम्। अस्यां ह्यापो यन्ति।

-श० ब्रा०, ७/५/२/५०

अपाम्+✓इण्-गतौ।

## अपामार्गः

अपामार्ग त्वया वयं सर्वं तदप मृज्महे॥

-अथर्व०, ७/६८/३, ४/१७/६-७, ४/१८/८

अपामार्गोऽप मार्ष्टु क्षेत्रियं शपथश्च यः।
अपाह यातुधानीरप सर्वा अराय्यः।
अपमृज्य यातुधानानप सर्वा अराय्यः।
अपामार्ग त्वया वयं सर्व तदप मृज्महे।

-अथर्व०, ४/१८/७-८

अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षांस्यन्मामृजत। ते व्यजयन्त। -श० ब्रा०, ५/२/४/२

अपामार्गैरपमृज्यते। अघमेव तदपमृजते।

-श० ब्रा०, १३/८/४/४

अप+✓मृजुष्-शुद्धौ, अप+✓मृजु- शौचालंकारयोः।

## अपामेमः

वायुर्वा अपामेम। यदा ह्यवैष इतश्चेतश्च वाति अथापो यन्ति। -श० ब्रा०, ७/५/२/४६

अप+✓इण-गतौ।

## अपामोद्मः

ओषधयो वा अपामोद्म। यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्ते।

-श० ब्रा०, ७/५/२/४७

अपां+✓उन्दी-क्लेदने।

## अपिशर्वरी

अपिशर्वर्या अनु स्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्य पारयंस्तद-पिशर्वराणामपिशर्वरत्वम्॥

-ऐ० ब्रा०, १६/५

तद्यदपिशर्वर्या अपि स्मसीत्यब्रुवंस्तदपिशर्वराणामपिशर्वरत्वम्। -गो० ब्रा० २/५/१

शर्वराणि खलु ह वा अस्यैतानि छन्दांसीति ह स्माहैतानि ह वा इन्द्रं रात्र्यास्तमसो मृत्योरभि-पत्यावारयंस्तदपिशर्वराणामपिशर्वरत्वम्।

-गो० ब्रा०, २/५/१

शर्वरी वै नाम रात्रिः। ते देवा अब्रुवन् अपि वै नश् शर्वयाम् अभूद् इति तद् एवापिशर्वराणाम् अपिशर्वत्वम्। -जै० ब्रा०, १/२०९

अपि+✓शृ-हिंसायां।

## अपीच्यं

अपीच्यमपचितम्। अपगतम्। अपिहितम्। अन्तर्हितं वा। -निरु०, ४/२५

अति+✓अञ्चु-गतिपूजनयो, अप+✓चिञ्-चयने।

## अपूर्वः

तद् यद् एतानि अपूर्वाणि तस्माद् अपूर्वः।

-जै० ब्रा०, २/१७४

अ (नञ्)+पूर्वः।

## अप्नस्

अप्न इति रूप नाम। आप्नोतीति सतः।

-निरु०, ३/११

✓ आप्लृ - व्याप्तौ।

### अप्वा

अप्वा यदेनया विद्धोऽपवीयते। व्याधिर्वा। भयं वा। -निरु०, ६/१२

अप+✓वी-गतिव्याप्तिप्रजनकान्त्यसनखादनेषु।

### अप्सरस्

अप्सरा अप्सारिणी। अपि वाप्स इति रूपनाम। अप्सातेः। अप्सानीयं भवति। आदर्शनीयम्। व्यापनीयं वा। स्पष्टं दर्शनायेति शाकपूणिः। यदप्स इत्यमक्षस्य। आप्सो नामेति व्यापिनः। तद्रा भवति रूपवती। तदनयाऽऽत्तमिति वा तदस्यै दत्तमिति वा। -निरु० ५/१३

✓आप्लृ-व्याप्तौ, अ (नञ्) +✓प्सा-भक्षणे, अथवा अप्स+✓रा-दानादानयोः।

### अप्तोर्यामन्

तस्माद्वारवन्तीयं ता यदाप्त्वाऽयच्छत्, अतो वा अप्तोर्याम। -गो० ब्रा०, २/५/९

यद् विष्णुः पशून्। आप्नोत्। तदप्तोर्यामस्याप्तोर्यामत्वम्, इति। -तै० ब्रा०, २/११०

यङ्कामङ्कामयते तमेतेनाप्नोति। तदप्तोर्य्याम्णोऽप्तोर्य्यामत्वम्। -तां० ब्रा०, २०/३/४-५

तैः एवैनान् आध्वात्मनि अयच्छत्। यद् आप्त्वात्मन्ययच्छत् तस्मादप्तोर्याम। -जै० ब्रा० २/११०

✓आप्लृ-व्याप्तौ+✓यमु-उपरमे, ✓आप्लृ-व्याप्तौ +✓इण्-गतौ, अप+✓तुर्-त्वरणे+✓इण्-गतौ।

### अप्रतिष्कुतः

अप्रतिष्कुतः। अप्रतिष्कृतः। अप्रतिस्खलितो वा। -निरु०, ६/१६

अ (नञ्)+प्रति+✓कुङ्-शब्दे।

### अप्रतिरथं

देवासुराः संयत्ता आसन् ते देवा एतदप्रतिरथमपश्यन् तेन वै ते प्रत्यसुरानजयन् तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथम्। -तै० सं०, ५/४/६/३

अ (नञ्)+प्रति+✓रमु-क्रीडायां।

### अब्जा

अब्जां अप्सुजम्। -निरु० १०/४४

अब्जा इत्येष वा अब्जा अद्भ्यो वा एष प्रातरुदेत्यप सायं प्रविशति। इति। -ऐ० ब्रा०, १८/६

अप्+✓जनि-प्रादुर्भावे।

### अभिजित्

अग्निरेवाऽभिजित्, अग्निर्हीदं सर्वमभ्यजयत्। -शां० ब्रा०, २४/१

अथाभिजिदभिजिता वै देवा इमान् लोकानभ्यजयन्। -ता० ब्रा०, २२/८/४

अभिजिता वै देवा अभ्यजयन्। अभिजिता वै देवा अभ्यजयन्निमांस्त्रींल्लोकान्। -शां० ब्रा०, २४/१

तन्नो नक्षत्रमभिजिद्वित्यं श्रियं दधात्वहृणीयमानम्। -तै० ब्रा०, ३/१/२/५

तेनेमान् लोकान् अभ्यजयन् अजयन् स्पर्धां भ्रातृव्यान् असुरान्। तद् यद् इमान् लोकान् अभ्यजयन् तद् अभिजितोऽभिजित्त्वम्। -जै० ब्रा०, २/१७८

देवासुराः संयत्ता आसन्। ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन्। यदभ्यजयन् तदभिजितोऽभिजित्वम्। -तै० ब्रा०, १/५/२/३-४

सोऽकामयत यन्मेऽनभिजितं तदभिजयेयमिति स एतमभिजितमपश्यत्तेनानभिजितमभ्यजयत्। यदभिजितद्- भवत्यनभिजितस्याभिजित्यै। -ता० ब्रा०, १६/४/६-७

अभि+✓जि-जये।

## अभितृण्णवती

इन्द्रो वै प्रातः सवने न व्यजयत्, स एताभिरेव माध्यन्दिनं सवनमभ्यतृणत् यदभ्यतृणत् तस्मादेता अभितृण्णवत्यो भवन्ति।

-ऐ० ब्रा०, २८/३

तद्यदेताभिः (इन्द्रः) माध्यन्दिनं सवनमभ्यतृणत्तस्मादेता अभितृण्णवत्यो भवन्ति।

-गो० ब्रा०, २/२/२१

अभि+✓उतृदिर्-हिंसानादरयोः।

## अभिधारि

यदुभयतोऽभिधारयत्युभयतोऽभिधारि प्रजा अरुर्धातुकं स्याद्यत्समयाभिहरेदनभिविद्धं यज्ञस्याभिविध्येत्। -गो० ब्रा०, २/१/३

अभि+✓धृ-धारणे।

## अभिधेतनः

अभिधेतन अभिधावत। -निरु०, ६/२७

अभि+✓धाव्-धावने।

## अभिनिधनं

अभिनिधनेन वा इन्द्रो वृत्राय वज्रं प्राहरत्तमस्तृणुत स्तृणुते भ्रातव्यमभिनिधनेन तुष्टुवानः।

-ता० ब्रा०, १४/४/५

यद् वा एवास्मा एतेन साम्ना कण्वोऽभीति वज्रं अभ्यनदत्, तस्मात् अभिनिधनं काण्वं इत्याख्यायते। -जै० ब्रा०, ३/१८९

अभि ✓णद्-अव्यक्ते शब्दे।

## अभिप्लवः

अभिप्लवन्त तस्मादभिप्लवः।

-गो० ब्रा०, १/४/२३

असौ एवाभिप्लवो योऽसौ तपति। एष हीदं सर्वं अभिप्लवते। -जै० ब्रा०, २/३१

त आदित्याश्चतुर्भिः स्तोमैश्चतुर्भिः पृष्ठैर्धुमिः सामभिः स्वर्गं लोकमभ्यप्लवन्त। यदभ्यप्लवन्त। तस्मादभिप्लवाः। -श० ब्रा०, १२/२/२/१०

ते देवा एतं अभिप्लवं समभरन्। तेनैना अभ्यप्लवन्त। यद् अभ्यप्लवन्त तदभिप्लवस्याभिप्लवत्वम्।

-जै० ब्रा०, २/४४२

प्लवन्त इव वा अभिप्लवाः। तिष्ठतीव पृष्ठय इति प्लवत इव ह्यङ्गैः। तिष्ठतीवात्मनेति।

-श० ब्रा०, १२/२/४/८

यद्वेवैष पळहः पुनः पुनरभिप्लवते, तस्माद् अभिप्लवो नाम। -शां० ब्रा०, २१/६

अभि+✓प्लुङ्-गतौ।

## अभिमानः

आत्मेश्वरजीवः अनात्मनां देहादीनामात्मत्वेनाभिमन्यते सोऽभिमानः।

-सर्व० सा० उप०, १

अभि+✓मन-ज्ञाने।

## अभिसञ्चरेण्यं

अभिसंचरेण्यम् अभिसंचारि। -निरु०, १/७

अभि+सं+✓चर-गतौ भक्षणे च।

## अभीकं

अभीकेऽभ्यक्ते। -निरु०, ३/२०

अभि+✓अञ्चु-गतिपूजनयोः।

## अभीक्ष्णं

अभीक्ष्णमभिक्षणं भवति। -निरु०, २/२५

अभि+✓ईक्ष-दर्शने।

## अभीवर्त्तः

अभीवर्त्तो ब्रह्मसाम भवति। अभीवर्त्तेन वै देवा इमान् लोकान् अभ्यवर्त्तन्त। यद् अभ्यवर्त्तन्त तद् अभीवर्त्तस्याभीवर्त्तत्वम्।

-जै० ब्रा०, २/३८०

अभीवर्त्तो ब्रह्मसाम भवति। अभीवर्त्तेन वै देवाः

स्वर्गं लोकमभ्यवर्त्तन्त यदभीवर्त्तो ब्रह्मसाम भवति स्वर्गस्य लोकस्याभिवृत्यै॥

-ता० ब्रा०, ४/३/१-२

अभीवर्त्तेन वै देवा असुरानभ्यवर्त्तन्त यदभीवर्त्तो ब्रह्मसाम भवति भ्रातृव्यस्याभिवृत्त्यै।

-ता० ब्रा०, ८/२/८

यद् अभ्यवर्त्तन्त तद् अभीवर्त्तस्याभीवर्त्तत्वम्। तद् यद् अत्राभीवर्त्तो भवति वज्रो वा अभीवर्त्तो वज्रेणैव तद् द्विषन्तं भ्रातृव्यं अभिवृत्योत्तिष्ठन्ति।

-जै० ब्रा०, ३/२९४

संवत्सरो हि सर्वाणि भूतान्यभिवर्तते।

-श० ब्रा०, ८/४/१/१५

अभि+✓वृतु-वर्तने।

## अभीशवः

अभीशवोऽभ्यश्नुवते कर्माणि। -निरु०, ३/९

अभि+✓अशूङ्-व्याप्तौ।

## अभ्यर्धयज्वन्

अभ्यर्धयज्वा। अभ्यर्धयन्यजति। -निरु०, ६/६

अभि+अर्ध+✓यज-देवपूजासङ्गतिकरणदानेषु।

## अभ्रं

अथ यद्यभ्रं स्यात्, एतद्वा अस्य तद् रूपं येन प्रजां बिभर्ति। -शां० ब्रा०, १८/४

अभ्रं वा अपां भस्म। अभ्रे तां सादयति।

-श० ब्रा०, ७/५/२/४८

अप्+✓भृञ्-भरणे।

## अमतिः

अमतिरमामयी। मतिरात्ममयी। -निरु०, ६/१२

अ (नञ्) +✓मन-ज्ञाने, ✓अम-गत्यादिषु

## अमत्रः

अमत्रोऽमात्रो महान्भवति। अभ्यमितो वा।

-निरु०, ६/२३

अमत्रं पात्रम्। अमास्मिन्नदन्ति। -निरु०, ५/१

✓अम-गत्यादिषु, +✓अद्-भक्षणे।

## अमवान्

अमात्यवान्। अभ्यमनवान्। स्ववान् वा।

-निरु०, ६/१२

✓अम-गत्यादिषु।

## अमा

अमा अस्मिन्मदन्ति। अमा पुनरनिर्मितं भवति।

-निरु०, ५/१

✓अम-गत्यादिषु।

## अमावस्या

अहमेवास्म्यमावास्या३मामा वसन्ति सुकृतो मयीमे। -अथर्व०, ७/८३/२

तद् यदेष एतां रात्रिमिहामा वसति। तस्मादमावस्या नाम। -श० ब्रा० १/६/४/५

तं (चन्द्रमसं) देवा इन्द्रज्येष्ठाः सोमपाश्चासोमपाश्च यथा पितरं पितामहं वा वृद्धं प्रलयमुपगच्छमानं व्याधिगतं मरीष्यतीति वा तां रात्रिं वसन्ते। तदमावास्याया अमावास्यात्वम्। -ष० ब्रा०, ५/६/२

अमा+✓वस्-निवासे।

## अमिन्

अमिनोऽमितमात्रो महान्भवति। अभ्यमितो वा।

-निरु०, ६/१६

✓अम-गत्यादिषु, अ (नञ्) +✓मा-माने, अ (नञ्) +✓मीञ्-हिंसायां।

## अमूरः

अमूर अमूढः। -निरु०, ६/८

अ (नञ्)+✓मुह्-वैचित्ये, वैचित्यमविवेकः, अ (नञ्)+✓मूल-बन्धने।

**अमृतं**

एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः।। -यजु०, ३३/६०

अमृतं वै प्रणवः, अमृतैव तत् मृत्युं तरति। -गो० ब्रा०, २/३/११

अमृते अमरणधर्माणौ। -निरु०, २/२०

अ (नञ्)+✓मृङ्-प्राणत्यागे।

**अम्बुदः**

अम्बुदो मेघो भवत्यरणमंम्बु। तद्दः। अम्बुदो अम्बुमद्भातीति वा। अम्बुमद्भवतीति वा। -निरु०, ३/१०

✓अबि-शब्दे+✓दा-दाने।

**अम्यक्**

अमाक्तेति वा। अभ्यक्तेति वा। -निरु०, ६/१५

अभि+✓अञ्चु-गतिपूजनयोः।

**अयनं**

''किम् अयनम् इति......... आदित्य एवायनम् स हिलोकेष्व् एति........................ प्राण एवायनम् एहि अस्मिन् एति। -जै० ब्रा०, २/२९

अयनेनायस्। -जै० ब्रा०, २/३६५

✓अय-गतौ।

**अयास्यः**

अयमास्येऽन्तरिति। सोऽयास्यः। -बृहद् उप०, १/३/८

तेऽब्रुवन्नयं वा आस्य इति। यदब्रुवन्नय वा आस्य इति तस्मादयमास्य। अयमास्यो ह वै नामैषः। तमयास्य इति परोक्षमाचक्षते। -जै० उप० ब्रा०, २/३/२/७

स एष एवायास्यः। यद् आसेधति तस्मादयास्यः। यद्वेवास्ये रमते तस्मादु एवायास्यः। -जै० उप० ब्रा०, २/४/२/८

अयं+✓यसु-प्रयत्ने।

**अरः**

अराः प्रत्यृता नाभौ। -निरु०, ४/२७

✓ऋ-गतौ।

**अरणः**

अरणोऽपार्णो भवति। -निरु०, ३/२

✓ऋ-गतौ।

**अरणी**

अरणी प्रत्यृत एने अग्निः। समरणाज्जायत इति वा। -निरु०, ५/१०

✓ऋ-गतौ।

**अरण्यं**

अरण्यमपार्णम्। ग्रामादरमणं भवतीति वा। -निरु०, ९/२९

✓ऋ-गतौ, अ (नञ्)+✓रमु-क्रीडायां।

**अरण्यायनं**

अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्। अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके। तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थः। -छा० उप०, ८/५/३

✓ऋ-गतौ।

**अरिः**

अरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरेतस्मादेव। -निरु०, ५/७

✓ऋ-गतौ।

## अरिष्टं

त एतदरिष्टमपश्यंस्ततोऽयं देवानामघ्नत् संसोऽभवद्यमसुराणान्न ससमभवदनेन नारिषामेति तदरिष्टस्यारिष्टत्वमरिष्ट्या एवारिष्टमन्ततः क्रियते। -ता० ब्रा०, १२/५/२३

तासु अरिष्टं यज्ञस्यैवारिष्टयै। यद् ह वै किञ्च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तस्य ह वा एतद् अरिष्ट्यै। अरिष्टो ह वा एतेन यज्ञः। देवाः वा एतं द्वादशरात्रम् अतन्वत। तेषां तेषां यद् यद् अरिष्यत् तद् अरिष्टेनारिष्टं अकुर्वत। तद् अरिष्टस्य अरिष्टत्वम्। -जै० ब्रा०, ३/५५

अ (नञ्) ✓रिष-हिंसायाम्, ✓ऋ-गतिप्रापणयोः।

## अरिष्टिः

न काचन रिष्टिर्भवति अरिष्ट्यै। -शां० ब्रा०, ८/१, ८/३

न काचन रिष्टिर्भवति। -शां० ब्रा०, ९/५

अ (नञ्)+✓रिष-हिंसायाम्।

## अरुणः

अरुण आरोचनः। -निरु०, ५/२१

✓ऋ-गतौ।

## अरुषी

अरुषीरारोचनात्। -निरु०, १२/७

✓ऋ-गतिप्रापणयोः।

## अरुर्धातुकं

तस्मादाहुरिन्द्रो ब्रह्मेति यवमात्रं भवति यवमात्रं वै विषयस्य न हिनस्ति यदधस्तादभिधारयति तस्मादधस्तात् प्रक्षरणं प्रजा अरुर्न हिनस्ति यदुपरिष्टादभिधारयति तस्मादुपरिष्टात् प्रक्षरणं प्रजा अरुर्न हिनस्ति यदुभयतोऽभिधारयत्युभयतोऽभिधारि प्रजा अरुर्धातुकं स्याद्। -गो० ब्रा०, २/१/३

✓ऋ-गतौ हिसने च+✓डुधाञ्-धारणपोषणयोः।

## अर्कः

इन्द्रामिथगाथिनो बृहदिन्द्रमर्केभिरर्किणः। -ऋ०, १/७/१

अर्चन्त्यर्कमर्किणः। -ऋ०, १/१०/१

य उग्रा अर्कमानृचुः। -ऋ०, १/१९/४

अर्चन्त्यर्कं मदिरस्य पीतये। -ऋ०, १/१६६/७

जरितारो अभ्यर्चत्यर्कैः। -ऋ०, ६/२१/१०

वसिष्ठासो अभ्यर्चन्त्यर्कैं। -ऋ०, ७/२३/६, अथर्व०, २०/१२/६

अर्चन्तो अर्कं जनयन्त। -ऋ०, १/८५/२

अर्कमर्चन्तु कारवः। -ऋ०, ८/८०/१९, सा० पू०, २/२/२/४

सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय।। -यजु०, ३४/१६

अन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवान्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टवानः। -ता० ब्रा०, १५/३/२३

अभ्यर्चन्ति अर्कैरिति। अन्नं वा अर्कः। -गो० ब्रा०, २/४/२

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत्। -सा० पू०, ३/१/१/५

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केमिरर्किणः। -अथर्व०, २०/३८/४

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केमिरर्किणः। इन्द्रं वाणीरनूषतः। -अथर्व०, २०/७०/७

एतानि चत्वारि क्यानां क्यानि। एत एव चत्वारोऽर्काः, एते चत्वारोऽर्काणामर्काः। -श० ब्रा०, १०/३/४/४

तमर्कैरभ्यर्चन्ति वत्सम्। -तै० ब्रा०, २/८/८९

नैवेह किञ्चनाग्रऽआसीत् मृत्युनैवेदमावृतमासीत्। अशनाययाऽशनाया हि मृत्युस्तन्मनोऽकुरुत आत्मन्वी स्यामिति। सोऽर्चन्नचरत्। तस्यार्चत अपोऽजायन्त। अर्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वम्। कं ह वा अस्मै भवति य एवमेतदर्क्यस्यार्कत्वम्। -श० ब्रा०, १०/६/५/१

प्राणो वा अर्कः। तस्यान्नमेव कम्। अन्नं हि प्राणाय कम्। इति नु एवार्कस्य।

-श० ब्रा०, १०/६/२/७

प्रार्चन्ति तेऽर्कमर्किणः। -निरु०, ५/५

सोऽर्चन्नचरत् तस्यार्चत् आपोऽजायन्त, अर्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वम्। कं ह वा अस्मै भवति च एवमेतदर्कस्यार्कत्वं वेद।

-बृहद् उप०, १/२/१

अर्चनीयम् देवम्। अर्को देवो भवति, यदेनमर्चन्ति। -निरु०, ५/५

अर्को देवो भवति। यदेनमर्चन्ति, अर्को मन्त्रो भवति। यदनेनार्चन्ति। अर्कमन्नं भवति। यदर्चति भूतानि। अर्को वृक्षो भवति।

-निरु०, ५/५

अर्चन्त्यर्कमर्किणः।

-साम०, (१३४४), उ० ५/२/२३/१

अर्चन्त्यर्कं मरुतः स्वर्का।

-साम०, (४४५), पू० ५/२/१/९

गायत्रिणोऽर्चन्त्यर्कमर्किणः।

-सा०, (३४२), पू० ४/२/६/१

✓अर्क-स्तवने, ✓अर्च-पूजायां, ✓ऋच्-स्तुतौ।

## अर्क्यः

अर्चते वै मे कमभूदिति। तदेवार्क्यस्यार्कत्वम्। कं ह वा अस्मै भवति य एवमेतदर्क्यस्यार्कत्वं वेद। -श० ब्रा०, १०/६/५/१

✓अर्च-स्तुतौ पूजायाम् च।

## अर्थः

अर्थोऽर्तेः। अरणस्थो वा। -निरु०, १/१८

✓ऋ-गतिप्रापणयोः।

## अर्धं

अर्धं हरतेर्विपरीतात्। धारयतेर्वा स्यात्। उद्धृतं भवति ऋध्नोतेर्वा स्यात्। ऋद्धतमो विभागः।

-निरु०, ३/२०

✓हृञ्-हरणे, ✓धृञ्-धारणे ✓ऋध-वृद्धौ।

## अर्द्धर्चः

एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत। स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम्।

-ऐ० आ०, २/२/२

✓ऋध-वृद्धौ, ✓अर्च-पूजायां।

## अर्बुदः

अर्बुदो मेघो भवत्यरणम् अम्बु तद्दोऽम्बुदोऽम्बुमद्भातीति वाम्बुवद्भवतीति वा स यथा महान्बहुर्भवति वर्षस्तद्दिवार्बुदम्।

-निरु०, ३/१०



अम्बु+✓डुदाञ्-दाने, अरण+✓डुदाञ्-दाने, अम्बु+✓भा-दीप्तौ, अम्बु+✓भू-सत्तायां।

## अर्भकं

अर्भकमवहृतं भवति। -निरु०, ३/२०

✓ऋ-गतौ।



## अर्वन्

अर्वा ईरणवान्। -निरु०, १०/३१

यच्छ्वयदरुरासीत्। तस्मादर्वा नाम, इति।

-तै० ब्रा०, ३/९/२१

✓ऋ-गतिप्रापणयोः, ✓अर्व-गतौ।

## अलातृणः

अलातृणोऽलमातर्दनो मेघः। -निरु०, ६/३

अलम्+आ+✓तृदिर्-हिंसायां।

## अवका

अथ यदब्रुवन् अवाङ् नः कमगादिति ता अवाक्का अभवन्। अवाक्का ह वै ता अवका इत्याचक्षते परोऽक्षम्।

-श० ब्रा०, ९/१/२/२२

✓अव-रक्षणगतिक्रान्तिप्रीत्यादिषु।

## अवत्

अवतोऽवातितो महान्भवति। -निरु०, ५/२६
अव+✓अत्-सातत्यगमने, ✓अव-रक्षणादिषु।

## अवतान्

अवतानैः अवतनोति प्रीत्वाऽथैषामेतैरवता-नैर्धनूष्यवतनोति। -श० ब्रा०, ९/१/१/२७
अव+✓तनु-विस्तारे।

## अवतः

आवृतासोऽवतासः। -ऋ०, १/५५/८
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अवदानं

तदेनांस्तदवदयते। तस्माद् यत् किञ्चाग्नौ जुह्वति तदवदानं नाम। -श० ब्रा०, १/७/२/६
अव+✓दुदाञ्-दाने।

## अवधूतं

अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति।
-का० श्रौ० सू०, २/२
अव+✓धूञ्-कम्पने।

## अवनिः

अवनयोऽङ्गुल्यो भवन्ति। अवन्ति कर्माणि।
-निरु०, ३/९
अवनीरवाता व्रता रक्षन्ते। -ऋ०, १/६२/१०
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अवन्ती

अवन्नवन्तीरूप नो दुरश्चरानमीवो रुद्र जासु नो भव। -ऋ०, ७/४६/२
✓अव-रक्षणगतिकर्मन्तप्रीत्यादिषु।

## अवभृथः

तद् यदपोऽभ्यवहरन्ति तस्मादवभृथः।
-श० ब्रा०, ४/४/५/१
यो ह वा अयमपामावर्तः। सहावभृथः।
-श० ब्रा०, १२/९/२/४
अव+✓भृञ्-भरणे।

## अवसं

अवसं गावः पथादनम्, अवतेर्गत्यर्थस्यासौ नामकरणः। -निरु०, १/१७
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अवसाय

अवसाय अश्वान् इति स्यातिरुपसृष्टो विमोचने। तस्मादवगृह्णन्ति। -निरु०, १/१७
अव+✓षोऽअन्तःकर्मणि।

## अवारं

अवारमवरम्। -निरु०, २/२३
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अविः

इयं पृथिवी वाऽविरियं हीमाः सर्वाः प्रजा अवति।
-श० ब्रा०, ६/१/२/३३
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अविता

अभी षुणः सखीनामविता जरितृणाम्। शतम्भवास्युतिभिः॥ -यजु०, ३६/६
✓अव-रक्षणगतिकान्तिप्रीत्यादिषु।

## अविनाशिः

अविनाशि नाम देश काल वस्तु निमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशि।
-सर्व० सा० उप० १२
अ (नञ्)+वि+✓नश्-नाशे।

## अविवाक्यं

दशममहरविवाक्यं भवति मा श्रियोऽववादिष्मेति। दुःखवदं हि श्रेयसः। -ऐ० ब्रा० २४/३
अ (नञ्)+वि+✓वच्-कथने परिभाषणे वा।

## अव्ययं

अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत। -ऋ०, ९/६९/४

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्।

-गो० ब्रा०, १/१/२६, प्रणव उप०, १

अ (नञ्)+✓व्यय-गतौ।

## अशनायः

अशनापिपासे मे सोम्य! विजानीहीति। यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इति। एवं तदप आचक्षतेऽशनायेति।

-छा० उप०, ६/८/३

✓अश्-भोजने+✓णीञ्-प्रापणे, ✓अशूङ्-व्याप्तौ+✓णीञ्-प्रापणे।

## अशीतमः

अशिष्ठो ह्यग्निस्तस्मादाह अशीतम इति।

-श० ब्रा०, १/९/२/२०

✓अश-भोजने, ✓अशूङ्-व्याप्तौ।

## अशीतिः

अशीतिभिर्वै देवा इमान् लोकान् इमान् अध्वन आश्नुवत। तद् अशीतीनामशीतित्वम्।

-जै० ब्रा०, २/२४

द्वे ह वा अशीत्याव अहः चैव रात्रिः च। ताभ्यां एनं आशयन्ति। -जै० ब्रा०, २/१५

तद् वा अशीतिभिः सम्पन्न। आशयन्त्य् एवैनं एतेन। -जै० ब्रा०, २/१४

अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते।

-ऐ० आ०, २/१/२

✓अशूङ्-व्याप्तौसंघाते च, ✓अश-भोजने, अष्टानां दशतिः (संख्यावाची)।

## अश्मन्

अथ यदश्रु संक्षरितमासीत् सोऽश्मा पृश्निरभवत्। अश्रुर्ह वै तमश्मेत्याचक्ष ते परोऽक्षम्, परोऽक्षकामा हि देवाः। अथ यः कपाले रसो लिप्त आसीत् ते रश्मयोऽभवन्।

-श० ब्रा०, ६/१/२/३

अश्मचक्रमशनचक्रमसनचक्रमिति वा।

-निरु०, ५/२६

✓अशूङ्-व्याप्तौ संघाते च।

## अश्रौषं

अथ यच्छ्रोत्रेण श्रृणोति न तच्छ्रोत्रेणाऽऽह इत्यश्रौषम्।

-शां० ब्रा० २/१

अ (नञ्)+✓श्रु-श्रवणे।

## अश्मास्यं

अशनवन्तमास्यन्दनवन्तम्। -निरु०, १०/१३

✓अशूङ्-व्याप्तौ, ✓स्यन्दू+प्रस्रवणे।

## अश्लीलं

अश्लीलं पापकम्। अश्रिमत्। विषमम्।

-निरु०, ६/२३

अ (नञ्)+✓श्रिञ्-सेवायां, ✓ला-आदाने।

## अश्वः

प्रजापतेरक्ष्यश्वयत् तत्परापतत् ततोऽश्वः समभवत्तदश्वयत्त दश्वस्याश्वत्वन्देवाङश्वमिह नैव प्रत्त्यदधुरेष हवैप्रजापतिꣳसर्व्वङ्करोति योऽश्वमेधेन यजते सर्व्वऽएव भवति सर्व्वस्य वाऽएषा प्रायश्वित्तिः सर्वस्य भेषज ꣳ सर्व्वम्वाऽएतेन पाप्मा- नन्देवाऽअतरन्नपि वाऽएतेन ब्रह्महत्यामतरंस्तरति सर्व्वम्पाप्मानन्तरति ब्रह्महत्यां योऽश्वमेधेन यजते।

-श० ब्रा०, १३/३/१/१

प्रजापतेर् अक्ष्य् अश्वयत्। तत् परापतत्। तद् अपः प्राविशत्। ततोऽश्वस् समभवत्। यद् अश्वयत् तस्माद् अश्वः। -जै० ब्रा०, २/२६८

अत्योऽसीत्याह। तस्मादश्वः सर्वान् पशूनत्येति। तस्मादश्वः सर्वेषां पशूनां श्रेष्ठ्यं गच्छति।

-तै० ब्रा०, ३/८/९/१

अथ यदश्रु संक्षरितमासीत्। सोऽश्रुरभवत्। अश्रुर्हु वै तमश्वऽइत्याचक्षते।

-श० ब्रा०, ६/१/१/११

अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहन्त्याशवः।।

-साम० (२०१) पू०, १/१/३/५

अश्वः अश्नुतेऽध्वानम्। महाशनो भवतीति वा।

-निरु०, २/२८

अश्वमश्नुवानम्। -निरु०, ७/२०

अश्वः पशूनामाशुः। -तै० ब्रा०, ३/८/७/२

अश्वोऽध्वानं तरिष्टः। धावद्वतीः भवन्ति। तस्मात् अश्वोऽध्वानं धावन् समश्नुते। समप्य एकं पदं भवति। तस्माद् अश्व एकैकं पादं उदंकन् तिष्ठति। -जै० ब्रा०, २/२७२

अश्वो वोळहा सुखं रथम्। ऋ०, १/१६२/२

अर्वा जायतऽआशुरश्वः। -यजु०, २९/९

अश्वो वोळहा। सुखं वोळहा। रथं वोळहा।

-निरु०, ९/२

अश्वोस्यत्योसि मयोसि हयोसि वाज्यसि सप्तिरस्यर्व्वासि वृषासि। -ता० ब्रा०, १/७/१

आशुरश्वोऽजायत। -तै० ब्रा०, ३/८/१३/२

ततोऽश्वः समभवत् यदश्वयत्।

-श० ब्रा०, १०/६/५/७

तदश्वयत्। ततोऽऽवः समभवत् तद् यच्छ्वयथात् समभवत् तस्मादश्वो नाम।

-श० ब्रा०, ४/२/१/११

प्रजापतेरक्ष्यश्वयत्तत्परापत तदश्वोऽभवत् तदश्वस्याश्वत्वम्।

-तै० ब्रा०, १/१/५/४, ता० ब्रा० २१/८/२

प्राणा वै यशो वीर्यं, तत्प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत। तस्य शरीर एव मन आसीत्। सोऽकामयत मेध्यं म इदं स्याद्। आत्मन्वयनेन स्यामिति। ततोऽश्वः समभवद्।

-बृहद् उ०, १/२/६, ७

यत् प्रजापतिरालब्धोऽश्वोऽ भवत्। तस्मादश्वो नाम। -तै० ब्रा०, ३/९/२१/१

✓अशूङ्-व्याप्तौ, अति+✓इण्-गतौ, ✓अत+ सातत्यगमने, ✓टुओश्वि-गतिवृद्धयोः, ✓अश्-भोजने।

## अश्वत्थः

अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा सोऽश्वत्थ संवत्सरमतिष्ठत्। तदश्वत्थ-स्याश्वत्थत्वम्। -तै० ब्रा०, १/१/३/९

अ (नञ्)+श्वः+✓ष्ठा-गतिनिवृत्तौ।

## अश्वमेधः

ततोऽश्वः समभवद्यदश्वस्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्।

-श० ब्रा०, १०/६/५/४, बृहद० उप०, १/२/७

अश्व+✓मेधृ-सङ्गमे।

## अश्वयुज्

अश्वयुजोरयुञ्जत। -तै० ब्रा०, १/५/२/८

अश्व+✓युजिर्-योगे।

## अश्विनौ

आश्विनावश्वावत्येषा यातं शवीरया।

-ऋ०, १/३०/१७

इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनौ इमे हीदं सर्वमाश्नुवातां। -श० ब्रा०, ४/१/५/१६

तासामाश्विनौ प्रथमागामिनौ भवतः। अश्विनौ यदश्नुवाते सर्वम्। रसेनान्यः। ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। -निरु०, १२/१

✓अशूङ्-व्याप्तौ संघाते च।

## अषाढा

अषाढासि सहमाना सहस्वरातीः सहस्व पृतनायतः। — -यजु०, १३/२६

यन्नासहन्त तदषाढाः। -तै० ब्रा०, १/५/२/८

यदसहन्त तस्मादषाढाः।

-श० ब्रा०, ७/४/२/३३

अ (नञ्)+✓षह-मर्षणे।

## अष्ट

तान्यष्टाभिरवारुन्धताष्टाभिराश्नुवत यदष्टाभिर-वारुन्धता ष्टाभिराश्नुवत तदष्टानामष्टत्वम्। इति।

-ऐ० ब्रा०, ३/१

अष्टावश्नोतेः। -निरु०, ३/१०

✓अशूङ्-व्याप्तौ संघाते च।

## अष्टाक्षरा

यदष्टौ कृत्वोऽक्षरत् सैवाष्टाक्षरा गायत्र्यभवत्।

-श० ब्रा०, ६/१/३/६

अष्ट+✓अशूङ्-व्याप्तौ संघाते च।

## असक्रा

असक्राम् असंक्रमणीम्। -निरु०, ६/२८

अ (नञ्)+सम्+✓क्रमु-पादविक्षेपे।

## असपत्नाः

तद्यदेताभिरेतं लोकमसपत्नमनुपबाधंकुर्वत तस्मादेता असपत्नाः। -श० ब्रा०, ८/५/१/४

पाप्मा वै सपत्नः। तद् यदेताभि पाप्मानं सपत्नमपाहत् तस्मादेता असपत्नाः।

-श० ब्रा०, ८/५/१/६

अ (नञ्)+सपत्नाः।

## असामि

असामि सामिप्रतिषिद्धम्। सामिस्यतेः। असुसमाप्तम्। -निरु०, ६/२३

अ (नञ्)+✓षै-क्षये, अ (नञ्) +✓षोऽन्तः कर्मणि।

## असिक्नी

असितं ते प्रलयनमास्थानमसितं तव। असिक्न्यस्योषधे निरितो नाशया पृशत्।

-अथर्व०, १/२३/३

असिक्न्य शुक्लासिता। -निरु०, ९/२६

अ (नञ्)+✓षीञ्-बन्धने, अ (नञ्)+✓सित-श्वेतवर्णा।

## असितं

सितमिति वर्णनाम। तत्प्रतिषेधोऽसितम्।

-निरु० ९/२६

अ (नञ्)+✓षिञ्-बन्धने।

## असुः

तदाहुर्यदसुनेदं सर्वं जीवति कः साम्नोऽसुरिति। प्राण इति ब्रूयात्। प्राणो ह वाव साम्नोऽसुः।

-जै० उ० ब्रा०, १/१३/२/२

असुरिति प्राणनाम। अस्तः शरीरे भवति।

-निरु०, ३/८

असुरिति प्रज्ञानाम। अस्यत्यर्थान्। अस्ताश्चास्यामर्थाः।

-निरु०, १०/३४

✓अस-भुवि, ✓असु-क्षेपणे।

## असुरः

असुरसि प्रथमजा असुर्नामसुरुच्यतेऽसुरहमसुस्त्वं किमद्यासुरसुं करदसोरसुं प्रतीतन।

-का० सं०, ७/६०

असुरस्य माययेति। मनो वा असुरम्। तद्धयसुषु रमते। तस्यैष माययाक्तः।

-जै० उ० ब्रा०, ३/६/७/३

असुरा असुरताः। स्थानेष्वस्ताः। स्थानेभ्यः इति वा। अपिवासुरिति प्राण नाम। अस्तः शरीरे भवति। तेन तद्वन्तः। -निरु०, ३/८

तस्य वा असुरेवाजीवत् तेनासुनासुरानसृजत, तदसुराणामसुरत्वं स यस्तदसुराणामसुरत्वं वेदासुमान ह भवति। -मै० सं०, ४/२/१

तस्य (प्रजापतेः) असुरेवाजीवत् तेनासुनाऽसुरानसृजत, तदसुराणामसुरत्वम्।

-तै० ब्रा०, २/३/८/१,२

प्रजापतिरकामयत प्रजायेयेति। स तपोऽतप्यत।

तेनासुनाऽसुरानसृजत तदसुराणामसुरत्वम्। य एवमसुराणामसुरत्वं वेद, असुमानेव भवति। नैनमसुर्जहाति, इति।

-तै० ब्रा०, २/३/८/२

यदसूर्यं तदसुराणामसुरत्वम्।

-ष० ब्रा०, ५/१/१

प्रज्ञावत्वं वा। अनवत्वं वा। अपि वासुरिति प्रज्ञानाम्। अस्यत्यनर्थान्। अस्ताश्चास्यामर्थाः। असुरत्वमादिलुप्तम्। -निरु०, १०/३४

✓अस्-क्षेपणे, असु+✓रा-दाने, असु+✓रमु-क्रीडायां।

## असुनीतिः

असुनीतिः। असून्नयति। -निरु०, १०/३९

असुः+✓णीञ्-प्रापणे।

## असूर्त्तः

असुसमीरिताः सुसमीरिते वातसमीरिताः।

-निरु०, ६/१५

अ( नञ् )+✓सृ-गतौ।

## अस्कृधोयुः

अस्कृधोयुरकृध्वायुः। -निरु०, ६/३

अ (नञ्)+✓कृधु-ह्रस्वनाम।

## अस्ति

अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्।

-निरु०, १/२

✓अस-भुवि।

## अस्रीवयः

अथो यदेभ्यो लोकेभ्योऽन्नं स्रवति तदस्रीवयः।

-श० ब्रा०, ८/३/३/५

अ (नञ्)+✓स्रृ-गतौ।

## अहङ्कारः

अहङ्कारश्चाहं कर्तव्यम्।

-सुबाल० उप०, ६/२

अहंकारोऽध्यात्ममहं कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं योऽहंकारे योऽहंकर्तव्ये।

-सुबाल० उप०, ५/८

अहं+✓डुकृञ्-करणे।

## अहः

ते देवा अब्रुवन्, न हार्षीद् वा अयम् इति तद् अहर् अभवत्। -जै० ब्रा०, ३/३५७

यद् अहम् इति तान्य् अहान्य् अभवन्।

-जै० ब्रा०, ३/३८०

अहः उपाहरन्त्यस्मिन् कर्माणि।

-निरु०, २/२०

आ+✓हृञ्-हरणे।

## अहिः

गुहा हितं गुह्यं गुळहमप्स्वपीवृतं मायिनं क्षियन्तम्। उतो अपो द्यां तस्तभ्वांसमहन्नहिं शूर वीर्येण।

-ऋ०, २/११/५

आ यद्वज्रं बाह्वोरिन्द्र धत्से मदच्युतमहये हन्तवा उ। प्र पर्वता अनवन्त प्र गातवः प्र ब्रह्माणो अभिनक्षन्त इन्द्रम्। -ऋ०, ८/९६/५

त्वं सिन्धूँरवासृजोऽराचो अहन्नहिम् अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यंतं परि त्वाष्वाजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु।

-ऋ०, १०/१३३/२

अहिना गुप्ताः। अहिरयनात्। एत्यन्तरिक्षे। अयमपीतरोऽहिरेतस्मादेव। निर्ह्रसितोपसर्गः। आहन्तीति। -निरु० २/१७

आ+✓हन्-हिंसागत्योः, ✓अहि-गतौ, ✓अह-व्याप्तौ।

## अहीनं

अहीनानि ह वा एतान्यहानि। न ह्येषु किञ्चन हीयते पराञ्चि ह वा एतान्यभ्याहा न्यवर्तीनि भवन्ति।

-गो० ब्रा०, २/५/१५, ऐ० ब्रा०, २९/२

तेषां स्वर्गं लोकं यतां सोऽहीयत। अनृतं हि अब्रवीत्, स एष श्वित्रोऽभवत्। एते ह वा अहयो यच्छित्राः। यद् अहीयत तद् अहीनां अहित्वम्। -जै० ब्रा०, ३/७७

अ (नञ्)+✓हा-त्यागे।

## अह्रयाणः

अह्रयाणोऽह्रीतयानः। -निरु०, ५/१५

अ (नञ्)+✓ह्री-लज्जायां।

## आकाशः

अयमेवेदमग्र आकाश आसीत्। स उ एवाप्येतर्हि। स यः स आकाशः आदित्य एव सः। एतस्मिन् ह्युदिते सर्वमिदमाकाशते।

-जै० उ० ब्रा०, १/८/१/१२

आकाशमवकाशप्रदाने। -गर्भ० उप०-१

आ+✓काशृ-दीप्तौ।

## आक्षाणः

आक्षाण आश्नुवानः। -निरु०, ३/१०

✓अशूङ्-व्याप्तौ।

## आक्षारं

एभ्यो वै लोकेभ्यो रसोऽपाक्रामतं प्रजापतिराक्षारेणाक्षारयद्यदाक्षारयत्तदाक्षारस्याक्षारत्वं। -ता० ब्रा०, ११/५/१०

तस्माद्य पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यादाक्षारं ब्रह्मसाभ कुर्वीताऽऽत्यन्येवेन्द्रियं वीर्यं रसमाक्षारयति।

-ता० ब्रा० ११/५/११

आ+✓क्षर-सञ्चलने।

## आखण्डलं

आखण्डयितः। खण्डं खण्डयते।

-निरु०, ३/१०

आ+✓खड-खण्डने।

## आग्नीध्रः

अग्नीध्रे अग्रे ददाति। -गो० ब्रा०, २/३/१८

अग्नीर्वाऽएष निदानेन यदाग्नीध्रीः। तस्मात्तदग्नीध्रो ददाति।

-श० ब्रा०, ५/५/१/८

होत्रयाम् अग्निभूतम् इन्धानाः पुनन्त स्तुवन्तः शंसन्तोऽतिष्ठन् तद् आग्नीध्रोऽभवत् तदाग्नीध्रस्यग्नीध्रत्वम्। -गो० ब्रा०, १/२/१९

यदाग्नीध्रेऽधारयन्त तदाग्नीध्रस्याऽऽग्नीध्रत्वम्। इति। -ऐ० ब्रा०, १०/४

अग्नि+✓धृञ्-धारणे, अग्नि+✓ञिन्धी-दीप्तौ।

## आग्नेयं

आग्नेयम्। अग्निः सृष्टो नोददीप्यत् तं प्रजापतिरेतेन साम्नोपाधमत् स उद्दीप्यत्।

-ता० ब्रा०, १३/३/२२

✓अगि-गतौ।

## आग्रायणः

अत्र वै साऽग्रेऽवदत्। तद् यत्सात्राग्रेऽवदत्। तस्मादाग्रायणो नाम। -श० ब्रा०, ४/२/२/६

अथ यदाग्रायणो नाम यां वा अमूं वाचं यच्छति ग्रावाणम् आदायात्र वा अग्रे सा वाग्वदति स यदत्राग्रे सा वाग्वदति तस्माद् आग्रायणो नाम।

-श० ब्रा०, ५/२/२/४

अथ यस्मादाग्रयणो नाम। यां वाऽमूं ग्रावाणमाददानो वाचं यच्छत्यत्र वै साग्रेऽवदत्तद्यत्सात्रऽग्रेवदत्। तस्मादाग्रयणो नाम।

-श० ब्रा०, ४/२/२/६

स आग्रायणाग्रानग्रं ह्याग्रायण एति वा एष यज्ञमुखाद्य ऐन्द्रवायवाग्रेभ्यो ग्रहेभ्योऽन्याग्रान् ग्रहान्गृहणीते। -मै० सं०, ४/८/९

आङ्+अग्र+✓अय-गतौ।

## आग्लागृधाः

तं वा एतमाग्लाहतं सन्तमाग्लागृध इत्याचक्षते, परोक्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः। य एष ब्राह्मणो गायनो वा नर्तनो भवति तमाग्लागृधा इत्याचक्षते।

-गो० ब्रा०, १/२/२१

आ+✓ग्लै-हर्षक्षये क्लेमे च, आ+✓गृधु-अभि-कांक्षायां।

## आघारं

आसीनोऽन्यमाघारमाघारयति।

-तै० ब्रा०, ३/३/७/३, ३/३/८/११

वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति।

-तै० ब्रा०, ३/३/७/३

आ+✓घृ-क्षरणदीप्त्योः।

## आघृणिः

आघृणिरागतह्वणिः। -निरु०, ५/९

आ+✓घृणु-दीप्तौ।

## आङ्गिरसोवेदः

तानङ्गिरस ऋषीनाङ्गिरसांश्चार्षेयानभ्यश्राम्यदभ्यतपत्समतप्तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः सन्तप्तेभ्यो यान् मन्त्रानपश्यत्स आङ्गिरसो वेदोऽभवत्। -गो० ब्रा०, १/१/८

✓अगि-गतौ+✓विद्-ज्ञाने, अङ्गिरो गोत्रजातश्च।

## आङ्गिरस्

स एष एवाङ्गिरसः। अतो हीमान्यङ्गानि रसं लभन्ते। तस्मादङ्गिरसः। यद्वेवैषामङ्गानां रसः तस्माद्वेवाङ्गिरसः।

-जै० उ० ब्रा०, २/४/२/९

✓अगि-गतौ।

## आङ्गूषः

आङ्गूषः स्तोम आघोषः। -निरु०, ५/११

आङ्+✓घुषि-कान्तिकरणे ✓अगि-गतौ।

## आचार्यः

आचार्य आचारं ग्राहयति। आचिनोत्यर्थान्। आचिनोति बुद्धिमिति वा। -निरु०, १/४

आचिनोति हि शास्त्रार्थानाचारस्थापनादपि। स्वयमाचरते यस्तु तस्मादाचार्य उच्यते।

-अद्वय० उप०, ३

आङ्+✓चि-चयने, आङ्+✓चर-गतौ।

## आजिः

त्वया वयमर्य आजिं जयेम। -ऋ०, ४/२०/३

आजिं जयेम धन्वना तीव्राः समदो जयेम।

-यजु० २९/३९

अजैषं सर्वानाजीन् वः। -अथर्व०, २/१४/६

आजयनस्याजवनस्येति वा। -निरु०, ९/२३

✓अज्-गतिक्षेपणयोः, आ+✓जि-जये।

## आजिगं

आजिगं भवत्याजिजित्यायै।

-ता० ब्रा० १५/९/६

आजि+✓गम्-गमने।

## आजिज्ञासेन्या

आजिज्ञासेन्याः शंसत्याजिज्ञासेन्याभिर्वै देवा असुरानाज्ञायाथैनानत्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियं भ्रातृव्यमाज्ञायाथैन-मतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एव। इति।। -ऐ० ब्रा०, ३०/७

आजि+✓ज्ञा-ज्ञाने+सेन्या।

## आज्यं

वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति। तेजो वा आज्यम्। तेजो गायत्री। तेजसैवास्मै तेजोऽवरुन्धे।

-तै० ब्रा०, ३/९/४/६

आज्येन वै देवाः सर्वान् कामानाजयन् सर्वममृतत्वम्। -शां० ब्रा०, १४/१

तद् यद् इमान् लोकान् आजयंस् तद् आज्यानां आज्यत्वम्। यद् अब्रुवन् आजिं एषां अयामेति तद् एषां द्वितीयं आज्यत्वम्।

-जै० ब्रा०, १/१०५

प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत्तेऽन्योन्यस्मा अग्राय नातिष्ठन्त तानब्रवीदजिमस्मिन्नितेति त आजिमायन्य- दाजिमायं तदाज्यानामाज्यत्वम्।

-ता० ब्रा०, ७/२/१

✓अज्-गतिक्षेपणयोः, आ+✓जि-जये।

## आच्यादोहः

यदाच्या दुग्धे तदाच्यादोहानामाच्यादोहत्वम्।

-ता० ब्रा०, २१/२/५

आच्य+✓दुह-क्षरणे प्रपूरणे च।

## आज्यधूः

यद् अब्रवीद् अक्षरेणैवेदं सर्वं संनिधाय धुराधुरं आसजामेति तद् आज्यधुरां आज्यधूस्त्वम्।

-जै० ब्रा०, १/१०७

आज्य+✓धृञ्-कम्पने।

## आणिः

आणिररणात्। -निरु०, ६/३२

✓अण-शब्दार्थे।

## आतिथ्यं

अथ यस्मादातिथ्यं नाम। अतिथिर्वाऽएष एतस्यागच्छति यत् सोमः क्रीतः।

-श० ब्रा०, ३/४/१/२

सोमो वै राजा यजमानस्य गृहानागच्छति तस्मा एतद्धविरातिथ्यं निरुप्यते। तदातिथ्य- स्याऽऽतिथ्यत्वम्।इति।। -ऐ० ब्रा०, ३/४

✓अत्-सातत्यगमने, ✓इण-गतौ।

## आतीषादीयं

आतिषादीयं भवति।। आयुर्वा आतीषादीय- मायुषोऽवरुध्यै। -ता० ब्रा०, १२/११/१५, १६

यद् अब्रुवन् एति वै साद इति, तद् एतीषा- दीयस्येतीषादीयत्वं। त उ स्वर्गं लोकं गत्वाब्रुवन् आत इव बत स्वर्गे लोके सदामेति। तद् व एवातीषादीयस्यातीषादीयम्।

-जै० ब्रा०, ३/७९

✓इण्-गतौ+✓षद्लृ-विशरणगत्यवसादनेषु।

## आत्मा

अथ कस्मादुच्यते आत्मेति। यस्मात् सर्वमाप्नोति सर्वमादत्ते सर्वमत्ति च तस्मादुच्यते आत्मेति।

-शाण्डि० उप०, ३/१

आत्मा अततेर्वा। आप्तेर्वा। अपि वाप्त इव स्यात्। यावद् व्याप्तिभूत इति। -निरु०, ३/१५

✓अत्-सातत्यगमने, ✓आप्लृ-व्याप्तौ।

## आत्मसनिः

स्वस्तय आत्मसनि इति। आत्मानमेव सनोति।

-श० ब्रा०, १२/८/१/२२

आत्म+✓षण-सम्भक्तौ।

## आत्मसंस्कृतिः

आत्मसंस्कृतिर्वाव शिल्पानिच्छन्दो मयं वा एतैर्यजमान आत्मानं संस्कुरुते। इति।

-ऐ० ब्रा०, ३०/१

आत्म+सं+✓कृञ्-करणे।

## आत्म्यः

यदात्मभ्योऽजायन्त तदात्म्या नामात्म्यत्वम्।

-तै० ब्रा०, ३/२/८/११

✓अत्-सातत्यगमने, ✓आप्लृ-व्याप्तौ।

## आथर्वणं

अथर्वाणो वा एतल्लोककामः सामापश्यथ्ँस्ते- नामर्त्यं लोकमपश्यन्। -ता० ब्रा०, ८/२/६

यद् व अथर्वाणोऽपश्यन् तस्मात् चतुर्णिधानं आथर्वणं इत्याख्यायते। -जै० ब्रा०, ३/६६

अ (नञ्)+✓थर्व-हिंसायां-अथर्वन्, तस्यापत्यभावे-आथर्वणः।

## आदाशः

आदीर्येव बत म एष रसोऽस्रौषीदिति। तस्मादादाशः। -श० ब्रा०, १४/१/२/१२

आ+✓दृ-विदारणे।

## आदिः

आदिं वयोभ्यः। तस्मात् तान्याददानान्यूपापपात-मिवचरन्ति। -जै० उ० ब्रा०, १/३/१/८

इम एव लोका आदिः। तेषु हीदं लोकेषु सर्वमाहितम्। -जै० उ० ब्रा०, १/५/१/२

आ+✓डुदाञ्-दाने, आ+✓डुधाञ्-धारण-पोषणयोः।

## आदित्यः

अथ यत् तृतीयमदीदेदिव त आदित्या अभवन्। -ऐ० ब्रा०, १३/१०

अदितिर्वै प्रजाकामौदनमपन्तत उच्छिष्टमश्नात्सा गर्भमधत्त, तत आदित्या अजायन्त। -गो० ब्रा०, १/२/१५

उद्यन्नेव वीर्यं क्षत्रमादत्त। तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्त। -श० ब्रा०, २/१/२/१८

कतम् आदित्या इति। द्वादश मासाः संवत्सर इति होवाच। एत आदित्याः। एते हीदं सर्वं आददाना यन्ति। तस्मादादित्या इति। -जै० ब्रा०, २/७७

तम् आददानम् आदितादितेति वाचोऽवदन्। तद् आदित्यस्यादित्वम्। -जै० ब्रा० ३/३५६

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्याः। एते हीदं सर्वमाददाना यन्ति ते यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति। -बृहद् उप०, ३/९/५

कतम आदित्या इति द्वादशमासाः संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति तस्माद् आदित्या इति। -श० ब्रा०, ११/६/३/८

तदादित्यानां। प्राणा वा आदित्याः। प्राणा हीदं सर्वमाददते। -जै० उ० ब्रा०, ४/२/९

तद्यदादन्त, तस्मादादित्यः। -श० ब्रा०, ११/८/३/११

तद् यद् एतेषां भूतानामादत्त तद् आदित्यस्य आदित्यत्वम्। -जै० ब्रा०, २/२६

तद् यद् एतेषां भूतानां आदत्त तद् आदित्यस्यादित्यत्वम्। -जै० ब्रा०, ३/३५८

तं यदस्या (अदितेः) अध्यजनयन् तस्मादादित्यः। -तै० ब्रा०, १/५/१०/१

तानि ह वा एतानि क्षत्राणि नानेव तेपुर्यथासौ वा सूर्यः चन्द्रमा वा तेषां ह उद्यन्नेवादित्यः क्षत्रं वीर्यं तेजः प्रलुलोप तद् वेषाम् आददे। -श० ब्रा०, १/१/२/१२

तेषां (नक्षत्रम्) एष उद्यन्नेव वीर्ये क्षत्रमादन्त तस्माद् आदित्यो नाम। -श० ब्रा०, २/१/२/१८

दानादादित्यः। -मै० उ०, ५/७

प्राणा वावादित्याः। एते हीदं सर्वमाददते। -छा० उप०, ३/१६/५

यदसुराणां लोकानादत्त। तस्मादादित्यो नाम। -तै० ब्रा०, ३/९/२१/२

यद् एतद् ओमित्यादत्ते। असौ वा आदित्य एतदक्षरम् स यदोमित्यादत्तेऽमुमेव एतदादित्यं मुख आधाते। -जै० ब्रा०, १/३२२

आदित्यः आदन्ते रसान्। आदत्ते भासं ज्योतिषाम्। आदीप्तो भासेति वा। अदितेः पुत्र इति वा। -निरु०, २/१३

आ+✓दीप्-दीपने, आङ्+✓दा-दाने, आ+✓दो-अवखण्डने।

## आदुरिः

आदुरिरादरणात्। -निरु०, ६/३१

आ +✓ दृ - विदारणे।

### आद्याक्षरं

तस्माद्यः पुरा पुण्यो भूत्वा पश्चात्पापीयान् स्यादाक्षारं ब्रह्मसाम कुर्वीतात्मन्येवेन्द्रियं वीर्यꣳ रसमाक्षारयति॥ -ता० ब्रा०, ११/५/११

### आर्ददानुः

एष ( वायुः ) ह्यार्दं ददाति।

-श० ब्रा०, ९/४/२/५

आर्द+✓डुदाञ्-दाने।

### आधवः

आधव आधवनात्। -निरु०, ६/२९

आ+✓धूञ्-कम्पने।

### आधीतयजुष्

पशवो हि यज्ञः। तेऽस्यैत आत्मन्पशव आधीता भवन्ति। तद्यस्यैता आत्मन्देवता अचीता भवन्ति। तस्मादाधीयजूंषि नाम।

-श० ब्रा०, ३/१/४/१४

आ+✓ध्यै-चिन्तायां+यजुष्, आ+✓धि-धारणे+ यजुष्।

### आनिर्हतः

नम आनिर्हतेभ्यः इति एते ह्येभ्यो लोकेभ्यो निर्हताः। -श० ब्रा०, ९/१/१/२३

आ+निस्+✓हन्-हिंसागत्योः।

### आनुषक्

आनुषगिति नामानुपूर्वस्यानुषक्तं भवति।

-निरु०, ६/१४

आ+अनु+✓सञ्ज-सङ्गे।

### आनूपं

आनूपं भवति॥ एतैन वै वध्र्यश्च आनूपः पशूनां भूमानमाश्नुत। पशूनां भूमानमश्नुत आनूचेन तुष्टुवानः।

-ता० ब्रा०, १३/३/१६-१७

यद् व अनूपो धीतोनिरपश्यत् तस्मात् आनुपम् इत्याख्यायते। -जै० ब्रा०, ३/९७

✓अञ्जू-व्यक्तिम्रक्षणकान्तिगतिषु, ✓अन-प्राणने।

### आन्धीगवं

अथेतदान्धीगवमन्धीगुर्व्वा एतत्पशुकामः सामापश्यन्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै मध्ये निधनमैऽम्भवति।

-ता० ब्रा०, ८/९/१२

यद् व अन्धीगुः शाक्त्योऽपश्यत् तस्मात् आन्धीगवमित्याख्यायते। -जै० ब्रा०, १/१६५

अन्धी+✓गुङ्-अव्यक्ते शब्दे।

### आपानः

आपान आप्नुवानः। -निरु०, ३/१०

✓आप्लृ-व्याप्तौ।

### आपालं

यद् व अपालात्रेय्यपश्यत् तस्मात् आपालं इत्याख्यायते। -जै० ब्रा०, १/२२१

आप+✓ला-आदाने।

### आपः

देवीरापोऽअपांनपात्। -यजु०, ६/२८

अद्भिर्वा इदं सर्वमाप्तम्। तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति तदेवास्यैतेन सर्वमाप्तं भवति।

-श० ब्रा०, १/१/१/१४-१५

अथाऽऽपोऽप्यायनादित्यो ब्रह्माह।

-मैत्रा० उप०, ६/७

आपो भूत्वा सर्वं आप्नोत्।

-जै० ब्रा०, १/५५, १/५६

तद्यदब्रवीदाभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किञ्चेति। तस्मादापोऽभवंस्तदमाप्त्वम्। आप्नोति वै स सर्वान्कामान्यान्कामयते।

गो० ब्रा०, १/१/२

यदाप्नोत् तस्मादापः। -श० ब्रा०, ६/१/१/९

यदु ह वा आपः पराचीरेव प्रसृताः स्यन्देरन् क्षीयेरंस्ताः। यदङ्कासि कुर्वाणा निवेष्टमाना आवर्तान् सृजमाना यन्ति क्षयादेव बिभ्यतीः तदेतद् वायोश्चैव अपां चानु वर्त्म गेयम्॥

-जै० उ० ब्रा०, १/१/२/७

यद्वेवापः प्रणयति। अद्भिर्वा इदं सर्वमाप्तम्। तत्प्रथमेनैवैतकर्मणा सर्वमाप्नोति।

-श० ब्रा०, १/१/१/१४

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामान्स्तृप्तिमान् भवति।

-छा० उप०, ७/१०/२

आप आप्नोतेः। -निरु०, ९/२६, १४/३४

✓आप्लृ-व्याप्तौ।

## आप्तिः

अर्वाङ् यज्ञः संक्रामत्वित्याप्तीर्जुहोति सुवर्गस्य लोकस्याप्त्यै, इति। -तै० ब्रा०, ३/८/१७

✓आप्लृ-व्याप्तौ।

## आप्त्यः

आप्त्या आप्नोतेः। -निरु०, ११/२०

✓आप्लृ-व्याप्तौ।

## आप्यः

अहमिदं सर्वमाप्स्यसि यदिदं किञ्चेति, तस्मादापो अभवंस्तदपामप्त्वमाप्नोति।

-गो० ब्रा०, १/१/२

आप्य आप्नोतेः। -निरु०, ६/१४

यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वम्।

-तै० ब्रा०, ३/२/८/११

✓आप्लृ-व्याप्तौ।

## आप्रियः

आप्रियः आप्नोतेः। प्रीणातेर्वा। आप्रीभिराप्रीणाति। इति च ब्राह्मणम्। -निरु०, ८/४

तमस्यैताभिराप्रीभिराप्रीणाति। तद्यदाप्रीणाति तस्मादाप्रियो नाम। -शां० ब्रा०, १०/३

✓आप्लृ-व्याप्तौ, आ+✓प्रीङ्-प्रीणने।

## आप्रीः

प्रैषेभिः प्रैषानानाप्नोत्याप्रीभिराप्रीर्यज्ञस्य।

-यजु०, १९/१९

आप्रीभिराप्रीणाति इति। -ऐ० ब्रा०, ६/४

आप्रीभिराप्नुवन्। तदाप्रीणामाप्रित्वम्।

-तै० ब्रा०, २/२/८/६

आप्रीराज्यं भवति। यत्र ह वै क्व चाप्रीर् आज्यं प्रजापतेः एव तत् प्रजापतिं एव तेना प्रीणन्ति। -जै० ब्रा०, २/१२

तद् यद् एनं (पशुम्) एताभिराप्रीभिराप्रीणात् तस्मादा प्रियो नाम। -श० ब्रा०, ११/८/३/५

तद् यदाप्यायन्ति तस्मादाप्रियो नाम।

-श० ब्रा०, ३/८/१/२

स एतान्याप्रिय आज्यान्यपश्यत्तैरात्मानमाप्रीणात् दुग्धा इव वा एष रिरिचानो यो दशभिर-हर्भिस्तुष्टुवानो यदेता न्याप्रिय आज्यानि भवन्त्यात्मानमेवैतैराप्रीणाति।

-ता० ब्रा०, १५/८/२

स एतान्याप्रियः आज्यान्य पश्सत्तैरात्मानमा-प्रीणाद्। -ता० ब्रा०, १६/५/२३

स एतान्याप्रीर् आज्यान्यपश्यत् तैर् आत्मानं आप्रीणीतायातयामतायै। -जै० ब्रा०, ३/२८२

✓आप्लृ-व्याप्तौ, आ+✓प्रीङ्-प्रीणने, आ+✓प्रीञ्-तर्पणे।

## आभीकं

अङ्गिरसस्तपस्तेपानाः शुचमशोचथंस्त एतत्सामा- पश्यथंस्तानभीकेऽभ्यवर्षत्तेन शुचमशमयन्त यदभीकेभ्यवर्षत्तस्मादाभीकम्।

-ता० ब्रा०, १५/९/९

आभीकं भवत्यभिक्रान्त्यै।

-ता० ब्रा०, १५/९/८

ततो वै तान् अभीकं शिवं आप उषास्पृशन्। तद् आभीकस्याभीकत्वम्।

-जै० ब्रा०, ३/२८४

अभि+✓क्रमु-पादविक्षेपे।

## आभीशवं

तेऽब्रुवन् स्वर्गं लोकं गत्वा अभीषू वाव न इमे सामनी यज्ञस्याभूतां इति। तद् एवाभीशवयोः आभीशवत्वम्। यद् व् अभीशुः श्यावाश्विर् अपश्यत्, तस्मात् आभिषवे इत्याख्यायेते।

-जै० ब्रा०, ३/६८

अभि+✓इषु-इच्छायां।

## आभूः

आ मे गृहा भवन्त्वित्याभूर्जहोति सुवर्गस्य लोकस्याऽऽभूत्यै, इति।

-तै० ब्रा०, ३/८/१७/३

आ+✓भू-सत्तायां।

## आभूतिः

आभूतिरिति कारीरादयः। प्राणं वा अनु प्रजाः पशव आभवन्ति। स य एवमेतं आभूतिरित्युपास्ते एवे प्राणेन प्रजया पशुर्भवति।।

-जै० उ० ब्रा०, २/२/२/३

आ+✓भू-सत्तायां।

## आमहीयवं

ता यद् एनं प्रजाः सुहिता अशिता आमहीयन्त तद् आमहीयवस्यामहीयवत्वम्। एनं भार्यास् सुहितास् सुहितं महीयन्ते य एवं वेद।

-जै० ब्रा०, १/११७

यदमहीयन्त तस्मादामहीयवम्।

-ता० ब्रा०, ७/५/१

स यद् आमहीयमाना अपश्यत् तद् आमहीयवस्यामहीयवत्वम्। यद् व एवैना वशे कृत्वामहीयत तद् व एवामहीयवस्या-महीयवत्वम्। आ स्वान् वशे कृत्वा महीयते य एवं वेद। -जै० ब्रा०, १/११८

आ+✓महीङ्-पूजायां।

## आयास्यं

एतमु एवाऽयास्यं मन्यन्ते। आस्याद्यदयते।

-छा० उप०, १/२/१२

आयास्यो वा आंङि्गरस आदित्यानां दीक्षितानामन्नमाश्नात् साव्यभ्रंशतासएतान्वा-यस्यान्पश्यत्तैरात्मानं समश्रीणाद्विभृष्टमिव।

-ता० ब्रा०, १४/३/२२

यद् व् अयास्योऽपश्यत् तस्मात् आयास्यं इत्याख्यायते। -जै० ब्रा०, ३/१८८

✓अय-गतौ, अयः-हिरण्यनाम।

## आयुः

आयुमायवे देवा अकृण्वन्। -ऋ०, १/३१/११

अथैष आयुः। आयुषा वै देवा असुरानायुवतायुते भ्रातृव्यं य एवं वेद। -ता० ब्रा०, १६/३/१-२

ता आयुषैवायुवत। यद् आयुषैवायुवत तद् आयुष आयुष्ट्वम्। -जै० ब्रा०, २/४४२

अयनस्य मनुष्यस्य। ज्योतिषो वोदकस्य वा।

-निरु०, १०/४१

आयोरयनस्य (मनुष्यस्य) ज्योतिषो वोदकस्य वा। -निरु०, ११/४९

आयुश्च वायुरयनः। -निरु० ९/३

✓इण्-गतौ, आ+✓यु-मिश्रणामिश्रणयोः, ✓अय-गतौ।

## आयुधा

युधे यदिष्णान आयुधान्यृघायमाणो निरणाति शत्रून्। -ऋ०, १/६१/१३

आयुधामायोधनात्। -निरु०, १०/६

आ+✓युध्-संप्रहारे।

## आयुष्पा

आयुष्पा अग्नेऽस्यायुर्मे पाहीत्याह।

-तै० ब्रा०, ३/३/५

आयु+✓पा-रक्षणे।

## आरम्भणीयं

चतुर्विंशमेतदहरुपयन्त्यारम्भणीयमेतेन वै संवत्सरमारभन्त। एतेन स्तोमांश्च छन्दांसि चैनेन सर्वा देवता अनारब्धा वै तच्छन्दोऽनारब्धा सा देवता यदेतस्मिन्नहनि नारभन्ते तदारम्भणीयस्यारम्भणीयत्वम्।

-ऐ० ब्रा०, १७/६

तं चतुर्विंशेनाऽऽरभन्ते, तद् आरम्भणीस्याऽऽरम्भणीयत्वम्। -शां० ब्रा०, १९/३

वागारम्भणीयमहः यदारमते वागारम्भते वाचैव तदारमते। -गो० ब्रा०, १/५/४

वागेवारंभणीयमहः। वाचा ह्यारभन्ते। तद्यदारभन्ते। -श० ब्रा०, १२/२/४/१

वाग् एवारम्भणीयं अहः। वाचा हि सर्वस् संवत्सरस् सर्वे यज्ञक्रतवः आरब्धाः।

जै० ब्रा०, २/५७

आ+✓रभ-राभस्ये, आ+✓रमु-क्रीडायां।

## आर्जिकीया

आर्जीकीयां विपाडित्याहुः। ऋजीक प्रभवा वा। ऋजुगामिनी वा। -निरु०, ९/२६

✓ऋज-गतिस्थानार्जनोपार्जनेषु।

## आर्ष्टिषेणः

आर्ष्टिषेण ऋष्टिषेणस्य पुत्रः। इषितसेनस्येति वा। -निरु०, २/११

ऋष्टि-अस्त्रनाम+✓इण-गतौ।

## आर्तिः

तस्य हैतस्य नैव काचनार्तिरस्ति। य एवं वेद। य एवैनमुपवदति स अर्तिमार्छति। स य एनमृच्छादेव ता देवता उपसृत्य ब्रूयात् अयं मा आरत् त इमामार्तिं न्येत्विति। ता हैवार्तिं न्येति।

-जै० उ० ब्रा०, २/४/३/४५

✓ऋ-गतौ।

## आर्त्नी

आर्त्नी अर्तन्यौ वा। अरण्यो वा। अरिषण्यौ वा।

-निरु०, ९/३९

✓ऋ-गतौ।

## आवर्त्तः

स एष ब्राह्मणावर्त्तः। स य एवमेतं ब्रह्मण आवर्त्त वेद अभ्येनं प्रजाः पशव आवर्त्तन्ते सर्वमायुरेति। -जै० उ० ब्रा०, ३/६/५/७

आङ्+✓वृतु-वर्तने।

## आवहः

आवह आवहनात्। -निरु०, ५/२६

आङ्+✓वह-प्रापणे।

## आविः

आविरावेदनात्। -निरु०, ८/१५

आङ्+✓अव-रक्षणादिषु।

## आर्षभं

ततो वै स ऋषभस् सर्वासां प्रजानां अभवद् ऋषभतां अगच्छत्। तद् एवार्षभस्यार्षभत्वम्।

-जै० ब्रा०, १/२२२

✓ऋ-गतिप्रापणयोः

## आर्षेयं

ऋषिभ्यश्चैवनमैतद्देवेभ्यश्च निवेदयत्ययं

महावीर्यो यो यज्ञं प्रापादेति तस्मादार्षेण प्रवृणीते।
-श० ब्रा०, १/४/२/३, १/५/१/९
✓ऋ-गतिप्रापणयोः।

## आशयः

आशयदाशेतेः। -निरु०, २/१६
आङ्+✓शीङ्-शये।

## आशा

आशा दिशो भवन्ति। आसदनात् आशा उपदिशो भवन्ति। अभ्यशनात्।
-निरु०, ६/१
आङ्+✓षद्-विशरणगत्यवसादनेषु, आङ्+✓अशूङ्-व्याप्तौ।

## आशीः

आशीराश्रयणाद्वा। आश्रपणाद्वा। अथेयमित-राशीराशास्तेः। -निरु०, ६/८
आङ्+✓शासु-इच्छायां, आ+✓श्रीञ्-मिश्रणे पाके च, आ +✓ शासु - अनुशिष्टौ।

## आशुः

अहर्वा एतदव्लीयत तद्देवा आशुनाभ्यधि न्वंस्तदाशोराशुत्वम्। -ता० ब्रा०, १४/९/१०
एष हि स्तोमानामाशिष्ठः। अथो वायुर्वा आशुस्त्रिवृत्। स एषु त्रिषु लोकेषु वर्तते। तद्यन्तमाह आशुरिति एष हि सर्वेषां भूतानामाशिष्ठः। -शं० ब्रा०, ८/४/१/९
ततो वै त आशु स्वर्गं लोकं आयन्। तद् एवाशोर् आशुत्वम्। -जै० ब्रा०, ३/२११
ते आशु स्वर्गं लोकं आयन्। तद् एवाशीः आशुत्वम्। -जै० ब्रा०, ३/२११
✓अशूङ्-व्याप्तौ, ✓अश्-भोजने।

## आशुशुक्षणिः

आशुरिति च शु इति च क्षिप्रनामनी भवतः क्षणिरुत्तरः क्षणोतेराशु शुचा क्षणोतीति वा सनोतीति वा शुक् शोचतेः पञ्चम्यर्थे वा प्रथमा तथाहि वाक्यसंयोग आ इत्याकार उपसर्गः पुरस्ताच्चिकीर्षितज उत्तर आशु शोचयिषुरिति।
-निरु०, ६/१
आशु+✓शुच्-शोके दीप्तौ च+✓क्षणु-हिंसायां।

## आश्वं

यद् अश्वस् सामुद्रिर् अपश्यत् तस्माद् आश्वम् इत्य् आख्यायते। -जै० ब्रा०, ३/१४
अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमाश्नात्तꣳशुगाच्छंत् स तपोऽतप्यत स एते आयास्ये अपश्यत्ताभ्याꣳशुचमपाहताऽप शुचꣳहत आयास्याभ्यां तुष्टुवानः।
-ता० ब्रा०, ११/८/१०
अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत्प्रजायते। बहुर्भवत्याश्वेन तुष्टुवानः। -ता० ब्रा०, ११/३/५
यद् आश्वेनाश्वो भूत्वासृजत तद् आश्वस्याश्वत्वम्। -जै० ब्रा०, ३/१४
ततो वै ते (देवाः) स्वर्गं लोकं आश्नुवत्।
-जै० ब्रा० ३/२५८
✓अशूङ्-व्याप्तौ।

## आश्विनं

अश्विनौ यद्व्यश्नुवाते सर्वम्। रसेनान्यः। ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः।
-निरु०, १२/१
इमे हीदं सर्वमाश्नुवातां पुष्करस्रजाविति।
-श० ब्रा०, ४/१/५/१६
तदश्विना उदजयतामश्विनावाश्नुवातां यदश्विना उदजयतामश्विनावाश्नुवातां तस्मादेतदाश्विन- मित्याचक्षते। इति।
-ऐ० ब्रा०, १७/२

तेषामश्विनौ प्रथमावधावतान्तावन्वदन् सहनोऽस्त्विति तावब्रूतामस्मद्देवत्यमिदमुक्थ-मुच्याता इति तस्मादाश्विन मुच्यते।

-ता० ब्रा०, ९/१/३६

वाव् अश्विनाव् अश्वो अश्वीयां अत्यकुरुताम्। तौ देवा अब्रुवन् वारोऽयं वां अथ नः सहास्त्व् इति। तस्मात् नानादेवत्यास् स्तुवन्ति। अथाश्विनं इत्याख्यायते। -जै० ब्रा०, १/२१३

✓अशूङ्-व्याप्तौ।

## आसञ्जनं

आदित्य आसञ्जनम्। आदित्ये हीमे लोका दिग्भिरासक्ताः। -श० ब्रा०, ६/७/१/१७

चन्द्रमा आसञ्जनम्। चन्द्रमसि ह्यं सम्वत्सर ऋतुभिरासक्तः। -श० ब्रा०, ६/७/१/१९

आसञ्जनम्। अन्ने ह्यात्मा प्राणैरासक्तः।

-श० ब्रा०, ६/७/१/२१

आ+✓षञ्ज-सङ्गे।

## आसन्दी

इयं (पृथिवी) वा आसन्दी अस्यां हीदं सर्वमासन्नम्। -श० ब्रा०, ६/७/१/१२

आ+✓आस-उपवेशने, आ+✓षदलृ-विशरण-गत्यवसादनेषु।

## आसितं

आसितं भवति। असितो वा एतेन दैवलस्त्रयाणां लोकानाम् दृष्टिमपश्यत् त्रयाणां कामानामवरुध्या आसितं क्रियते।

-ता० ब्रा०, १४/११/१८, १९

आसितो दैवलोपश्यत तस्मादासितमित्याख्यायते।

-जै० ब्रा०, १/२०९

यद व् असितो दैवलोऽपश्यत्, तस्माद् आसितम् इत्य आख्यायते।। -जै० ब्रा०, ३/२७१

✓अस-भुवि, क्षेपणे च।

## आस्यं

अग्नेष्ट्वास्येन प्राश्नामि। -यजु०, २/११

आस्यमस्यतेः। आस्यन्दत एनदन्नमिति वा।

-निरु०, १/९

✓अश्-भोजने ✓अस्-क्षेपणे, आ+✓स्यन्द्-स्यन्दने।

## आहनः

अन्येन मदहनो गच्छ क्षिप्रम्। आहंसि इव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यात्। -निरु०, ५/२

आङ्✓हन्-हिंसागत्योः।

## आहावः

आहाव आह्वानात्। -निरु०, ५/२६

आङ्+✓ह्वेञ्-स्पर्द्धायां शब्दे च।

## आहुतिः

आहुतयो हूयन्ते। -जै० उ० ब्रा०, ४/८/१/५

अग्नावाहुतयो हूयन्ते। -निरु०, ५/७

आज्याहुतिं हुत्वाऽपरा जुहोति।

-पा० गृ० सू०, ३/२/२

आज्याहुतीर्जुहोतीति। -गो० ब्रा०, १/२/१५

आज्यभागौ हुत्वाऽऽज्याहुतीर्जुहुयात्।

-आ० गृ० सू०, ३/५/४

आहुतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीनामाहूतित्वम्।।इति।।

-ऐ० ब्रा०, १/२

आहुतिर्हूयते। -तै० ब्रा०, ३/९/११/४

आहुतयो हूयन्ते। -शां० ब्रा०, ७/४

आहुतिं जुहोति। -मैत्रा०, ३/४/५

आहुतिर्मेऽहौषीत्। -ऐ० ब्रा०, २५/९

आहुतिं आजुहवुः। -जै० ब्रा०, १/१२, १/१३

आहुतिं जुह्वति। -जै० ब्रा०, १/१२, १/१३

आहुतिं जुहोति। -जै० ब्रा०, १/१६/१/२१

आहुतिर् जुहोति। -जै० ब्रा०, १/१२६

उत बह्वीराहुतयो हूयन्ते। -मैत्र० १/८/९-१७

जुहुयाद्वा घृताहुतिम्। -का० स्मृ०, १८/१२

तदध्वर्युराहुतिं जुहोति। -शां० ब्रा०, ९/५

तद् यदाह्वयति तस्मादाहुतिर्नाम।
-श० ब्रा०, ११/२/२/६

तस्मिन् (अग्नौ) यत् किंच अभ्यादधाति आहितय एवास्य ताः आहितयो ह वै ता आहुतय इत्याचक्षते परोऽक्षम्।
-श० ब्रा०, १०/६/२/२

तेषां पुरस्ताद् चतस्र आज्याहुतीर्जुहुयात्।
-आ० गृ० सू०, १/४/३

द्विपदा हुत्वा। नान्यामुत्तरामाहुति जुहुयात्।
-तै० ब्रा०, ३/९/१२/३

न मन्त्रं पुनर्ब्रूयान्नाऽऽहुतिं जुहुयात्।
-शां० ब्रा०, २६/५

नेन वा अग्रऽग्ना आहुतिरहूयत्।
-मैत्रा०, १/८/१

प्रयाजेभिरनुयाजान्वषट्कारेभिराहुतीः।
-यजु०, १९/१९

प्रवृत्ताहुतीर्जुह्वति। -गो० ब्रा०, २/२/१७

यत् प्राचीराहुतयो हूयन्ते।
-मैत्रा०, ३/८/२४-२६

यदाहुतीर्न जुहुयात् आहुतीर्जुहोति।
-तै० ब्रा०, ३/९/१५/१

यामङ्गारेषु जुहोति सान्धाहुति।
-मैत्रा०, १/४/६०

विभ्राज आहुतिं जुहुयात्। -शां० ब्रा०, १८/५

विष्ट्वाऽऽज्याहुती जुहोति।
-पा० गृ० सू०, १/१३/२, २/१५/२, २/१७/८, ३/१/२

वैश्वानरो वावृधानोऽन्तर्यच्छतु मे मनो हृद्यन्तरममृतस्य केतुः स्वाहेत्याज्याहुतीर्जुहुयात्।
-आ० गृ० सू०, ३/६/९

षा वा अग्रेऽग्ना आहुतिरहूयत्।
-मैत्रा०, १/८/१

सव्यं जान्वाच्यदक्षिणाग्नावाज्याहुतीर्जुहुयादग्नये स्वाहा। -आ० गृ० सू०, ४/३/२५

हिंकाराय प्रभृतिभिरेकत्र पञ्चाशतमाहुतीर्जुहोति।
-मा० श्रौ० सू०, ९/२/२/३

अथ यद् 'ऋचं जपन्ति', यद् आहुतीर्जुह्वति।
-शां० ब्रा०, १८/६

अथ यत्प्रपदो जपति, यदाहुतीर्जुहोति।
-शां० ब्रा०, ११/१

अथाऽदोऽमुत्राऽस्वध्वर्यराहुति जुहोति।
-शां० ब्रा०, १२/१

अनुवषट् करोत्याहुतीनामेव शान्त्या आहुतीनां प्रतिष्ठित्यै। संसन्नेषु छन्दोगेषु प्रवृतहोमीये आहुतीर्जुहोति। -शां० ब्रा०, १८/६

उत्तरावतीराहुतीर्जुहुयात्। -शां० ब्रा०, २/२

यदाहुतीर्जुह्वति। -शां० ब्रा०, ५/९, ५/१०

स यत्राध्वर्युरौद्ग्रभणानि जुहोति तदुप यजमानः पञ्चाहुतीर्जुहुयात्। -शा० ब्रा०, ७/४

आङ्+√ हु-दानादानयोः, आङ् +√ह्वे-स्पर्द्धायां शब्दे च, आङ्+√धा-धारणपोषणयोः।

## इडः (इडा)

इडाभिरग्निरीड्यः। यजु० २१/१४

होता यक्षदिडाभिरिन्द्रमीडतम्। यजु० २८/३

होता यक्षदिडेन्यमीडितं वृत्तहन्तममिडाभिरीड्यम्।
-यजु० २८/२६

प्रजा वा इडः। यदा वै रेतः सिक्तं प्रजायते अथ तदीडितमिवान्नमिच्छमानं चरति।
-श० ब्रा०, १/५/४/३ष्ट

वर्षा वा इडः। इति हि वर्षा इडः यदिदं क्षुद्रं सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद् वर्षा ईडितमिवान्नमिच्छमानं चरति तस्माद्वर्षा इडः। -श० ब्रा०, १/५/३/११

√ईड्-स्तुतौ।

**इध्मः**

इध्मः प्रथमागामी भवति। इध्मः समिन्धनात्।
-निरु०, ८/४

इन्धे ह वा एतदध्वर्युरिध्मेनाग्निम् तस्मादिध्मो नाम। श० ब्रा०, १/३/५/१

✓ञिइन्धी-दीप्तौ।

**इनः**

इन इत्येतत् सनित ऐश्वर्येणेति वा। सनितमनेनैश्वर्यमिति वा। -निरु०, ३/११

✓ईश-ऐश्वर्ये।

**इन्दुः**

इन्दुरिन्धेः उनत्तेर्वा। -निरु०, १०/४१

✓इन्ध्-दीप्तौ, ✓उन्दी-क्लेदने।

**इन्द्रः**

इदमदर्शमिति तस्मादिदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते। -ऐ० आ०, २/४/३

इन्द्रो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव। परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।
-बृहद्० उप०, ४/२/२

इन्द्र इद्धर्योः। -ऋ०, १/७/२

इन्द्र इरां दृणातीति वा। इरां ददातीति वा। इरां दधातीति वा। इरां दारयत इति वा। इरां धारयत इति वा॥ इन्देव द्रवतीति वा। इन्दौ रमत इति वा। इन्धे भूतानीति वा॥ तद्यदेनं प्राणैः समैन्धंस्तदिदिन्द्रस्येन्द्रत्वम् इति विज्ञायते। इदं करणादित्याग्रायणः। इदं दर्शनादित्यौपमन्यवः। इन्दतेर्वैश्वर्यकर्मणः। इन्दञ्छत्रूणां दारयिता वा। द्रावयिता वा। आदरयिता च यज्वनाम्।
-निरु०, १०/८

इन्धो वै नामेषः। योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव।
-श० ब्रा०, १४/६/११/२, १४/३/९/२

कश्चनास्मिन् वा इदमिन्द्रियं प्रत्यस्थादिति। तदिन्द्रस्येन्द्रत्वम्। -तै० ब्रा०, २/२/१०/४

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः। -ऐ० उ०, १/३/१४

स एतमेव पुरुषं ब्रह्म तमपश्यदिदमदर्शमितीम्। तस्मादिन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण। -ऐत० आ०, २/४/३

स योऽयं मध्ये प्राणः। एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध। यदैन्द्ध तस्मादिन्धः इन्धो ह वै तमिन्द्र इत्याचक्षते परोऽक्षम्।
-श० ब्रा०, ६/१/१/२

इन्द्र त्वाऽयमर्क ईट्टे वसूनां।
-ऋ०, ७/२४/५

इन्द्रेण दस्युं दरयन्त इन्दुभिर्युतद्वेषसः समिषा रभेमहि। -ऋ०, १/५३/४, अथर्व, २०/२९/४

✓उन्द्-क्लेदने, ✓इन्ध्-दीप्तौ ✓इण्-स्तुतौ, ✓इदि-परमैश्वर्ये, इरा+✓दृ-विदारणे, इरा+✓दा-दाने, इरा+✓धा-धारणे, इन्दु+✓द्रु-गतौ, इन्दु+✓रमु-क्रीडायां, इदं+✓कृ( आग्रायण ), इदं+✓दृश् ( औपमन्यव )।

**इन्द्रस्तुरीयं**

देवासुरासंयत्ताआसन्। ते देवा अग्निमब्रुवन् त्वयावीरेणासुरानभिभवामेति। सोऽब्रवीत्। मेधाऽहमस्मान् विकिरिष्यै इति। समेधाऽत्मानं व्यकुरुत। अग्निं तृतीयम् रुद्रं तृतीयम्। वरुणं तृतीयम्। सोऽब्रवीत्। क इदं तुरीयमिति। अहमितिरिन्द्रोऽब्रवीत्। संतुसृजामह्वा इति तौ समसृजेताम्। स इन्द्रस्तुरीयमभवत्। यदीन्द्रस्तुरीयमभवत् इन्द्रस्तुरीयस्येन्द्रस्तुरीयत्वम्।
-तै० ब्रा०, १/७/१/२-३

इन्द्रः+तुरीयः ( चतुर्थः )।

**इन्द्रशत्रुः**

इन्द्रोऽस्य शमयिता वा शातयिता वा। तस्मादिन्द्र शत्रुः। -निरु०, २/१६

इन्द्र+✓शद्लृ-शातने।

**इभः**

इराभृता गणेन गतभयेन। हस्तिनेति वा।
-निरु०, ६/१२

इरा+✓भृ-भरणे, इ+✓भी-भये।

**इमथा**

इम इवेति। -निरु०, ३/१६

इदं > इम+था (प्रत्ययः) > इव।

**इरिणं**

इरिणं निर्ऋणम्। ऋणातेः। अपार्णं। अपरता अस्मादोषधय इति वा। -निरु०, ९/८

✓ऋ-गतौ।

**इषः**

पूर्वीरिष इषयन्तावति क्षपः। -ऋ०, ८/२६/३

✓इषु-इच्छायां, ✓इष-गतौ।

**इषितः**

इषितः प्रेषितः इति वाधीष्ट इति वा।
-निरु०, ८/८

✓इषु-इच्छायां, ✓इष-गतौ।

**इषिरः**

ईषणेन वैषणेन वार्षणेन वा। -निरु०, ४/७

✓इषु-इच्छायां, ✓इष-गतौ, ✓ऋष-गतौ।

**इषीका**

इषीकेषतेर्गतिकर्मणः। इयमपीतरेषीकैतस्मादेव।

✓इष-गतौ -निरु०, ९/१८

**इषुधिः**

इषुधिरिषूणां निधानम्। -निरु०, ९/१३

✓इषु-इच्छायां, ✓धा-धारणे।

**इषोवृधीयं**

इषे वै पञ्चममहर्वृधे षष्ठमवर्द्धन्त ह्येतर्हि यजमानमेवैतेन वर्द्धयन्ति।
-ता० ब्रा०, १३/९/९

तेनैना इषोवृधीय इत्य एवाभ्यमृशत्। ता अस्येषा समक्ता अर्वधन्त। तद् एवेषोवृधीयस्येषोवृधीयत्वम्। इषा हैवास्य समक्ता भार्या वर्धन्ते य एवं वेद। -जै० ब्रा०, ३/१४८

✓इषु-इच्छायां, ✓इष-गतौ+✓वृधु-वर्धने।

**इष्टका**

तद् यदिष्ट्वा पशुनाऽपश्यत्। तस्मादिष्टकाः।
-श० ब्रा०, ६/२/१/१०

तद् यदस्माऽइष्टे कमभवत्। तस्माद्वेवेष्टकाः।
-श० ब्रा०, ६/१/२/२३

तद् यदिष्टात्समभवन्। तस्मादिष्टकाः।
-श० ब्रा०, ६/१/२/२२

यच्चितिः। आहुतिर्वै यज्ञः, यदिष्ट्वाऽपश्यत्-तस्मादिष्टका। -श० ब्रा०, ६/८/१/२

यच्चेतयमाना अपश्यन् तस्माच्चितिः। आहुतिर्वै यज्ञः, यदिष्ट्वाऽपश्यत् तस्मादिष्टका।

✓इष्-इच्छायाम्, गतौ, आभीक्ष्ण्येच।

**इष्टं-वित्तं**

एषिषुरिव वा एतद्यज्ञम्, तमविदन्, तस्मादाह इष्टञ्चवित्तञ्चेति। -श० ब्रा०, १/९/१/२०

✓इषु-इच्छायाम्+✓विद्लृ (लाभे)।

**इष्टं**

अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते।
-छा० उप०, ८/५/१

✓इष्-गतौ, ✓यज-देवपूजासङ्गतिकरणदानेषु।

**इष्टिः**

एष्टयो ह वै नाम ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः।
-तै० ब्रा०, १/५/९/२

तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। -तै० ब्रा०, ३/१२/१/१, ३/१२/४/१

प्रजापतिरश्वमेधमसृजत। सोऽस्मात्सृष्टोपाक्रामत्। तं यज्ञक्रतुभिरन्वैच्छत्। तं यज्ञक्रतुभिर्नान्वविन्दत्। तमिष्टिभिरन्वैच्छत्। तमिष्टिभिरन्वविन्दत्। तदिष्टीनामिष्टित्वम्। यत्संवत्सरमिष्टिभिर्यजते। अश्वमेव तदन्विच्छति, इति।

-तै० ब्रा०, ३/६/१३/१

यज्ञो वै देवेभ्य उदक्रामन्तमिष्टिभिः प्रैषमैच्छन्यदिष्टिभिः प्रैषमैच्छंस्तदिष्टीनामिष्टित्वं तमन्वविन्दन्।इति॥ -ऐ० ब्रा०, १/२

✓इष्-गतौ इच्छायाम् वा,✓एष्-प्रयत्ने, ✓यज्-देवपूजासङ्गतिकरणदानेषु।

## इष्मिन्

ईषणिन इति वैषणिन इति वार्षणिन इति वा।

-निरु०, ४/१६

✓इष्-गतौ इच्छायां वा।

## ईक्षमाणः

ता अपः सृष्टवाऽन्वैक्षत्, तासू स्वां छायामपश्यत्, तामस्येक्षमाणस्य स्वयं रेतोऽस्कन्दन्तदप्सु प्रत्यतिष्ठत्। -गो० ब्रा०, १/१/३

✓ईक्ष-दर्शने।

## ईडेन्यः

होता यक्षदिडेन्यमीडितं वृत्रहन्त ममिडाभि-रीड्याम्। -यजु० २८/२६

वाग्वा ईडेन्या, वाग्धीदं सर्वमीट्टे। वाचेदं सर्वमीडितम्। -श० ब्रा०, १/४/३/५

✓ईड्-स्तुतौ।

## ईळः

ईळ ईट्टेः स्तुतिकर्मणः। इन्धतेर्वा। ईळितव्यः।

-निरु०, ८/७, ८

## ईमान्तः

ईर्मान्ताः समीरितान्ताः। (सुसमीरितान्ताः) पृथ्वन्ता वा। -निरु०, ४/१३

✓ऋ-गतौ।

## ईशानः

अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशत ईशानीभिर्जननीभिश्च शक्तिभिः।

-अथर्व० शि० उप०, ४

अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशत ईशानीभिर्जननीभिश्च परमशक्तिभिः।

-बटु० उप०, १

आदित्यो वा ईशानः। आदित्यो ह्यस्य सर्वस्येष्टे।

-श० ब्रा०, ६/१/३/१७

✓ईश्-ऐश्वर्ये।

## उक्थं

अस्मा इत्काव्यं वच उक्थमिन्द्राय शंस्यम्। तस्मा उ ब्रह्मवाहसे गिरो वर्धत्यत्रयो गिरः शुम्भन्त्यत्रयः।

-ऋ०, ५/३९/५

स गृणानो आदिर्देववानिति सुवन्धुर्नमसा सूक्तैः। वर्धदुक्थैर्वचोभिरा हि नूनं व्यध्वैति पयस उस्रियायाः। -ऋ०, १०/६/१/२६

अथोक्थस्य स्या अग्निर्वा उक् तस्याहुतयऽएव थम्। -श० ब्रा०, १०/६/२/९

आदित्यो वाऽउक्, तस्य चन्द्रमा एव थम्। चन्द्रमसा हि आदित्य उत्तिष्ठति।

-श० ब्रा०, १०/६/२/९

उक्थमिति बहवृचाः, एष हीदं सर्वमुत्थापयति।

-श० ब्रा०, १०/५/२/२०

उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयति। उद्धास्मादुक्थविद्वीरस्तिष्ठति, उक्थस्य सायुज्यं सलोकतां जयति च एवं वेद।

-बृहद् उ०, ५/१३/१

उक्थ्यं वक्तव्य प्रशंसम्। -निरु०, ११/३१

उक्थैरुदस्थापयन् तदुक्थानामुक्थत्वम्। य एवं वेद प्रत्येव तिष्ठति। सर्वमायुरेति, इति।

-तै० ब्रा०, २/२/८/७

एष अग्नि उ एवोक्तस्यैतदन्नं थं तदुक्थम्।

-श० ब्रा०, १०/४/१/२१, २२, २३

एष हीदं सर्वं उत्थापयतीव तस्माद् एष एवोक्थम्। -जै० ब्रा०, ३/३७९

तान् उक्थैः उत्थापति। तद् उक्थानां उक्थत्वम्। -जै० ब्रा०, २/२४

प्रजा वा उक्थानि, पशव उक्थानि। यदुक्थ्यो भवति अनुसंतत्यै। -तै० ब्रा०, १/८/७/२

प्राणो वाऽउक्। तस्यान्नमेवथम्। अन्नेन हि प्राणऽउत्तिष्ठति इति नु एवोक्थस्य। -श० ब्रा०, १०/६/२/१०

प्राणो वा उक्थम्। प्राणो हीदं सर्वमुत्थापयति। -श० ब्रा०, १४/५/१४/१

यद् उक्थैः प्रत्युदतिष्ठंस् तद् उक्थानां उक्थत्वम्। -जै० ब्रा०, १/१७९

उत+✓ष्ठा-गतिनिवृतौ, ✓वच्-कथने।

## उक्षन्

उक्षण उक्षतेर्वृद्धिकर्मणः। उक्षन्त्युदकेनेति वा। -निरु०, १२/९

✓उक्ष-सेचने।

## उखा

उद्वै देवा एतेन कर्मणैतयावृतेमांल्लोकानुदखनन्, यदुदखनन् तस्मादुत्खा। उत्खा ह वै तामुखेत्या-चक्षते परोऽक्षम्। -श० ब्रा० ६/७/१/२३

उत्+✓खनु-अवदारणे, ✓उख-गत्यर्थे।

## उचथं

तद्वां नरा नासत्यावनुष्याद्यद्वां मानास उचथमवोचन्। अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुम्। -ऋ०, १/१८२/८

एता ते अग्न उचथानि वेधोऽवोचाम कवये ता जुषस्व। उच्छोचस्व कृणुहि वस्या सो नो महो रायः पुरुवार प्र यन्धि। -ऋ०, ४/२/२०

✓वच-परिभाषणे, ✓उच-समवाये।

## उच्चं

उच्चैरुच्चितं भवति। -निरु०, ४/२४

उद्+✓चि-चयने।

## उत्करं

उत्करमुत्किरन्ति। -ऐ० ब्रा०, २६/३

उत्+✓कृ-विक्षेपे।

## उत्तरः

उद्धततरो भवति। -निरु०, २/११

यथा वै पुरुष एवं विषुवांस्तस्य यथा दक्षिणोऽर्ध एवं पूर्वोऽर्धोत्तरोऽर्धो विषुवतो यथोत्तरोऽर्ध एवमुत्तरोऽर्धो विषुवतस्तस्मादुत्तर इत्याचक्षते। -ऐ० ब्रा०, १८/८

स वा एष उत्तरोऽस्मात्सर्वस्माद् भूताद् भविष्यतः सर्वमेवेदमति रोचते यदिदं किंचोत्तरो भवति, इति। यस्मादुत्तरो बुभूषति तस्मादुत्तरो भवति य एवं वेद। -ऐ० ब्रा०, १८/४

उत्+✓तृ-प्लवनसंतरणयोः।

## उत्तानः

उत्तान उत्ततानः। ऊर्ध्वतानो वा। -निरु०, ४/२

उद्+✓तनु-विस्तारे।

## उत्तुदः

उत्तुदस्त्वोत् तुदतु। -अथर्व०, ३/२५/१

उत्+✓तुद्-व्यथने।

## उत्थानं

अथ यत्ततो यज्ञस्योदृचं गत्वोतिष्ठन्ति तदुत्त्थानम्। -श० ब्रा०, ४/६/८/२

उत्+✓ष्ठा-गतिनिवृत्तौ।

## उत्सः

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः

सुविताय गन्तन। इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे।

-ऋ०, ५/५७/१

उत्स उत्सरणाद्वा। उत्सदनाद्वा। उत्स्यन्दनाद्वा। उनत्तेर्वा। -निरु०, १०/९

✓उन्दी-क्लेदने, उत+✓सृ-गतौ, उत्+✓स्यन्दू-प्रस्रवणे।

## उत्सेधः

उत्सेधेन वै देवा औत्सेध्यं उदसेदन्।

-जै० ब्रा०, २/१०३

उत्सेधनैवाऽस्मै पशुनुत्सिध्य।

-ता० ब्रा०, १९/७/४

उत्सेधो भवति। उत्सेधेन वै देवाः पशूनुदशेधेन्निषधेन पर्यगृह्णन्।

-ता० ब्रा० १५/१/१०-११

उत्+✓सिध-गतौ।

## उत्सेधनिषेधौ

उत्सेधनिषेधौ ब्रह्मसामनी भवत उत्सेधेनैवास्मै पशूनुत्सिध्य निषेधेन परिगृह्णाति।

-ता० ब्रा०, १५/९/११

उत्सेध+निर्+✓सिध-गतौ।

## उदकं

उदानिषुर्महीरिति तस्मादुदकमुच्यते।

-अथर्व०, ३/१३/४; मैत्रा०, २/१३/१०

एको देवो अप्यतिष्ठत् स्यन्दमाना उपेत्य। उदानिषुर्महीरिति तस्मादुदकमुच्यते।

-का० सं० ३९/१२

उदकम् उनत्तीति सतः। -निरु०, २/२४

✓उन्दी-क्लेदने।

## उदयनीयं

उदान एवोदयनीयोऽतिरात्र उदानेन ह्युद्यन्ति।

-गो० ब्रा०, १/५/४

यदत्रावभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम।

-श० ब्रा०, ४/५/१/२

उत्+✓अय-गतौ।

## उदानः

उदान उदयनीयः। -ऐ० ब्रा०, २/७

उदान एवोदयनीयोऽतिरात्रः। उदानेन ह्युद्यन्ति।

-श० ब्रा०, १२/२/४/१६

उदानो ह्यन्तर्यामः। अमुं ह्येव लोकमुदनन्नभ्युदनिति॥

-श० ब्रा०, ४/१/२/२७

तस्योदान एवोदयनीयोऽतिरात्र उदानेन ह्युद्यन्ति।

-गो० ब्रा०, १/५/४

देहस्योन्नयनादिकमुदान कर्म।

-शां० उप०, ४

उत्+✓अन-प्राणने।

## उदुम्बरः

उदुम्बरे वसत्यूर्गुदुम्बर ऊर्ज्जमेवावरुन्धे।

-ता० ब्रा०, १६/६/४, १८/२/१९

प्रजापतिर्देवेभ्य ऊर्ज्जं व्यभजन्तत उदुम्बरः समभवत्प्राजापत्यो वा उदुम्बरः।

-ता० ब्रा०, ६/४/१

प्रजापतिः प्रजाभ्यः ऊर्जं व्यभजत्। तद् उदुम्बरस् समभवत्। प्रजापतिः उद्गाता प्राजापत्य उदुम्बरः।

-जै० ब्रा०, १/७०

यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भरः। उदुम्भरो ह वै तमुदुम्बर इत्याचक्षते परोऽक्षम्।

-श० ब्रा०, ७/५/१/२२

उत्+✓भृञ्-भरणे।

## उद्गाता

अथ यद् उद्गातोद्गाति, प्राणमेव तद् व्याने दधाति। -शां० ब्रा०, १७/७

अथ यदुद्गातोद्गायति। -गो० ब्रा०, २/५/४

उदगासीन्म इत्युद्गात्रे। -ऐ० ब्रा०, २५/९

उद्+✓गा-स्तुतौ, उद्+✓गै-शब्दे।

## उद्गीथः

अथ खलु उद्गीथाक्षराण्युपासीतोद्गीथ इति। प्राण एवोत्प्राणेन ह्युतिष्ठति। वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदं सर्वं स्थितम्।
-छा० उप०, १/३/६

उद्गासीदश्वो मेध्य इत्याह। प्राजापत्यो वा अश्वः। प्रजापतिः उद्गीथः।
-तै० ब्रा०, ३/८/२२/३

एष उ वा उद्गीथः। प्राणो वा उत्। प्राणेन हीदं सर्वमुत्तब्धम्। वागेव गीथा। उच्च गीथा चेति। स उद्गीथः।।
-श० ब्रा०, १४/४/१/२५, बृहद्०, १/१/२५

एष उ वा उद्गीथः। प्राणो वा उत्प्राणेन हीदं सर्वमुतब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः। -बृहद्० उप०, १/३/२३

य एवासौ तपति तमुद्गीथमुपासीत यद्यन्वा एष प्रजाभ्यः उद्गायति, उद्यस्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य, एवं वेद। -छान्दो० उप०, १/३/१

स एष इन्द्र उद्गीथः। स यदैव इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातृणां च विज्ञायते। इत एवोर्ध्वः स्वर उदेति। स उपरि मूर्ध्नो लोलायति।। -जै० उ० ब्रा०, ३/६/९/६

स यद् उद् इत्येतेन हीदं सर्वं उत्तब्धम्। अथ यद् गीत्य एष हीदं सर्वं गिरति। अथ यत् थ इत्यन्नम् एवास्यैतत्। तस्मात् एष एवोद्गीथः।
-जै० ब्रा०, ३/३७९

उत्+✓गा-स्तुतौ, उत्+✓गै-शब्दे।

## उद्धत्

उद्धतोदायन्।
-ता० ब्रा०, १४/३/२०;, १४/९/४०

उत्+✓हन्-हिंसागत्योः।

## उद्धारं

उदस्मा उद्धारं हरन्ति य एवं वेद।
-ऐ० ब्रा०, १२/१०

उद्धारं वा एतमिन्द्र उदहरत। वृत्रं हत्त्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति। उद्धारमेव तं यजमानं उद्धरते। -तै० ब्रा०, १/६/७

उत्+✓हृञ्-हरणे।

## उद्भित्

अथैष एकत्रिकः प्रजापतेरुद्भित्। एतेन वै प्रजापति- रेषांल्लोकानामुदीभनत्।
-ता० ब्रा०, १६/१६/१-२

उत्+✓भिदिर्-विदारणे।

## उद्रिन्

उद्रिणं उदकवन्तम्। -निरु०, १०/१३

✓उन्दी-क्लेदने।

## उद्वत्

उद्वच्च शाम्मदं चेति। उद्वता वै देवा ऊर्ध्वा स्वर्गं लोकं उदक्रामन् यद् ऊर्ध्वा स्वर्गं लोकं उदकामंस् तद् उद्वत उद्वत्वम्।
-जै० ब्रा०, ३/१६४

उद्वतोत्पतन्ति। -जै० ब्रा०, ३/२६०

प्रवत उद्वतो निवत इति, अवतिर्गतिकर्मा।
-निरु, १०/२०

उत्+✓अव्-रक्षणगत्यादिषु।

## उद्वंशीयं

तद् ऊर्ध्वं उदश्रयद् यथा वंश एवं। तद् उद्वंशीयं अभवत्। तद् उद्वैशीयस्योद्वंशीयत्वम्।
-जै० ब्रा०, ३/१७२

यद् उद्वंशं इवाद्यत्यासुरान् अभ्यत्यक्रामंस् तद् उद्वंशीयं अभवत्। तद् उद्वंशीयस्योद्वंशीयत्वम्।
-जै० ब्रा०, १/१८९

उत्+वंशीयं।

## उद्वर्गः

वर्गोऽसि पात्मानं मे वृद्वृङ्धीत्येतयैवावृता मध्ये सन्तमुद्वर्गोऽसि उद्वृङ्धीत्येतयैवावृतास्तं यन्तं संवर्गोऽसि। -कौ० ब्रा० उप०, २/७

उत्+✓वृजी-वर्जने।

## उपगाता

अथो यथोपगातार उपगायन्ति। तादृगेव तत् इति। -तै० ब्रा०, ३/८/२२/३

उप+✓गै-शब्दे, उप+✓गा-स्तुतौ।

## उपजिह्विका

उपजिह्विका उपजिघ्र्यः। -निरु०, ३/२०

उप+✓लिह्-आस्वादने ( लकारस्य जत्वञ्च )।

## उपद्रवः

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्यारण्या अन्वायन्ताः। तस्मान्ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्ति।

-छा० उप०, २/९/७

उप+✓द्रु-गतौ।

## उपपृच्

उपपर्चनः। -निरु०, ६/१७

उप+✓पृची-सम्पर्के।

## उपयजः

अथ यद् यजन्तमुपयजति तस्मादुपयजो नाम। -श० ब्रा०, ३/८/४/१०

उप+✓यज्-देवपूजासङ्गतिकरणदानेषु।

## उपयमनी

अन्तरिक्षं वा उपयमनी। अन्तरिक्षेण हीदं सर्वमुपयतम्। अथो उदरं वा उपयमनी। उदरेण हीदं सर्वमन्नाद्यमुपयतम्। तस्मादाह।

-श० ब्रा०, १४/२/१/१७

उप+✓यमु-उपरमे, परिवेषणे च।

## उपयामः

इयं वा उपयामः। इयं वा इदमन्नाद्यमुपयच्छन्ति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्यः।

-श० ब्रा०, ४/१/२/८

उप+✓यमु-उपरमे परिवेषणे च।

## उपरः

उपर उपलो मेघो भवति। उपरमन्तेऽस्मिन्नभ्राणि। उपरता आप इति वा। -निरु०, २/२१

उप+✓रमु-क्रीडायां।

## उपलप्रक्षिणी

उपलप्रक्षिणी। उपलेषु प्रक्षिणाति। उपलप्रक्षेपिणी वा। -निरु०, ६/५

उपल+प्र✓क्षि-क्षये, उपल+प्र ✓क्षिप्-प्रेरणे।

## उपवसथः

तऽएतद्धविः प्रविशन्ति। तऽएतासु वसतीवरीषूपवसन्ति। स उपवसथः।

-श० ब्रा०, ३/९/२/७

ते विश्वेदेवा गृहानागच्छन्ति, ते गृहेषूपवसन्ति स उपसथः। -श० ब्रा०, १/१/१/७, २/१/४/१

उप+✓वस-निवासे।

## उपवासः

उप समीपे यो वासो जीवात्मपरमात्मनोः। उपवासो स विज्ञेयो न नु कायस्य शोषणम्।

-व० उप०, २/३९

उप+✓वस्-निवासे।

## उपवेषः

उपवेषोपविड्ढि नः। -तै० ब्रा०, ३/३/११/१

उपेव वा एनेनैतद्वेवेष्टि। तस्मादुपवेषो नाम।

-श० ब्रा०, १/२/१/३

उप+✓विष-विप्रयोगे।

## उपशदः

यद् व एवैषैकैका स्तोत्र्योपशीयते, तस्माद् उपशदः। -जै० ब्रा०, २/८१

उप+✓षद्लृ-विशरणगत्यवसादनेषु।

## उपसर्गः

महानाम्नीनामुपसर्गानुपसृजति। इति।

-ऐ० ब्रा०, १६/४

उप+✓सृज्-विसर्गे।

## उपसदः

तऽएताभिरुपसद्भिरुपासीदन्। तद्यदुपासीदंस्तस्मादुपसदो नाम। -श० ब्रा०, ३/४/४/४

उप+✓षद्लृ-विशरणगत्यवसादनेषु।

## उपस्थः

उपस्थ उपस्थाने।

निरु०, ८/१५, ८/१८, ९/४०

उप+✓ष्ठा-गतिनिवृत्तौ।

## उपस्थानं

अथ प्रातरनशित्वा मुहूर्तं सभायामासित्वापि कामं पल्ययेत तदेव तस्योपस्थानम्। अथ यत्रैव भस्मोद्धतमुपनिगच्छेत् तदेव तस्योपस्थानम् एवमु हास्यैता देवता उपस्थिता भवन्ति।

-श० ब्रा०, २/३/२/५

यदेव सायं प्रातराहवनीयमुप च तिष्ठते, उप चास्ते तदेव तस्योपस्थानम्। अथ यदेव प्रतिपरेत्य गार्हपत्यम् आस्ते वा शेते वा तदेव तस्योपस्थानम्। अथ यत्रैव संव्रजन्नन्वा हार्यपचनमुपस्मरेत् तदेव तं मनसोपतिष्ठेत्, तदेव तस्योपस्थानम्। -श०ब्रा० २/३/२/४

उप+✓ष्ठा-गतिनिवृत्तौ, उप+✓आस उपवेशने च।

## उपहव्यः

इन्द्रोयतीन् सालावृकेभ्योः प्रायच्छत्तमश्लीलावागभ्य वदत् स प्राजापतिमुपाधावन्तस्मादुपहन्यं प्रायच्छत्तं विश्वे देवाउपाह्वयन्त तस्मादुपहव्यः।

ता० ब्रा०, १८/१/९

यद् उपाह्वयत तद् उपहव्यस्योपहव्यत्वम्।

जै० ब्रा०, २/१४८, २/१४९

स एतं यज्ञं अपश्यत्। तम् आहरत्। तेनायजत्। तस्मिन् देवान् उपाह्वयत्। जै० ब्रा०, २/१५०

उप+✓हु-दानादानयोः, उप+✓ह्वेञ्-स्पर्द्धायां शब्दे च।

## उपहूतः

यं वै श्रेष्ठ्युपह्वयते स उपहूतः

-शां० ब्रा० २८/६

उप+✓हु-दानादानयोः, उप+✓ह्वेञ्-स्पर्द्धायां शब्दे च।

## उपावीः

उप हि द्वितीयोऽवति। तस्मादाह उपावीरसीति।

-श० ब्रा०, ३/७/३/९

उप+✓अव-रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवण स्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादान भागवृद्धिषु।

## उरः

उरुरभवत्। उदुरस उरस्त्वम्।

-जा० जप० ४/११/३/१

✓ऋ-गतौ, ✓उर्व-हिंसार्थः।

## उरणः

उरण उर्णावान्भवति। -निरु० ५/२

✓ऋ-गतौ।

## उराणः

उराण उरु कुर्वाणः। -निरु०, ६/१७

उरु+✓अन-प्राणने, उरु+✓णीञ्-प्रापणे।

### उरामथि:

उरामथि: उरणमथि:। -निरु०, ५/२१

उरा+✓मथि-हिंसासङ्क्लेशनयो:।

### उरु: ( उरू: )

उरू वरतमं अङ्गम्। -निरु०, ८/१०

✓ऊर्णु-आच्छादने।

### उरुष्य:

उरुष्यतिरकर्मक:। उरुष्यतीति रक्षाकर्मा। -निरु०, ५/२३

✓उरुस्-बलार्थे, उरू+✓षोऽन्त: कर्मणि।

### उर्वशी

उर्वश्यप्सरा। उर्वभ्यश्नुते। ऊरुभ्यामश्नुते उरुर्वा वशोऽस्या। -निरु०, ५/१३

उरु+✓वश-कान्तौ, उरु+ ✓अशूङ्-व्याप्तौ संघाते च।

### उर्वी:

उर्वी:। उर्व्य ऊर्णोते:। वृणोतेरित्यौर्णवाभ:। -निरु०, २/२६

✓उर्वी-हिंसार्थे, ✓ऊर्णुञ्-आच्छादने, ✓वृञ्-वरणे।

### उलूखलं

उरु मेऽकरदिति तस्मादुरूकरम्। उरूकरं ह वै तदुलूखलमित्याचक्षते। परोऽक्षम्। -श० ब्रा०, ७/५/१/२२

उलूखलमुरुकरं वा। ऊर्ध्वखं वा। ऊर्क्करं वा। -निरु०, ९/२०

उरु+✓डुकृञ्-करणे, ऊर्ज+✓डुकृञ्-करणे।

### उल्बं

उल्बमूर्णोते:। वृणोतेर्वा। -निरु, ६/३५

✓वृञ्-वरणे, ✓ऊर्णुञ्-आच्छादने।

### उशती:

उशतीरुशन्तम्। -ऋ०, १/७१/१

उशतीरुशन्त: -ऋ०, १०/३०/२

उशती उशन्त उरौसीदन्तु सुभगे उपस्थे। ऋ०, १०/७०/६

✓उषस्-प्रभातभावे, ✓वश-कान्तौ।

### उशन्

उशन्नुशत: -ऋ०, १०/१६/१२

उशन्नुशतीरेत्यच्छ। -ऋ०, १०/३०/६

यदीमुशन्तमुशतामनुक्रतुम्। -ऋ०, १०/११/३

✓वश-कान्तौ।

### उषा

एषो उषा अपूर्व्या व्युच्छति प्रिया दिव:। -ऋ०, १/४६/१

उषा उवास मनवेस्वर्वती। -ऋ०, १०/११/३

उषा वष्टे: कान्तिकर्मण:। उच्छतेरितरा माध्यमिका। -निरु०, १२/५

उच्छतीति सत्या:। रात्रेरपर: काल:। -निरु०, २/१८

✓उषस्-प्रभातभावे, ✓उष-दाहे, ✓वश-कान्तौ, ✓उच्छी-निवासे।

### उष्णिक्

उष्णिगुत्स्नानात् स्निह्यतेर्वा कान्तिकर्मणोऽपि वोष्णीषिणीत्यौपमिकम्। -दे० ब्रा०, ३४

उष्णिगुस्नाता भवति। स्निह्य तेर्वा स्यात्कान्तिकर्मण:। -निरु० ७/१२

उत्+✓स्ना-शौचे, उत्+✓ष्णिह-प्रीतौ, उत्+✓ष्णौ-वेष्टने।

### उष्णीषं

उष्णीषं स्नायते:। उष्णीषिणी वेत्यौपमिकम्। -निरु०, ७/१२

उत्+✓स्ना-शौचे।

उत्+✓ष्णिह-प्रीतौ।

### उस्त्रिया

उस्त्रियेति गोनाम, उत्स्त्रयाविणोऽस्यां भोगाः उस्त्रेति च। -निरु०, ४/११

उत्+✓स्त्रु-गतौ।

### ऊतिः

ऊतिरवनात्। -निरु०, ५/३

प्रावो विश्वाभिरूतिभिः सुदासम्। -ऋ०, ७/१९/३

सोमं यास्ते मयोभुव ऊतय सन्ति दाशुषे। ताभिर्नोऽविता भव॥ -ऋ०, १/९१/९

स्याम ते त इन्द्र ते य ऊती अवस्यव ऊर्ज वर्धयन्तः। -ऋ० २/११/१३

✓अव-रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवण-स्वाम्यर्थ याचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गन-हिंसादानभागवृद्धिषु।

### ऊधन्

ऊध उद्धततरं भवति। उपोन्नद्धमिति वा। स्नेहा-नुप्रदानसामान्याद्रात्रिरप्यूध उच्यते। -निरु०, ६/११

उद्+✓धृ-धारणे, उद्+✓हन्-हिंसने, ✓उन्दी-क्लेदने।

### ऊर्जं

ऊर्गस्यूर्जम्मयि धेहि। -ता० ब्रा०, १/६/१५

ऊर्गित्यन्ननाम। ऊर्जयतीति सतः। पक्वं सुप्रवृक्णमिति वा। -निरु०, ३/८

✓ऊर्ज-बलप्राणनयोः।

### ऊर्णा

ऊर्णा पुनर्वृणोतेरूर्णोतेर्वा। -निरु०, ८/२१

✓ऊर्णु-आच्छादने।

### ऊर्दरं

ऊर्दरं कृदरमित्यावपनस्य। उद्दीर्णं भवति, ऊर्जे दीर्णं वा। -निरु०, ३/२०

उद्+✓दृ-विदारणे।

### ऊर्ध्वं

उर्ध्वमुद्धृतं भवति। -निरु०, ८/१५

उद्+✓धृ-धारणे।

### ऊर्ध्वबुध्नः

ऊर्ध्वबन्धनः, ऊर्ध्वबोधनो वा। -निरु०, १२/३८

ऊर्ध्व+✓बुध-अवबोधने।

### ऊर्मिः

ऊर्मिरूर्णोतेः। -निरु०, ५/२३

✓ऋ-गतौ, ✓ऊर्णञ्-आच्छादने।

### ऊहब्रह्मन्

ओहब्रह्माण ऊहब्रह्माणः। ऊह एषां ब्रह्मेति वा। -निरु०, १३/१३

✓ऊह-वितर्के+✓बृह्-बृद्धौ।

### ऋक्

अथेमानि प्रजापतिर्ऋक्पदानि संचित्याभ्यर्चत्। यदभ्यर्चत् ता एवर्चोऽभवन्। -जै० उ० ब्रा०, १/४/१/६

"ऋचे त्वा" इतीह। प्राणो वा ऋक्। प्राणेन ह्यर्चति। -श० ब्रा०, ७/५/२/१२

एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक्तस्मादृगित्याचक्षत एतमेव सन्तम्। -ऐ० आ०, २/२/२

ऋगर्चनी। -निरु०, १/८

एषर्ग्भवति यदेनमर्चन्ति प्रत्यृचः सर्वाणि भूतानि। -निरु० १३/११

✓ऋक्-स्तुतौ, ✓अर्च-पूजायां।

### ऋक्वन्

प्र श्यावाश्व धृष्णुयार्चा मरुद्भिर्ऋक्वभिः। -ऋ०, ५/५२/१

✓ऋच्-स्तुतौ, ✓अर्च-पूजायां।

**ऋचः**

**ऋचः उदीर्णानीव ख्यायन्ते। -निरु०, ३/२०**
**✓ऋ-गतौ +✓ख्या-प्रकथने, ✓ऋष-स्तुतौ।**

**ऋक्षरः**

**ऋक्षरः कण्टक ऋच्क्षतेः। -निरु०, ९/३२**
**✓ऋच्छ्-गतौ, ✓ऋष-गतौ।**

**ऋग्मियं**

**ऋग्मियमृग्मन्तमिति वा। अर्चनीयमिति वा। पूजनीयमिति वा। -निरु०, ७/२६**
**✓अर्च-पूजायां, ✓ऋच-स्तुतौ।**

**ऋचीषमः**

**ऋचीषमः ऋचा समः। -निरु०, ६/२३**
**✓अर्च-पूजायां, ✓ऋच-स्तुतौ+समः।**

**ऋजीषिन्**

**ऋजीषो सोमः। यत्सोमस्य पूजयमानस्यातिरिच्यते तदृजीषमपार्जित भवति। तेनर्जीषी सोमः।**
**-निरु०, ५/१२**
**✓अर्ज्-अर्चने, ऋजि+✓ईष-गतिहिंसादर्शनेषु।**

**ऋतुः**

**उषः प्रारन्नृतूँरनु दिवो अन्तेश्यश्पपरि।**
**-ऋ०, १/४९/३**
**ऋतुरर्त्तेर्गतिकर्मणः। -निरु०, २/२५**
**✓ऋ-गतौ।**

**ऋतुप्रैषी**

**तदाहुः नर्त्तुप्रैषी प्रेष्येयुर्नर्त्तुप्रैषी वषट्कुर्युः, वाग्वा ऋतुप्रैषा, आप्यायते वै वाक् षष्ठेऽहनीति। यदृतुप्रैषी प्रेष्येयुः, यदृतुप्रैषी वषट्कुर्यः।**
**-गो० ब्रा०, २/६/१०**

**ऋतु+प्र+✓इष्-गतौ।**

**ऋत्विक्**

**ऋत्विक् ईरणः। ऋग्यष्टा भवतीति शाकपूणिः। ऋतुयाजी भवतीति वा। -निरु०, ३/१९**
**तद्यथायथमृत्विज ऋतुयाजान् यजन्त्यसम्प्रदायम्, तद्यदृतून् कल्पयति, यथायथं जनिता।**
**-गो० ब्रा०, २/६/१०**

**यद् ऋत्वियाद् अजनयत् तस्मात् ऋत्विज इत्याख्यायन्ते। -जै० ब्रा०, ३/१**
**स आत्मनि ऋत्वमपश्यत् तत ऋत्विजोऽसृत यदृत्वादसृजत तदृत्विजामृत्विकत्त्वम्।**
**-ता० ब्रा०, १०/३/१**

**ऋतु+✓यज्-देवपूजासङ्गतिकरणदानेषु।**

**ऋदूदरः**

**ऋदूदरः सोमः। मृदूदरः। मृदूदरेष्विति वा।**
**-निरु०, ६/४**
**ऋदु, मृदु+उदरः, ऋदु ✓अर्द-गतौ याचने च।**

**ऋदूपः**

**ऋतूपे अर्दनपातिनौ। गमनपातिनौ। शब्दपातिनौ दूरपातिनौ वा। मम्रण्यर्दनवेधिनौ। गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ वा। -निरु०, ६/३३**
**✓अर्द्-गतौयाचने+✓पा-रक्षणे।**

**ऋदूवृध्**

**मर्मण्यर्दनवेधिनौ। गमनवेधिनौ। शब्दवेधिनौ। दूरवेधिनौ वा। -निरु०, ६/३३**
**ऋद् (अर्द्)+✓वृध-(✓व्यध्)-ताडने।**

**ऋधक्**

**ऋधगिति पृथग्भावस्य प्रवचनं भवति। अथाप्यृध्नोत्यर्थे दृश्यते। —निरु०, ४/२५**
**✓ऋध्-वृद्धौ।**

### ऋद्धिः

ह्यृद्धिः। अग्निमुखामेवर्द्धि यजमान ऋध्नोति।

-तै० ब्रा०, ३/३/८

ऋद्धया, ऋध्नोत्येवाऽथो मिथुनत्वाय।

-मैत्रा०, १/४/८६

ऋद्धीर्ऋध्नोति। -मैत्रा०, ३/२/१०

ऋद्ध्या ऋध्नोति। -गो० ब्रा०, २/४/१८

✓ऋधु-वृद्धौ।

### ऋबीसं

ऋबीसमपगतभासम्। अपहृतभासम्। अन्तर्हित भासम्। गतभासं वा। -निरु०, ६/३५

अपगत/अपहृत/अन्तर्हित/गत+✓आशृ-दीप्तौ।

### ऋभुः

ऋभवः उरु भान्तीति वा। ऋतेन भान्तीति वा। ऋतेन भवन्तीति वा। -निरु०, ११/१५

उरु+✓भा-दीप्तौ, ऋत+✓भू-सत्तायां।

### ऋभुक्षिन्

उरुक्षयण ऋभूणां राजेति वा। -निरु०, ९/३

ऋभु+✓क्षि-निवासगत्योः ऐश्वर्यकर्मा च।

### ऋषभः

अथैष ऋषभः। ऋषभो वा एष स्तोमानामृषभतां गच्छति य एवं वेद।

-ता० ब्रा०, १३/१२/१-२

इन्द्रो वा अकामयतर्षभः सर्वासां प्रजानां स्याम् ऋषभतां गच्छेयं इति। स एतत् सामापश्यत्। तेनास्तुत। ततो वै स ऋषभः सर्वासां प्रजानां अभवद् ऋषभतां अगच्छत्। तद् एवार्षभस्यर्षभत्वम्। ऋषभ एव स्वानां भवति ऋषभतां गच्छति य एवं वेद।

-जै० ब्रा०, १/२२२

ततो वै स ऋषभस् सर्वासां प्रजानां अभवद् ऋषभतां अगच्छत्। -जै० ब्रा०, २/८७

✓ऋष्-गतौ।

### ऋषिः

ते यत्पुराऽऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिषन्तस्मादृषयः। -श० ब्रा०, ६/१/१/१

अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् तदृषयोऽभवन् तदृषीणामृषित्वम्। -तै० आ०, २/९/१

ऋषिर्दर्शनात्। स्तोमान् ददर्श इति औपमन्यवः। तद्यदेतांस्तपस्यमानान् ब्रह्म स्वयम्भु अभ्यानर्षत् तद् ऋषयो अभवन् तदृषीणां ऋषित्वमिति विज्ञायते। -निरु०, २/११

✓ऋष्-गतौ।

### एकधनं

स वा एषां सधनं यो यजमानस्य प्रियमभ्यतिरिच्यते। तद् यदेषां सधनम् तस्मादेकधना नाम।

-श० ब्रा०, ३/९/३/३४, ४/९/३/२६

एक+✓धन्-धान्ये, एक+✓डुधाञ्-धारण-पोषणयोः

### एकपादः

एकः पादः एकेन पावेन पातीति वा। एकेन पादेन पिबतीति वा। एकोऽस्य पाद इति वा।

-निरु०, १२/२९

एक+✓पा-रक्षणे, एक+✓पा-पाने, एक+✓पद-गतौ।

### एकवीरः

एकवीर इत्यारुणेयः। एको ह्येवैष वीरो यत्प्राणः। आ हास्यैको वीरो वीर्यवान् जायते। य एवं वेद। -जै० उ० ब्रा०, २/२/३/१

तद्यदेकमेवाभिसंपद्यते तस्मादेकवीरः। एको ह तु सन् वीरो वीर्यवान् भवति। आहास्यैको वीरो वीर्यवान् जायते। य एवं वेद।

-जै० उ० ब्रा०, २/३/३/९

एक+✓वी-गतिव्याप्तिप्रजनकान्त्यसनखादनेषु, एक+वि+✓ई-ईरयति - प्रेरयति, एक+वि+✓ईर-गतौ कम्पने च।

## एधः

एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि। -यजु०, २०/२३, ३८/२५

✓ञिइन्धी-दीप्तौ।

## एरिरः

एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः। -निरु०, ४/२३

आङ्+✓ईर-गतौ कम्पने च।

## एव

एवैश्च कामैरयनैरवनैर्वा। -निरु०, १२/२१

✓इण्-गतौ।

## ऐळतं

यद् व इळन् काव्योऽपश्यत् तस्मात् ऐळतं इत्याख्यायते। -जै० ब्रा०, ३/२१०

✓इड्-स्तुतौ।

## ऐदावसुनिधनं

स इदं वस्व् इत्य् एव निधनं उपैत्। तद् एवौदाव सुनिधनस्यैदाव सुनिधनत्वम्।

-जै० ब्रा०, ३/२६५

इदं+वसु+निधनं।

## ऐध्मवाहं

यद् व् इध्यमवाहोऽपश्यत् तस्माद् ऐध्यमवाहम् इत्य् आख्यायते। -जै० ब्रा०, ३/२७७

✓एध-वृद्धौ+✓वह्-प्रापणे।

## ऐलबः

ऐलब एलयीत्। -अथर्व०, ६/१६/३

✓इल-प्रेरणे।

## औक्ष्णोरन्ध्रं

उक्ष्णोरन्ध्रो वा एताभ्याङ्कान्योञ्जसा स्वर्ग लोकमपश्यत्। -ता० म० ब्रा०, १३/९/१९

यद् उक्ष्णो रन्ध्रः काव्योऽपश्यत् तस्मात् औक्ष्णोरन्ध्रं इत्याख्यायते।

-जै० ब्रा०, ३/१/१५०

✓उक्ष-सेचने+✓रध्-हिंसासंराध्योः।

## ओजस्

ओजसा बलेनौज ओजतेर्वा। उब्जतेर्वा।

-निरु०, ६/८

✓उब्ज्-आर्जवे।

## ओदनः

तं अशित्वोदानन्। स उदनोऽभवत्। तद् उदनस्योदनत्वं। उदनो ह वै नामैषः। तं ओदनं इति परोक्षं आचक्षते। -जै० ब्रा०, ३/३४६

ओदनमुदकदानं मेघम्। -निरु०, ६/३४

उद्+✓अन-प्राणने, ✓उन्दी-क्लेदने।

## ओ३म् ( ओङ्कारः )

अथ कस्मादुच्यत ओङ्कारो यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः।

-अथर्व० उप० ४, बटु० उप० १

तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेश्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदो३मिति।

ऐ० ब्रा० ५/३२

को धातुरित्यापृर्धातुरवतिमप्येक रुप सामान्यान्नेदी - यस्तस्मादापेरोङ्कारः सर्वमाप्नोतीत्यर्थः। -गो० ब्रा०, १/१/२६

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधि मात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वाद्वा आप्नोति ह वै सर्वान्कामानादिश्च भवति य एवं वेद॥ स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षा-दुभयत्वाद्वोत्कर्षति ह वै ज्ञान संततिं समानश्च भवति नास्याऽब्रह्मवित्कुले भवति य एवं वेद॥ सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेर पीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद॥ -मां० उप०, १/८-११

✓अव-रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेश-श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गन-हिंसादानभागवृद्धिषु।

## ओषधिः

ओषधय ओषद्धयन्तीति वा। ओषत्येना धायन्तीति वा। दोषं धायन्तीति वा। -निरु०, ९/२७

ओषधयो वा अपामोद्म। यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्ते। ओषधिषु तां सादयति। -श० ब्रा०, ७/५/२/४७

तां व्यौक्षत् ओषं धायेति। तत ओषधयः समभवन् तस्मादोषधयो नाम। -श० ब्रा०, २/२/४/५

✓उष् (ओष्) दाहे+✓धेत्-पाने, ओष+✓धा-धारणपोषणयोः।

## औदलं

उदलो वा एतेन वैश्वामित्रः प्रजापतिं भूमानगच्छत्, प्रजायते बहुर्भवत्यौदलेन तुष्टुवान्। -ता० ब्रा०, १४/११/३३

यद् उदलो दैवरातोऽपश्यत् तस्माद् औदलम् इत्याख्यायते। -जै० ब्रा०, ३/२२८

## औद्ग्रभणं

उद्गृभ्णीते वाऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षते। एतैरेव तद् यजुर्भिरुद्गृभ्णीते। तस्मादाहुः सर्वाणि दीक्षाया यजूंष्यौद्ग्रभणानीति। -श० ब्रा०, ३/१/४/१

औदग्रभणैर्वै देवा आत्मानमस्माल्लोकात्स्वर्गं लोकमभ्युदगृह्णत। यदुदगृह्णत तस्मादौद्ग्रभणानि। -श० ब्रा०, ६/६/१/१२

उद्+✓ग्रह-उपादाने।

## और्णायवं

यद् ऊर्णायुर् गन्धर्वोऽपश्यत् तस्माद् और्णायवं इत्याख्यायते। -जै० ब्रा०, ३/७७

✓उर्णुञ्-आच्छादने+आ+✓यु-मिश्रणामिश्रणयोः।

## और्ध्वसद्मनं

और्ध्वसद्मनं वै देवा एषु लोकेषूर्ध्वा असीदन्। यद् एषु लोकेषूर्ध्वा असीदंस् तत् और्ध्वसद्-मनस्यौर्ध्व सद्मनत्वम्। तद् एतत् स्वर्ग्यं साम। उर्ध्व एवैतेन स्वर्गे लोके सीदति य एवं वेद। -जै० ब्रा०, १/२१७

ऊर्ध्व+✓षद्लृ-विशरणगत्यवसादनेषु।

## औशनं

उशना वै काव्यो देवेषु अमर्त्यं गन्धर्वलोकं ऐच्छत्। स एतत् सामापश्यत्। तेनास्तुत। ततो वै स देवेषु अमर्त्यं गन्धर्वलोकं आश्नुत। तत् एतत् लोकवित् साम। अश्नुते देवेषु अमर्त्यं गन्धर्वलोकं एते तुष्टुवानः। यद् उशना काव्योऽपश्यत् तस्मात् औशनम् इत्याख्यायते। -जै० ब्रा०, १/१२७

वायुर्वा उशनं तस्यैतदोशनम्। -ता० ब्रा०, ७/५/१९

## औशिजः

उशिजः पुत्रः उशिग्वष्टेः कान्तिकर्मण। अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्। -निरु०, ६/१०

✓वश्-कान्तौ।

### कः

कः कमनो वा। क्रमणो वा। सुखो वा।

-निरु०, १०/२२

✓कमु-कान्तौ।

### ककुप्

ककुप् ककुदरूपिणीत्योपमिकम्। ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा।

-दे० ब्रा०, ३/५-६

ककुप ककुभिनी भवति। ककुप् च कुब्जश्च कुजतेर्वा। उब्जतेर्वा। -निरु०, ७/१२

✓कुञ्ज्-कौटिल्यार्थे, कु+✓उब्ज्-आर्जवे, कं+✓कुभि-आच्छादने।

### कक्षः

कक्ष्यारज्जुरश्वस्य। कक्षं सेवते। कक्षो गाहतेः। क्स इति नामकरणः। ख्यातेर्वानर्थकोऽभ्यासः। किमस्मिन् ख्यानमिति। कषतेर्वा। तत्सामान्यान्मनुष्यकक्षः। बाहुमूलसामान्यादश्वस्य।

-निरु०, २/२

✓गाहू-विलोडने, ✓कष-हिंसार्थे।

### कक्ष्याः

कक्ष्याः प्रकाशयन्ति कर्माणि। -निरु०, ३/८

✓कष-हिंसार्थे, ✓कस-शासने।

### कक्षीवत्

कक्षीवान् कक्ष्यावान्। -निरु०, ६/१०

✓कस-शासने।

### कणः

कणतेर्वा स्याद् अणुभावकर्मणः। कणतिः शब्दाणूभावे भाष्यते। अनुकणतीति। मात्राणुभावत्कणः। -निरु०, ६/३०

✓कण्-शब्दार्थे, गतौ निमीलने च।

### कण्वास्

कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सुशृणुतं हवम्। -ऋ०, १/४७/२

✓कण-शब्दार्थे, गतौ निमीलने च।

### कच्छः

कच्छः, खच्छः, खच्छदः। अयमपीतरो नदीकच्छ एतस्मादेव। कमुदकम्। तेन छाद्यते।

-निरु०, ४/१८

✓छद-संवरणे।

### कच्छपः

कच्छपः कच्छं पाति। कच्छेन पातीति वा। कच्छेन पिबतीति वा। -निरु०, ४/१८

कच्छ+✓पा-पाने।

### कण्टकः

कण्टकः कन्तपो वा। कृन्ततेर्वा। कण्टतेर्वा स्याद्गति कर्मणः। उद्गततमो भवति।

-निरु०, ९/३२

✓कटी-गतौ, ✓कण्ट-हिंसायां, ✓कृती-छेदने।

### कत्पयं

कत्पयम् सुखपयसम्। सुखस्य पयः।

-निरु०, ६/३

कत्-सुखं+पयः।

### कन्या

कन्या कमनीया भवति। क्वेयं नेतव्येति वा (कमनेनानीयत इति वा) कनतेर्वा स्यात्कान्तिकर्मणः। -निरु०, ४/१५

✓कनी-दीप्तिकान्तिगतिषु, क्व+✓णीञ्- प्रापणे, ✓कमु-कान्तौ।

**कपनाः**

कपनाः कंपनाः क्रिमयो भवन्ति।

-निरु०, ६/४

✓ कम्प् - कम्पने

**कपिञ्जलः**

कपिञ्जलः कपिरिव जीर्णः। कपिरिव जवते। ईषत्पिङ्गलो वा। कमनीयं शब्दं पिञ्जयतीति वा। -निरु०, ३/१८

कपि+✓जृ-वयोहानौ।

**कबन्धं**

कबन्धं मेघम्। कबनमुदकं भवति। तदस्मिन्धीयते। उदकमपि कबन्धमुच्यते। बन्धिरनिभृतत्वे। कमनिभृंत च।

-निरु०, १०/४

कबन+✓धा-धारणे, क+✓बन्ध-बन्धने।

**कम्बलः**

कम्बलः कमनीयो भवति। -निरु०, २/२

✓कमु-कान्तौ।

**कम्बोजः**

कम्बोजाः कम्बलभोजाः। कमनीयभोजा वा।

-निरु०, २/२

✓कमु-कान्तौ+✓भुज्-पालनाव्यवहारयोः।

**करस्नं**

करस्नौ बाहू। कर्मणां प्रश्नातारौ।

-निरु०, ६/१७

कर+✓ष्णै-वेष्टनेशो भायांचेत्येके, कर+✓ष्णा-शौचे।

**करूळती**

करुळती कृत्तदती अपि वा देवं कञ्चित्कृत्तदन्तं दृष्ट्वैवमवक्षत।

निरु०, ६/३०

✓कृत्-कर्तने।

**कर्णः**

कर्णः कृन्ततेः। निकृत्तद्वारो भवति। ऋच्छे रित्याग्रायणः। ऋच्छन्तीव खे उदगन्ताम्। इति ह विज्ञायते। -निरु०, १/९

✓कृत्-कर्तने, ✓कृ-विक्षेपे।

**कर्म**

प्रथमा यानि कर्माणि चक्रिरे।

अथर्व० ४/७/७

अक्रन् कर्म कर्मकृतः सह वाचा मयो भुवा। देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवेः।

-तै० सं०, १/८/२/३

अक्रन् कर्म कर्मकृतः सह वाचा मयोभुवाः। देवेभ्यः कर्म कृत्वास्तं प्रेत सचाभुवः॥

-यजु०, ३/४७

कर्म कुरुते। -बृ० उ०, ४/३/४-६, ४/४/५

कर्म कुर्यात प्रतिदिनं विधिवत् प्रीतिपूर्वतः।

व्या० स्मृ०, २/१७

कल्याणं कर्म कुर्वन्ति। -गो० ब्रा०, २/६/१२

सवे कर्म कृण्वन्ति। -तै० सं०, १/१/९/९

कर्म (कस्मात्) क्रियतः इति सतः।

-निरु०, ३/१

कर्माणिकृण्वतः। -ऋ०, ८/३६/७, ८/३८/७

याभ्यां कर्माणि कृण्वते।

सा० पू०, ४/२/३/१०, ३६९

कर्म कस्मात्, क्रियते इति सतः।- निरु० ३/१

✓डुकृञ्-करणे।

**कलशः**

कलशः कस्मात् कला अस्मिञ्छेरते मात्राः।

-निरु०, ११/१२

कल+✓शीङ्-शये।

## कला

कलाश्च किरतेः। विकीर्णमात्राः।

-निरु०, ११/१२

✓कृ-विक्षेपे।

## कलिः

कलिश्च कलाश्च किरतेः। विकीर्णमात्राः।

-निरु०, ११/१२

✓कृ-विक्षेपे।

## कलिन्दा

तेभ्यः एता कलिन्दाः प्रायच्छन् एतासु श्राम्यतेति। तद् यद् कलिभ्यः कलिन्दाः प्रायच्छंस् तत् कलिन्दानां कलिन्दत्वम्।

-जै० ब्रा०, १/१५५

कलि+✓दा-दाने।

## कल्याणदेवः

कल्याणदेवः कमनीयदेवः। -निरु०, ५/२७

कल्याण+✓दिवु-क्रीडाविजिगीषाव्यवहार द्युति स्तुतिमोदमदस्वप्नकान्तिगतिषु।

## कल्याणं

कल्याणं कमनीयं भवति। -निरु०, २/३

✓कमु-कान्तौ।

## कवचं

कवचं कुअञ्चितं भवति। काञ्चितं भवति। कायेऽञ्चितं भवतीति वा। -निरु०, ५/२५

कु+✓अञ्च्-गतिपूजनयोः, काय+✓अञ्च्-गतिपूजनयोः।

## कविः

सदा कवी सुमतिमा चके वां विश्वा धियो आश्वेना प्रावतं मे।- ऋ०, १/११७/२३

कविः काव्येनास्वर्चनाः। -ऋ०, ९/८४/५

नमः कविः काव्येन कृणोमि।

-अथर्व०, ५/१/५

कविः क्रान्तदर्शनो भवति। कवतेर्वा।

-निरु०, १२/१३

✓कु-शब्दे, ✓क्रमु-पादविक्षेपे।

## कशा

कशा प्रकाशयति भयमश्वाय। कृष्यतेर्वाणूभावात्। वाक्पुनः प्रकाशयत्यर्थान्। खशया। क्रोशतेर्वा। -निरु०, ९/१९

✓काशृ-दीप्तौ, ✓कृष-विलेखने, ✓कश्-गतिशासनयोः, ख (खे)+✓शी-शयने।

## कश्यपः

कश्यपः पश्यको भवति।

-सू० ता० उप०, १

कश्यपः पश्यको भवति। यत्सर्वं परिपश्यतीति सौक्ष्म्यात्। -तै० आ०, १/८/८

✓दृश्-पश्य-दर्शने।

## काकः

काक इति शब्दानुकृतिः। तदिदं शकुनिषु बहुलम्। न शब्दानुकृतिर्विद्यत इत्यौपमन्यव। काकोऽपकालयितव्यो भवति।

-निरु०, ३/१८

✓कै-शब्दे।

## काकुदं

काकुदं ताल्वित्याचक्षते। जिह्वा कोकुवा। साऽस्मिन्धीयते। -निरु०, ५/२६

काकुद् इति वाङ्नाम।

## काक्षीवतं

काक्षीवतम् भवति।। कक्षीवान्वा एतेनौशिजः प्रजातिं भूमानमगच्छत् प्रजायते बह्वुर्भवति काक्षीवतेन तुष्टुवानः।

-ता० ब्रा०, १४/११/१६-१७

यद् उ कक्षीवान् अपश्यत् तस्मात् काक्षीवतम् इत्य् आख्यायते। -जै० ब्रा०, ३/२२४

✓काक्षि-कांक्षायां।

## काण:

काणो विक्रान्तदर्शन्तदर्शन इत्यौपमन्यवः। कणतेर्वा स्यादणुभावकर्मणः कणतिः शब्दाणूभावात्काणः। -निरु०, ६/३०

✓कण्-गतौ शब्दे च।

## काणुकं

इन्द्रस्य सोमस्य काणुका कान्तकानीति वा क्रान्तकानीति वा कृतकानीति वा। इन्द्रः सोमस्य कान्त इति वा। आकणेघात इति वा। कणेहतः कान्तिहतः। -निरु०, ५/११

✓कण-गतौ शब्दे च।

## काम:

आप्नोति वै स सर्वान् कामान् यान् कामयते। -गो० ब्रा०, १/१/२

कामयते यांश्च कामान्। -मु० उप०, ३/१/१०

नार्त्वीयं कामं कामयते। -गो० ब्रा०, २/४/१०

ये नास्तुतं यं कामं कामयन्ते तमभ्यश्नुवते। -ता० ब्रा०, ४/३/१०

कामं कामयते।
-मा० उप० ५, नृ० पू० ता० उप० ४/१, १/३, सु० उप० ४/४, ना० प० उप० ८/१४, श्रीवि० ता० उप० ३, बृ० उ० ४/३/१९, बृ० उ० १/३/२८

एतेन वै देवा जैत्वानि जित्वा यं यं काममकामयन्त तं तमाप्नुवन् यं कामङ्कामयते तमेतेनाप्नोति। -ता० ब्रा०, २०/३/४

यं कामं कामयते तमभ्यश्नुते। -ता० ब्रा०, ४/९/२०, ष० ब्रा०, १/५/४

यं कामं कामयते तमभ्यश्नुत एवमेतया। -सं० उ० ब्रा०, १/१८, २०

यं कामं कामयते तमाप्नोति। -सा० वि० ब्रा०, ३/९/१+२६*

✓कमु-कान्तौ।

## कामिनी

अस्मै कामायोप कामिनीर्विश्वे वो देवा उपसंयन्तु। -अथर्व०, ३/८/४

✓कमु-कान्तौ।

## कामी

हि वै कामेन कामान्कामयते स कामी भवति। -गो० ता० उप०, ८/१

यो ह वै कामेन कामान्कामयते स कामी भवति। -गो० ता० उप०, १-८

✓कमु-कान्तौ।

## काम्या:

मनुष्याणां ह्येतासु कामाः प्रविष्टाः। तस्मादाह काम्या एतेति। -श० ब्रा०, २/३/४/३४

✓कमु-कान्तौ।

## कायमान:

कायमानश्चायमानः। कामयमान इति वा। -निरु०, ४/१४

✓कमु-कान्तौ, ✓चाप्-दर्शने।

## कारु:

सेमं न कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः। -ऋ०, १/१०२/९

आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा। -ऋ०, १/१६५/१४

कर्ता स्तोमानाम्। -निरु०, ६/६
✓डुकृञ्-करणे।

## कार्णश्रवसं

सोऽब्रवीद् अश्रौषं वै कर्णाभ्याम् इति तद् एव कार्णश्रवसस्य कार्णश्रवसत्वम्।
-जै० ब्रा०, ३/१६३

कर्ण+✓श्रु-श्रवणे।

## कार्तवेशं

यद् उ कृतवेशोऽपश्यत् तस्मात् कार्तवेशम् इत्य आख्यायते। -जै० ब्रा०, ३/१९६
यद् उकृत्वेशोऽपश्यत् तस्मात्कार्त्वेशमित्याख्यायिते। -जै० ब्रा०, ९६
कृत+✓विश-प्रवेशने।

## कालः

कालयतेर्गतिकर्मणः।
✓कल-गतौ संख्याने च।

## कालेयं

देवाश्च वा असुराश्चैषु लोकेष्वस्पर्द्धन्त ते देवाः प्रजापतिमुपाधावं तेभ्य एतत्साम प्रायच्छदे ते नै नान् कालयिष्यद्धमिति तेनैनानेभ्यो लोकेभ्योऽकालयन्त यदकालयन्त तस्मात्कालेयम्। -ता० ब्रा०, ८/३/१
देवासुरा यज्ञेऽस्पर्द्धन्त्। ते देवाऽसुरान् वहिष्यवमानान् निरध्वसं.... तान कालेय एवान्वभ्यपायसं, तानकालेयेवैव कालेयादकालयन्ततन्त तत्कालेयस्य कालेयत्वम्।
-जै० ब्रा०, ४६
यद् अकालयन्तम् तत् कालेयस्य कालेयत्वम्।
-जै० ब्रा०, १/१५३
यद् अनुपर्यायम् अकालयन्त तच् चैव कालेयस्य कालेयत्वम्। -जै० ब्रा०, १/१५३

यद् अनुपर्यायम् अकालयनत तच् चैव कालेयस्य कालेयत्वम्। -जै० ब्रा०, १/१५३
यद् उ कलिर् वैतदन्योऽपश्यत् तस्मात् कालेयम् इत्य् आख्यायते। -जै० ब्रा०, १/१५५
✓कल-गतौ संख्याने च।

## कावं

यद् उ कविर् भार्गवोऽपश्यत् तस्मात् कावम् इत्य् आख्यायते।। -जै० ब्रा०, १/१६६
✓कम्-गतौ, ✓कु-शब्दे।

## काशिः

काशिर्मुष्टिः प्रकाशनात्। -निरु०, ६/१
✓काशृ-दीप्तौ।

## काशीतं

यद् उ कशीतिस् सोभरोऽपश्यत् तस्मात् काशीतम् इत्य् आख्यायते। -जै० ब्रा०, ३/२२६
✓काशृ-दीप्तौ।

## काष्ठा

यद् उ गिरिं काष्ठाम् अकुर्वन् तस्माद् असौ गिरिः काष्ठो नाम। -जै० ब्रा०, १/१०५
काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति। काष्ठा दिशो भवति, क्रान्त्वा स्थिता भवन्ति। काष्ठा उपदिशो भवन्ति। इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि काष्ठोच्यते। क्रान्त्वा स्थितो भवति। आज्यन्तेऽपि काष्ठोच्यते। क्रान्त्वा स्थितो भवति। आपोऽपि काष्ठा उच्यन्ते। क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्।। -निरु०, २/१५
✓क्रमु-पादविक्षेपे+✓ष्ठा-गतिनिवृत्तौ, ✓काशृ-दीप्तौ।

## कार्ष्मर्य्यः

तद् यद् कृष्यमाणस्यावाङ्पतत् तस्मात् कार्ष्मर्य्यः। -श० ब्रा०, ३/८/२/१७

तस्याग्निस्तेज आदाय दक्षिणाकर्षत् सोऽत्रोदरमद्यत्कृष्ट्वोदरभत् तस्मात् कार्ष्मर्य्यः।

-श० ब्रा० ७/४/१/३९

✓कृष-विलेखने।

## किंशुकं

किंशुकं क्रंशतेः प्रकाशयति कर्मणः।

-निरु०, १२/८

✓क्रंश्-दीप्तौ।

## कितवः

कितवः किं तवास्तीति शब्दानुकृतिः। कृतवान्वा। आशीर्नामकः। -निरु०, ५/२२

किं+तव।

## किमीदिन्

किमीदिन् किमीदिने। किमिदानीमिति चरते। किमिदं किमिदमिति वा। -निरु०, ६/११

किं+इदं।

## कियेधा

कियेधाः कियद्धा इति वाक्रममाणधा इति वा।

-निरु०, ६/२०

कियत्+✓धा-धारणे, ✓क्रम् पादविक्षेपे+✓धा-धारणे।

## किरिकाः

नमो वः किरिकेभ्यः इति एते हीदं सर्वं कुर्वन्ति।

-श० ब्रा०, ९/१/१/२३

✓डुकृञ्-करणे।

## किल्विषं

किल्विषं किल्भिदम्। सुकृतकर्मणोभ्यम्। कीर्तिमस्य भिनन्तीति वा। -निरु०, ११/२४

✓किल-श्वैत्यक्रीडनयोः।

## क्रिमिः

क्रिमिः क्रव्ये मेद्यति। क्रमतेर्वा स्यात्सरणकर्मणः। क्रामतेर्वा। -निरु०, ६/१२

✓क्रमु-पादविक्षेपे, ✓क्राम्-गत्यर्थे।

## क्रिविर्दती

क्रिविर्दती विकर्तनदन्ती। -निरु०, ६/३०

✓कृत-छेदने कर्तने वा।

## कीकटाः

कीकटा नाम देशोऽनार्य निवासः। कीकटाः किं कृताः। किं क्रियाभिरिति प्रेप्सा वा।

-निरु०, ६/३२

किं+✓डुकृञ्-करणे।

## क्रीडनी

त एनम् वृत्रम् अध्यक्रीडन् तत्क्रीडिनां क्रीडित्वम्।

-तै० ब्रा०, १/६/७/५

यद् एव प्रजा वृत्रात् पाप्मनो मुमुचाना आक्रीडन्त तस्मात् क्रीडनी। -जै० ब्रा०, २/२३२

✓क्रीडृ-विहारे।

## कुचरः

कुचर इति चरति कर्म कुत्सितम्। अथ चेद् देवताभिधानम्। क्वायं न चरतीति।

-निरु०, १/२०

कु+✓चर्-गतौ।

## कुणारुः

परिक्वणनम्। -निरु०, ६/१

✓क्वण्-शब्दार्थे।

## कुपायकुः

अकुप्यन्तः कुपायकुः। -अथर्व०, २०/१३०/८

✓कुप-क्रोधे।

## कुब्जः

कुकुप् च कुब्जश्च कुजतेर्वोब्जतेवा।

-दे० अ० ब्रा० ३/६

कुब्जः कुजतेर्वा, उब्जतेर्वा -निरु०, ७/१२

✓कुञ्ज्-कौटिल्याये, कु+✓उब्ज-आर्जवे।

## कुत्सः

कुत्स इत्येतत् कृन्ततेः। षि कुत्सो भवति। कर्त्ता स्तोमानामित्यौपमन्यवः।

-निरु०, ३/११

✓कृत्-कर्त्तने छेदने वा।

## कुन्तापं

कुन्तापं शंसति कुयं ह वै नाम कुत्सितं भवति, तद्यत्तपति, तस्मात् कुन्तापाः, तत् कुन्तापानां कुन्तापत्वम्। -गो० ब्रा०, २/६/१२

कु+✓तप-संतापे, दाहे च।

## कुरुङ्गः

कुरुङ्गो राजा बभूव। कुरुगमनाद्वा। कुलगमनाद्वा। कुरुः कृन्ततेः। क्रूरमित्यप्यस्य भवति। -निरु०, ६/२२

कुरु-कुल+✓गम्-गमने।

## कुरुः

कुरुः कृन्ततेः। -निरु०, ६/२२

✓कृती-छेदने।

## कुलं

कुलं कुष्णातेः। विकुषितं भवति।

-निरु०, ६/२२

✓कुस-संश्लेषणे।

## कुलिशः

कुलिश इति वज्र नाम। कूलशातनो भवति।

-निरु०, ६/१७

कूल +✓शद्लृ-शातने, कु+✓लिश-गतौ अल्पीभावे च।

## कुल्माषाः

कुल्माषाः कुलेषु सीदन्ति। -निरु०, १/४

कुल+✓षद्लृ-विशरणगत्यवसादनेषु।

## कुशिकः

कुशिकस्य सूनुः कुशिको राजा बभूव। क्रोशते शब्दकर्मणः। क्रंशतेर्वा स्यात्प्रकाशयति कर्मणः। साधु विक्रोशयिताऽर्थानामिति वा।

-निरु०, २/२५

✓क्रश्-आह्वाने रोदने च,✓कुश-निष्कर्षे, ✓कुश-भाषणे।

## कुहूः

कुहूर्गूहतेः। क्वाभूदिति वा। क्व सती हूयत इति वा। क्वाहुतं हविर्जुहोतीति वा।

-निरु०, ११/३२

✓गुह-संवरणे।

## कूपः

कूपः कस्मात्। कु पानं भवति। कुप्यतेर्वा।

-निरु०, ३/१९

✓कुप्-क्रोधे।

## कूर्मः

यद्वेव कूर्ममुपदधाति। प्राणो वैः कूर्मः। प्राणो हीमाः सर्वाः प्रजा करोति।

-श० ब्रा०, ७/५/१/७

स यत् कूर्मो नाम। एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत। यदसृजत अकरोत् तत्। यदकरोत् तस्मातत्कूर्मः। कश्यपो वै कूर्मः। तस्मादाहुः सर्वाः प्रजाः काश्यप इति।

-श० ब्रा०, ७/५/१/५

✓कृञ्-करणे।

## कृपा

कृपतेर्वा। कल्पतेर्वा। -निरु०, ६/८

✓कृप्-कृपायां गतौ च, ✓क्लृप्-व्यवस्थायां।

## कूलं

कूलं रूजतेः। विपरीतात्। -निरु०, ६/१

✓रुज्-भङ्गे।

## कृकवाकुः

कृकवाकोः पूर्वं शब्दानुकरणम् वचेरुत्तरम्।
-निरु०, १२/१३

कृक+✓वच्-परिभाषणे।

## कृषिः

अक्षैर्मा दीव्यः कृषिमित्कृषस्व।
-ऋ०, १०/३४/१०

✓कृष-विलेखने।

## कृष्टिः

कृष्टयः इति मनुष्य नाम। कर्मवन्तो भवन्ति। विकृष्ट देहा वा। -निरु०, १०/२२

✓कृष्-विलेखने, ✓डुकृञ्-करणे।

## कृष्णः

कृष्णं कृष्यतेः। निकृष्टो वर्णः।
-निरु०, २/२०

✓कृष्-विलेखने।

## कृत्तिः

कृत्तिः कृन्ततेः। यशो वा। अन्नं वा। इयमपीतरा कृत्तिरे तस्मादेव सूत्रमयी, उपमार्थे वा।
-निरु०, ५/२२

✓कृती-कर्त्तने, छेदने वा।

## कृन्तत्रं

कृन्तत्रमन्तरिक्षं, विकर्तनं मेघानाम्। विकर्तनेन मेघानामुदकं जायते। -निरु०, २/२२

✓कृती-छेदने।

## कृदरं

कृदरं कृतदरं भवति। -निरु०, ३/२०

✓कृती-छेदने।

## कृधु

कृध्विति ह्रस्वनाम, निकृत्तं भवति।
-निरु०, ६/३

✓कृती-छेदने।

## केतपूः

दिव्यो गन्धर्वः केतपूः केतं नः पुनातु।
-यजु०, ९/१, ११/७

केतपूः केतं नः पुनातु। -यजु०, ३०/१

दिव्यो गन्धर्वः केतपूः केतं पुनातु वाचस्पतिर्वाचमद्य स्वदति नः।
-का० सं०, १३/४४, १५/४०

केतपूः केतं नः पुनातु। -तै० सं०, ४/१/१/७

दिव्यो गन्धर्वः केतपूः केतं पुनातु।
-मै० सं०, १/११/१

केत+✓पूञ्-पवने।

## केतुः

महो अर्णः सरस्वती चेतयति केतुना।
-ऋ०, १/३/१२

अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः।
-ऋ०, ३/११/३

नि के तुना जनानां चिकेथे पूतदक्षसा।
-ऋ०, ५/६६/४

अ चेति केतुरुषसः पुरस्तात्।
-ऋ०, ७/६७/२

तवश्रियोवर्षयस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः। -ऋ०, १०/९१/५

केतुं कृण्वन्नकेतवे पेशो।
-अथर्व०, २०/२६/६७

✓कित-निवासे रोगापनयने, ✓कित-ज्ञाने।

## केपिः

केपयः कपूया भवन्ति। कपूयमिति। पुनाति कर्म कुत्सितम्। दुष्पूयं भवति।

-निरु०, ५/२४

✓कम्प-कम्पने, क (कु)+✓पूञ्-पवने।

## केशिः

केशी केशा रश्मयः। तैस्तद्वान् भवन्ति। काशनाद्वा। प्रकाशनाद्वा। -निरु०, १२/२५

✓क्लिश-उपतापे।

## कोकुवा

जिह्वा कोकुवा। कोकूयमाना वर्णान्नुदतीति वा। कोकूयतेर्वा स्याच्छब्दकर्मणः।

-निरु०, ५/२६

✓कूङ्-शब्दे।

## कोशः

कोशः कुष्णातेः। विकुषितो भवति। अयमपीतरः कोश एतस्मादेव सञ्चय। आचितमात्रे महान् भवति। -निरु०, ५/२६

✓कुष्-निष्कर्षे।

## कौत्सं

कौत्सं भवति।। एतेन वै कुत्सोऽन्धसो विपानमपश्यत्। -ता० ब्रा०, १४/११/२५-२६

यद् उ कुत्सो अपश्यत् तस्मात् कौत्सम् इत्य् आख्यायते। -जै० ब्रा०, १/२२८

✓कुत्स-अवक्षेपणे।

## कौरयाणः

कौरयाणः कृतयानः। -निरु०, ८/१५

✓डुकृञ्-करणे।

## क्रतुः

तद्यत्तमाह क्रतुरिति। संवत्सरो हि सर्वाणि भूतानि करोति। तदेव तद्रूपमुपदधाति।

-श० ब्रा०, ८/४/१/२१

✓डुकृञ्-करणे।

## क्रव्यं

क्रव्यं विकृत्ताज्जायत इति नैरुक्त्ताः।

-निरु०, ६/११

✓कृती-छेदने।

## क्रूरं

क्रूरमित्यप्यस्य कृन्ततेः भवति।

-निरु०, ६/२२

✓कृती-छेदने।

## क्रोशं

क्रोशं भवति। एतेन वा इन्द्र इन्द्रक्रोशे विश्वामित्र जमदग्नी इमा गाव इत्याक्रोशत् पशूनामवरुध्यै क्रोशं क्रीयते। -ता० ब्रा०, १३/५/१४-१५

✓क्रुश-आह्वाने रोदने च।

## क्रौञ्चं

क्रौञ्चम्भवति। क्रुङ्ङेष्यमहरविन्ददेष्य मिव वै षष्ठमहरहरेवैतेन विन्दन्ति।

-ता० ब्रा०, १३/९/१०-११

यद् उ क्रुङ् आंगिरसोऽपश्यत् तस्मात् क्रौञ्चम् इत्य् आख्यायते। -जै० ब्रा०, ३/३२

✓क्रुञ्च-गतिकौटिल्याल्पीभावयोः।

## क्लृप्तः

एष वै क्लृप्तो नाम यज्ञः। कल्पते ह वैतत्र प्रजाभ्यो योगक्षेमः, इति।

-तै० ब्रा०, ३/९/१९/३

✓क्लप-व्यक्तायां वाचि।

## क्लृप्तिः

दिशां क्लृप्तिरसि दिशो मे कल्पन्ताम्। कल्पन्तां मे दिशः दैवीश्च मानुषीश्च।

-तै० ब्रा०, ३/७/५

✓क्लप-व्यक्तायां वाचि।

**क्षणः**

क्षणः क्षणोतेः, प्रक्ष्णुतः कालः।

-निरु०, २/२५

✓क्षि-निवासगत्योः, ✓क्षणु-हिंसार्थे।

**क्षत्रं**

यूनः सुक्षत्रान्क्षयतो दिवो नृनादित्यान्याम्यदितिं दुवोयु। -ऋ०, ६/५१/४

क्षत्रं प्राणो वै क्षत्रं, प्राणो हि वै क्षत्रं, त्रायते हैनं प्राणः क्षणितोः, प्रक्षत्रमत्रमाप्नोति।

-बृ० उ०, ५/१३/४

प्राणो वै क्षत्त्रम्। प्राणो हि वै क्षत्त्रम्। त्रायते हैनं प्राणः क्षणितोः। प्रक्षत्त्रमात्रमाप्नोति। क्षत्त्रस्य सायुज्यं सलोकतां जयति। य एवं वेद।

-श० ब्रा०, १४/५/१४/४

✓क्षि-निवासगत्योः, ✓क्षणु-हिंसायां।

**क्षा**

क्षा क्षियतेः निवासकर्मणः। -निरु०, २/६

✓क्षि-निवासगत्योः।

**क्षारं**

क्षारणादापदां क्षारम्।

-श्री० जा० उप०, १/१

✓क्षर्-सञ्चरणे।

**क्षिप्रं**

क्षिप्रं कस्मात्। संक्षिप्तो विकर्षः।

-निरु०, ३/९

✓क्षिप्-प्रेरणे।

**क्षीरं**

क्षीरं क्षरतेः। घसेर्वैरो नामकरणः। उशीरमिति यथा। -निरु०, २/५

तद् अत्यक्षरत्। तत् क्षीरं अभवत्। यद् अत्यक्षरत् तत् क्षीरस्य क्षीरत्वम्। -जै० ब्रा०, २/२२८

✓क्षर-सञ्चलने, ✓घस्लृ-अवने।

**क्षुम्पं**

क्षुम्पमहिच्छत्रकं भवति। यत् क्षुभ्यते।

-निरु०, ५/१६

✓क्षुभ-सञ्चलने।

**क्षेत्रं**

क्षेत्रं क्षियते निवास कर्मणः।

-निरु०, १०/१४

✓क्षि-निवासगत्योः, ✓क्षि-क्षये।

**क्षेष्ठा**

क्षेष्ठा अमुत्रामुष्मिल्लोक इत्याह क्षीयते वा अमुष्मिँलोके। -तै० सं०, १/७/३/३

✓क्षि-क्षये, ✓क्षि-निवासगत्योः।

**क्षोणः**

क्षोणस्य क्षयणस्य। -निरु०, ६/६

✓क्षि-निवासगत्योः, ✓क्षु-शब्दे।

**क्ष्मा**

क्ष्मा पृथिवी। तस्यांचरति। तयाचरति। विक्ष्मापयन्ती चरतीति वा। -निरु०, १०/७

✓क्षमूषु-सहने।

**खं**

खं पुनः खनतेः। -निरु०, ३/१३

✓खनु-अवदारणे।

**खण्डं**

खण्डं खण्डयतेः। -निरु०, ३/१०

✓खडि-भेदने।

**खदिरः**

खदिरेण ह सोममाचखाद। तस्मात् खदिरो यदेनेनाखिदत्। तस्मात् खादिरो यूपो भवति।

-श० ब्रा०, ३/६/२/१२, ४/६/२/५

✓खदि-स्थैर्ये, ✓खाद्-भक्षणे।

### खनः

यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वय-ताच्चतुरङ्गुलेनो परमति खनतादिति तं स खनति वा खानयति।

-बौ० श्रौ० सू०, ४/२, ६/२६

✓खनु-अवदारणे।

### खलः

खल इति संग्रामनाम। खलतेर्वा। स्खलतेर्वा। अयमपीतरः खल एतस्मादेव। समास्कन्नो भवति।

-निरु०, ३/१०

✓खल्-सञ्चये, ✓स्खल-सञ्चलने।

### खिद्रं

खिद्रं खेदनं छेदनं भेदनम्। -निरु०, ११/३७

✓खडि-भेदने।

### खेचरी

छेदनचालनदाहैः फलां परां जिह्वां कृत्वा दृष्टिं भ्रूमध्ये स्थाप्य कपाल कुहरे जिह्वाविपरीतगा यदा भवति तदा खेचरी मुद्रा जायते। जिह्वा चित्तं च खे चरति। -शा० उप०, १/७/४३

खे+✓चर्-गतौ।

### गङ्गा

गङ्गा गमनात्। -निरु०, ९/२६

✓गम-गमने।

### गणः

गणो गणनात्। गुणश्च। -निरु०, ६/३६

✓गण्-संख्याने।

### गधिता

गध्यतिर्मिश्रीभावकर्मा। -निरु०, ५/१५

✓गृधु-अभिकांक्षायां, ✓गध्-मिश्रणे।

### गध्यं

गध्यं गृह्णातेः। -निरु०, ५/१५

✓ग्रह्-उपादाने, ✓गृधु-अभिकांक्षायां, ✓गध्-मिश्रणे।

### गन्धर्वः

तां गन्धर्वोऽवदद्गर्भे अन्तः।

-ऋ०, १०/१७७/२

तयोऽएवैष एतत् सहैव पत्नीभिरेति। ते पत्नीष्वेव गन्धर्वा गृह्णान्ति। अथैतमभयेऽनाष्ट्रे यज्ञस्य समाहरन्ति। -श० ब्रा०, ३/९/३/२२

तां गन्धर्वोऽवदद् गर्भे अन्तः इति। प्राणो वै गन्धर्वः। पुरुष उ गर्भः। स इमां पुरुषे अन्तर्वाचं वदति॥ -जै० उ० ब्रा०, ३/६/८/३

योषित्कामा वै गन्धर्वाः। सहैव पत्नीभिरयाम। ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्ति।

-श० ब्रा०, ३/९/३/२०

✓गृधु-अभिकांक्षायां, गो+✓धृ-धारणे,✓गृ-निगरणे > ग-गर्भः+(अ) न्तः>अन्तः>गन्तः+ ✓वच्-भाषणे > गन्धर्वः।

### गन्ध्यं

वाजगन्ध्यं गध्युत्तरपदम्। गध्यं गृह्णातेः।

-निरु०, ५/१५

✓गृधु-अभिकांक्षायां, ✓गध्-मिश्रणे, ✓गन्ध्-अर्दने हिंसायाम्।

### गयः

तद् यत् गच्छति तस्माद् गयस्य गयत्वम्।

-गो० ब्रा०, १/५/१४

✓गम्-गमने।

### गयस्फानः

गयस्फानः प्रतरणः सुवीर इति गवां नः स्फावयिता प्रतारयितैधीत्येव तदाह, इति।

-ऐ० ब्रा०, ३/२

गय+✓स्फाय्-वृद्धौ।

## गरुत्मत्

गरुत्मान् गरणवान्। गुर्वात्मा महात्मेति वा।

-निरु०, ७/१८

✓गॄ-निगरणे।

## गर्तः

गर्तः सभास्थाणुः। गृणातेः।

श्मशान संचयोऽपि गर्त उच्यते। गुरतेः। अपगूर्णो भवति। रथोऽपि गर्त उच्यते। गृणातेः स्तुतिकर्मणः। -निरु०, ३/५

✓गॄ-शब्दे, स्तुतिकर्मा वा, ✓गूरी संयमने।

## गर्भः

देवीराप एष वो गर्भस्तं सुप्रीतं सुभृतं बिभृत।

-यजु०, ८/२६

एष वै गर्भो देवानाम्। य एष तपति। एष हीदं सर्वं गृभ्णाति। एतेनेदं सर्वं गृभीतम्।

-श० ब्रा०, १४/१/४/२

गर्भो गृभेः। गृणात्यर्थे। गिरत्यनर्थानिति वा। यदा हि स्त्री गुणान्गृह्णाति गुणाश्चास्या गृह्यन्तेऽथ गर्भो भवति। -निरु०, १०/२३

✓गॄ-निगरणे शब्दे विज्ञाने च।

## गर्भधः

आऽहमजानि गर्भधमा त्वमजासि गर्भधमित्याह। प्रजा वै पशवो गर्भः। प्रजामेव पशूनात्मन्धन्ते। प्रजा वै पशवो गर्भः, प्रजामेव पशूनात्मन्धत्ते, गर्भं धत्ते इति गर्भधः।

-तै० ब्रा०, ३/९/६/४

गर्भ+✓धा-धारणपोषणयोः।

## गल्दा

गल्दा धमनयो भवन्ति। गलनामसु धीयते।

-निरु०, ६/२४

✓गल-स्रवणे+✓धा-धारणे, ✓दा-दाने।

## गातुवित्

सोमो जिगाति गातुविद्देवानामेति निष्कृतम्।

-ऋ०, ३/६२/१३

गातुविदो गातुं वित्त्वा गातुमित्।

-अथर्व०, ७/९७/७

देवा गातुविदो गातुं यज्ञाय विन्दत्।

-बौ०, श्रौ० सू०, २/१

देवा गातुविदो गातुँ वित्वो गातुमित्,

-मै० सं०, १/१/४३, १/१/८३, ४/१/१४, का० सं० ४/७७

देवा गातुविदो गातुं वित्त्वा गातुमित्।

-यजु०, २/२१ ८/२१, बौ० श्रौ० सू० १/२१, ४/१०

देवा गातुविदो गातुँ वित्त्वा गातुमित्।

-मै०, १/३/११३

देवा गातुविदो गातुँ वित्त्वा गातुँ यज्ञाय विन्दत।

-मा० श्रौ० सू०, १२

अथ गातुविन्निधनम्। गातुं विन्दामहा इति सत्रं आसते। गातुं एव विन्दन्ते।

-जै० ब्रा०, ३/२४५

✓गाङ्-गतौ, ✓गा-स्तुतौ, ✓गै-शब्दे +✓विद्-ज्ञाने।

## गाथं

गायद्गाथं सुतसोमो दुवस्यन्।-ऋ०, १/१६७/६

विप्राय गाथं गायत यं जुजोषते।

-सा० पू०, ५/२/१/१०, (४४६)

✓गै-शब्दे, ✓गा-स्तुतौ।

## गाथा

गाथा गीयते। -शां० ब्रा०, १९/३

✓गा-स्तुतौ।

## गायत्रं

गाय गायत्रमुक्थ्यम्। -ऋ०, १/३८/१४

गायत्रं त्वौ गायति शक्वरीषु।

-ऋ०, १०/७१/११

न गायत्रम् गीयमानम्। -सा० पू०, ३/१/४/३

अनिरुक्तङ्गेयमेतद्वै गायत्रस्य क्रूरं यन्निरुक्तं यदनिरुक्तं गायति क्रूरमेवास्य परिवृणक्ति।

-ता० ब्रा०, ७/१/८

आत्मा वै यज्ञस्य पवमानोमुखं गायत्री प्राणो गायत्रं यङ्गायत्रपां गायत्रेण स्तुवन्ति मुखत एव तत्प्राणान्दधाति। -ता० ब्रा०, ७/३/७

तमेतदेव साम गायन्नत्रायत। यद् गायन्नत्रायत तद् गायत्रस्य गायत्रत्वम्। त्रायत एनं सर्वस्मात् पाप्मनो मुच्यते य एवं वेद।

-जै० उ० ब्रा०, ३/७/१/४-५

यो वा एभ्यो लोकेभ्य गायत्रं गायति तैभ्यो लोकेभ्य आवृश्चात इम एनं लोका ऊर्ज्जाभिसंवसते। -ता० ब्रा०, ७/१/६

यो वै गायत्रेणाप्रतिहृतेनोङ्गायत्य प्रतिष्ठानो भवति हिङ्कारो वै गायत्रस्य प्रतिहारः।

-ता० ब्रा०, ७/१/४

स मनसा ध्येयः प्रतिहृतेन गायत्रेणोद्गायति प्रतितिष्ठति। -ता० ब्रा०, ७/१/५

अथ ह चैकितानेय एकस्यैव साम्न आगां गायति गायत्रस्यैव। तदनवानं गेयं वै गायत्रं तत्साम्नः। साम्न एवाप्रतिहारादनवानं गेयम्। तत् प्राणो वै गायत्रं तद् वै प्राणमृध्नोति। तथा ह सर्वमायुरेति॥

-जै० उ० ब्रा०, १/१२/३/७

यद् गायत्र् अत्रायत तद् गायत्रस्य गायत्रत्वम्। गायत एनं सर्वस्मात् पाप्मनो य एवं वेद।

-जै० ब्रा०, १/१११

गायत्रं गायतेः स्तुतिकर्मणः।

-निरु०, १/८

✓गा-स्तुतौ, ✓गै-शब्दे+✓त्रैङ्-पालने।

## गायत्री

गायत्रेषु गायत। -ऋ०, १/२१/२

प्रगायत्रेणं गायत पवमानं विचर्षणिम्।

-ऋ०, ९/६०/१

गायन्ति त्वा गायत्रिणः। -ऋ०, १/१०/१

गायन्ति त्वा गायत्रिणः।

-साम०, ५/२/२३/१, (१३४४)

यदगायत् तस्मादियं गायत्री। अथोऽआहुः अग्निरेवास्यै पृष्ठे सर्वः कृत्स्नोमन्यमानोऽगायत्। यदगायत् तस्मादग्निर्गायत्र इति। तस्मादु हैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव, गीते वा रमते।

-श० ब्रा०, ६/१/१/१५

यदगायत् तस्मादियं गायत्री।

-श० ब्रा०, ६/१/१/१५

सा हैषा गयांस्तत्रे। प्राणा वै गयाः। तत्प्राणान् तत्रे। तद्यत् गयान् तत्रे। तस्मात् गायत्रीनाम।

-श० ब्रा०, १४/५/१५/७

गायत्री गायते स्तुतिकर्मणः। गायतो मुखादुदपत दिति ह ब्राह्मणम्। -दै० ब्रा०, ३/२-२

गायत्री छन्दसाग्नेयी देवतया। पृथिवीमेतया ध्यायन् गायेत्। -ष० ब्रा०, २/१/१०

गायत्री वा इदं सर्वं भूतं यदिदं किं च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च। -छा० उप०, ३/१२/१

गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गायंस्त ते प्राणा वै गायास्तान् प्राणांस्त ते उद्यद्गायंस्त ते तस्माद् गायत्री नाम। -गायत्र्युपनिषद्, १

यदगायत् तस्मादियं गायत्री।

-श० ब्रा०, ६/१/१/१५

वाग्वै गायत्री वाग्वा इदं सर्वं मृतं गायति च त्रायते। -जै० ब्रा०, १/१११

सा हैषा गयांस्तते प्राणा वै गयांस्तत्प्राणांस्तत्रे तद् यद् गयास्तत्रे तस्माद् गायत्री नाम।

-बृ० उप०, ५/१४/४

सा हैषा गयांस्तत्रे। प्राणा वैः गयाः। तत्प्राणान् तत्रे। तद्यत् गयान् तत्रे। तस्मात् गायत्री नाम।

-श० ब्रा०, १४/५/१५/७

✓गा-स्तुतौ, ✓गै-शब्दे+✓त्रैङ्-पालने।

## गायत्रपार्श्वं

तेऽब्रुवन् स्वर्गं लोकं गत्वा गायत्रं वाव नोऽस्य साम्नः पक्षाव् अभूताम् इति। तद् एव गायत्रपक्षस्य गायत्रपक्षत्वम्। गायत्रपक्षं ह वै नामैतत्। तद् गायत्रपार्श्वम् इत्य् आख्यायते।

-जै० ब्रा०, ३/२१४

गायत्र+✓स्पृश-संस्पर्शने।

## गारं

तेभ्यो वा असुरा गरान् प्रागिरन्। तद् अविद्वांसोऽगिरं अन्नं एव मन्यमाना। ते गरगिरोऽमन्यत। तेऽकामयन्तायेमान् गरान् गीर्णान् हनीमहीति। त एतत् सामापश्यन्। तेनास्तुवत। तेनेमान् गरान् गीर्णान् अपाघ्नत। त एवेमे गिरयोऽभवन्। तद् यद् गरान् गीर्णान् अपाघ्नत तदेव गारस्य गारत्वम्।

-जै० ब्रा०, १/२२३

यद् तद् गरान् गीर्णान् अपाघ्नत तद् एव गारस्य गारत्वम्। -जै० ब्रा०, १/२२३

✓गृ-निगरणे।

## गिरिः

गिरिः पर्वतः। समुद्गीर्णो भवति।

-निरु०, १/२०

✓गृ-शब्दे, निगरणे च।

## गिर्वणः

गिर्वणा देवो भवति। गीर्भिरेनं वनयन्ति।

-निरु०, ६/१४

✓गृ-शब्दे निगरणे च+✓वन-सम्भक्तौ।

## गीः

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्तः ऋग्मियम्।

-ऋ०, १/९/९, अथर्व०, २०/७१/१५

गिर्वणो गिरः। -ऋ०, १/१०/१२

यो मे गिरस्तुविजातस्य पूर्वीर्युक्तेनाभि त्र्यरुणो गृणाति। -ऋ०, ५/२७/३

त्वामग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणन्तो नमसोपसेदिम। -ऋ०, ५/८/४

सुते-सुते नक्षन्ते गिर्वणो गिरः।

-सा० पू०, ३/१/१/८

गिरः स्तुतयः। गिरो गृणातेः। -नि०, १/१०

गिरा गीत्या स्तुत्या। -निरु०, १०/५

✓गृ-शब्दे निगरणे च।

## गुरुः

गु शब्दस्त्वन्धकारः स्यात् रु शब्दस्तन्निरोधकः। अन्धकार निरोधत्वाद् गुरुरित्यभिधीयते।

-अद्व०उप० १, अद्व०ता०उप० १/५

✓गृ-निगरणे शब्दे च, गुङ्-अव्यक्ते शब्दे+✓रु-शब्दे।

## गूर्दः

तेन गूर्दं अन्नाद्यं असुराणां अवृञ्जत। तस्मिन् अगूर्दन् यद् अगूर्दन् तद् गूर्दस्य गूर्दत्वम्।

-जै० ब्रा०, ३/१७१

✓गुरी-उद्यमने+✓दा-दाने, ✓गुर्द-क्रीडायां।

## गूर्वः

यद् देवाः अगूर्वम् तद् गूर्वस्य गूर्वत्वम्।

-जै० ब्रा०, ३/१७१

✓गुर्वी-उद्यमने।

## गुहा

गुहा गुहं गाः। -ऋ०, १/६७/३

गुहा हितं गुह्यं गूढम्।

-ऋ०, २/११/५, ३/३९/६, १०/१४८/२

गुहा गूहतेः। -निरु०, १३/९

✓गुहू-संवरणे।

## गुह्यं

गूहता गुह्यं तमो वि यात विश्वमत्रिणम्।

ऋ०, १/८६/१०

✓गुहू-संवरणे।

## गृत्सः

गृत्स इति मेधावि नाम, गृणातेः स्तुतिकर्मणः।

निरु०, ९/५

✓गृधु-अभिकांक्षायां।

## गृत्समदः

गृत्समदो गृत्समदनः। -निरु०, ९/५

गृत्स+✓मदी-हर्षे।

## गृध्रः

गृध्र आदित्यो भवति। गृध्यतेः स्थानकर्मणः।

-निरु०, १३/२६

गृध्राणीन्द्रियाणि। गृध्यतेर्ज्ञानकर्मणः।

-निरु०, १३/२६

✓गृधु-अभिकांक्षायां।

## गृहः

ग्राह्या गृहाः सं सृज्यन्ते स्त्रिया यन्म्रियते पतिः।

-अथर्व०, १२/२/३९

ऋग्भिर्ग्रहा गृह्यन्ते। -शां० ब्रा०, ६/११

गृहाः कस्मात्। गृह्णन्तीति सताम्।

-निरु०, ३/१३

✓ग्रह्-उपादाने।

## गोपाः

एष वै गोपाः। य एष तपति। एष हीदं सर्व गोपायति। -श० ब्रा०, १४/१/४/९

अपश्यं गोपामनिपद्यमानं इति। प्राणो वै गोपाः। स हीदं सर्वमनिपद्यमानो गोपायति॥

-जै० उ० ब्रा०, ३/६/९/२

अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायति। -ऐ० आ०, २/१/६

असौ वा आदित्यो गोपाः। स हीमाः प्रजा गोपायति। तमेव प्रजानां गोप्तारं कुरुते।

-तै० आ०, ५/६/४

स सुगोपातमो जन इति इन्द्र वै गोपाः।

-गो० ब्रा०, २/२/२०

✓गुप्-रक्षणे, गोपने च गो+✓पा-रक्षणे।

## गोमत्

मरुतो गमत्स गोमति व्रजे।

-ऋ०, ७/३२/१०

✓गम्-गतौ।

## गोष्ठः

सोऽब्रवीद् गोष्ठो वाव स इदं पशूनां सामाभूद् इति। तद् एव गोष्ठस्य गोष्ठत्वम्।

-जै० ब्रा०, ३/१५३

गो+✓ष्ठा-गतिनिवृत्तौ।

## गौ

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे।

-ऋ०, ६/२८/१

यद्वै तद्देवा असुरानेभ्यो लोकेभ्यो गोवयंस्तद्गोर्गोत्वम्। -ता० ब्रा०, १६/२/३

अथो गौरिति ब्रूयात्। इमे वै लोका गौः। यद्धि किंच गच्छति। इमांस्ल्लोकानागच्छति। इमऽउलोकाः एषोऽग्निः। तस्माद्गौरिति ब्रूयात्।

-श० ब्रा०, ६/१/२/३५

गौर्वा इदं सर्वं बिभर्ति। हन्त येयं पुरुषे त्वक् गव्येतां दधाम। तयैषा वर्षन्तम्।

-श० ब्रा०, ३/१/२/१४

गौरिति पृथिव्या नामधेयम्। यद् दूरं गता भवति। यच्चास्यां भूतानि गच्छन्ति। गातेर्वौकारो नामकरण:। अथापि पशुनामेह भवत्येतस्मादेव।

-निरु०, २/५

गावो गमनात्। -निरु०, १२/७

✓गम्-गतौ।

## गौङ्गवं

अग्निरकामयतान्नाद: स्यामिति स तपोऽतप्यत स एतद् गौङ्गवमयपश्यत्तेनान्नादोऽभवद्यदन्नं वित्त्वा गर्ह्यद्यदगङ्गूयत्तद् गौङ्गवस्य गौङ्गवत्वमन्नाद्यस्यावरुध्यै गौङ्गवं क्रियते।

-ता० ब्रा०, १४/३/१९

गां गां एव द्विषतो भ्रातृव्यस्य वृंक्तेऽव पशून् रुन्धे बहुपशु: भवति य एवं वेद। गौङ्गवेन वै देवा असुरान् हत्त्वा घोषगंगणिं अकुर्वत। तद् एव गौङ्गवस्य गौङ्गवत्त्वम्। तेऽब्रुवन् गां गां वावासुराणाम् अवृक्ष्महीति। तद् एव गौङ्गवस्य गौङ्गवत्वम्। -जै० ब्रा०, ३/१८५

✓गु-अव्यक्ते शब्दे।

## ग्ना:

छन्दांसि वै ग्ना:। छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति। छन्दोभिरेवैनामेतत् पचति।

-श० ब्रा०, ६/५/४/७

ग्ना गच्छन्त्येना:। -निरु०, ३/२१

गमनादाप:। देवपत्न्यो वा। -निरु०, १०/४५

✓गम्-गतौ।

## ग्म:

आ जग्मथु: पराकाद्दिवश्च ग्मश्च मर्त्यम्।

-ऋ०, १०/२२/६

✓गम्-गतौ।

## ग्रथिं

ग्रन्थिं न विष्य ग्रथितं पुनान ऋजुं च गातुं वृजिनं च सोम। -ऋ० ९/९७/१८

ग्रन्थिं ग्रथ्नाति।

-तै० ब्रा०, ३/२/३/४, ३/३/३/४

ग्रन्थिं करोति पूषा ते ग्रन्थिं ग्रथ्नात्विति।

-बौ० श्रौ० सू०, १/२

पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति।

-वा० श्रौ० सू०, १/३/२/२२

पूषा ते ग्रन्थिं ग्रन्थातु।

-मै० स०, १/१/६, ४/१/१५

✓ग्रन्थ-बन्धने सन्दर्भे च।

## ग्रभीता

अङ्कान् समङ्कान् हविषा विधेम यो अग्रभीत् पर्वस्या ग्रभीता। -अथर्व० १/१२/२

✓ग्रह-उपादाने।

## ग्रह:

ते वा एतौ ग्रहा अगृह्णात।

-मै० सं०, १/९/४-६

ग्रहो गृह्यते।

-मै० सं०, ४/८/२०

चक्षुर्वै ग्रह: रुपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति। -बृहद्० उप०, ३/२/५

जिह्वा वै ग्रह: स रसेनाति ग्राहेण गृहीतो जिह्वा या हि रसान्विजानाति।

-बृहद्० उप०, ३/२/४

तम् सोमं अघ्नन्। तस्य यशो व्यगृह्णात। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वम्।

-तै० ब्रा०, २/२/८/६

तमध्वर्युर्ग्रहेण गृह्णाति। यद् गृह्णाति तस्माद्ग्रह:। तस्मिन्नुद्गाता महाव्रतेन रसं दधाति।

-श० ब्रा०, १०/१/१/५, १०/४/१/१३

तं वित्तं ग्रहैर्व्यगृह्णात तद् ग्रहाणां ग्रहत्वम्।

-ऐ० ब्रा०, ११/९

तस्य सोमस्य यथाभिज्ञायं तनूर्व्यगृह्णात। ते ग्रहा अभवन्। तद् ग्रहाणां ग्रहत्वम्।

-तै० ब्रा०, १/३/१/२

ता प्रजाः अस्मात्सृष्टा अपाक्रामान्। ता ग्रहेणागृह्णात्। तद् ग्रहस्य ग्रहत्वम्।

-तै० ब्रा०, २/२/१/१

ते वा एतं ग्रहमगृह्णत। -मैत्र०, १/९/१७

त्वग्वै ग्रहः स स्पर्शेनाऽतिग्राहेण गृहीतः त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः।

-बृहद्० उप०, ३/२/९

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति। -बृहद्० उप०, ३/२/२

प्रातः सवनेऽध्वर्युग्रहान् गृह्णाति।

-शा० ब्रा०, १४/२

मनो वै ग्रहः स कामेनातिऽग्राहेण गृहीतो मनसा हि कामान् कामयते। -बृहद० उप०, ३/२/७

यं बहवः स बहुदेवत्यः। तद् यदेनं पात्रैव्यगृह्णत तस्माद् ग्रहा नाम। -श० ब्रा०, ४/१/३/५

वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यविभवदति। -बृहद्० उप०, ३/२/३

वैश्वदेवो हि ग्रहो गृहीतो भवति।

-शां० ब्रा०, १६/३

वैश्वानरीयो हि ग्रहो गृहीतो भवति।

-शां० ब्रा०, १६/७

श्रौत्रं वै ग्रहः शब्देनाति ग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति। -बृहद्० उप०, ३/२/६

सावित्रे हि ग्रहो ग्रहीतो भवति।

-शां० ब्रा०, १६/३

स देवानंशूनकरोत्। तानभ्यषुणोत् तान्पवित्रेणानुपात्। तान्परस्तात्पवित्रस्य व्यगृह्णात्। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वम्। देवता वा एता यजमानस्य गृहे गृह्यन्ते। यद् ग्रहाः विदुरेनं देवाः। यस्यैवं विदुष एते ग्रहा गृह्यन्ते, इति। -तै० ब्रा०, १/३/१/२

हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण ग्रहीतो हस्ताभ्यां हि कर्म करोति।

-बृहद् उप०, ३/२/८

ग्रहं गृह्णाति। -तै० ब्रा०, १/७/५/५

सोमस्य वा एतज्जीव ग्रहं गृह्णीते।

-मैत्र०, ३/७/१२

✓ग्रह-उपादाने, ग्रह्+✓विभाषा।

## ग्रावन्

ग्रावाणो हन्तेर्वा। गृणातेर्वा। गृह्णातेर्वा।

-निरु०, ९/८

✓ग्रह्-उपादाने, ✓हन्-हिंसायां, ✓गृ-शब्दे।

## ग्रासः

यावतो ग्रसतेग्रासान् पितृणां दीप्त तेजसाम्।

-अष्टादश स्मृति अत्रि संहिता श्लोक ३५४

✓ग्रसु-अदने।

## ग्राहिः

ग्राहिर्जग्राह यद्येतदेनं तस्या इन्द्राग्नी प्रमुक्तमेनम्।

-अथर्व०, ३/११/१, २०/९६/६

✓ग्रह-उपादाने।

## ग्रीवा

ग्रीवा गिरतेर्वा। गृणातेर्वा। गृह्णातेर्वा।

-निरु० २/२८

✓गृ-निगरणे।

## ग्रीष्मः

ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसाः। -निरु०, ४/२७

✓ग्रसु-अदने।

## घनः

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो भस्मधुक्।

-ऋ० १/१३६/१८

घनेन हन्मि वृश्चिकमहिं दण्डेनागतम्।

-अथर्व०, १०/४/९

✓हन्-हिंसागत्योः।

## घर्म

तद्घृङ्ङिति पपात। तत्पतित्वाऽसावादित्योऽभवत्। अथेतरः प्राङेव प्रावृज्यत। तद्यद्घृङत्यपतत्। तस्माद्घर्मः। अथ यत्प्रावृज्यत।
-श० ब्रा०, १४/१/१/१०

घर्म हरणम्। -निरु०, ११/४२

✓घृ-क्षरणदीप्त्योः।

## घृतं

जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियन्त भुवनानि विश्वा। -ऋ०, २/१०/४

आ त्वा जिघर्मि मनसा घृतेन।
-यजु०, ११/२३

यद् घ्रियते तद् घृतमभवत्।
-तैत्ति० सं०, २/३/१०/१

घृतमित्युदक नाम। जिघर्तेः सिञ्चतिः कर्मणः।
-निरु०, ७/२४

यदघ्रियत तद् घृतम्।
-मैत्र०, २/३/१३, २/३/२०

स घृङ्करोत्तद् घृतस्य घृतत्वम्।
-कपि० सं०, ३७/८

स घृङ्करोत्तद् घृतस्य घृतत्वम्।
-का० सं०, २४/१६-१७

✓घृ-क्षरणदीप्त्योः, ✓घृ-प्रस्रवणे।

## घृतपदी

यदेवास्यै पदाद् घृतमपीड्यत तस्मात् एवमाह।
-तै० सं०, २/६/७/४

यदेवास्यै घृतं पदे समतिष्ठत, तस्मादाह घृतपदी इति। -श० ब्रा०, १/८/१/२६

घृतं+✓पद-गतौ।

## घृतस्नुः

घृतस्नूर्घृत प्रस्नाविन्यः। घृतप्रस्राविण्यः। घृतसानिन्यः। घृतसारिण्यः इति वा।
-निरु०, १२/३६

घृत+✓ष्णु-प्रस्रवणे।

## घोरचक्षस्

घोरचक्षसे घोरख्यानाय। -निरु०, ६/११

✓हन्-हिंसागत्योः+✓चक्षिङ्-व्यक्तायां वाचि, ✓ख्या-प्रकथने।

## घोषः

घोषो घुष्यतेः। -निरु०, ९/९

✓घुष्-संशब्दने।

## घ्रंसः

घ्रंस इत्यहर्नाम, ग्रस्यन्तेऽस्मिन् रसाः।
-निरु०, ६/१९

✓ग्रसु-अदने, ✓ग्रह-उपादाने।

## घ्राणं

घ्राणं च घ्रातव्यम्। -प्र० उप०, ४/८

घ्राणं च घ्रातव्यम्। -सु० उप०, ६/१

✓घ्रा-गन्धोपादाने।

## चक्रं

चक्रं चकतेर्वा। चरतेर्वा। क्रामतेवा।
-निरु०, ४/२७

✓चर्-गतौ भक्षणे च, ✓क्रमु-पादविक्षेपे।

## चक्रिः

इन्द्रो न यो महा कर्माणि चक्रिर्हन्ता वृत्राणामसि सोम पूर्भित्।
-ऋ०, ९/८८/४

चक्रिरपो नर्यो यत् करिष्यन्।
-ऋ०, ७/२०/१

✓डुकृञ्-करणे।

## चक्षुः

चक्षुः ख्यातेर्वा। चष्टेर्वा। -निरु०, ४/३

चक्षुर्वै विचक्षणम्। वि ह्येनेन पश्यति।

-ऐ० ब्रा०, १/६

✓चक्षि-व्यक्तायां वाचि दर्शनेऽपि , ✓ख्या-प्रकथने।

## चतुर्विंशः

चतुर्विंशस्तोमो भवति तच्चतुर्विंशस्य चतुर्विंशत्वम्। चतुर्विंशतिर्वा अर्धमासा, अर्धमास एव तत्संवत्सरमाभन्ते।। इति।

-ऐ० ब्रा०, १७/६

चतुर्विंशोऽयं पुरुषो विंशत्यङ्गुलिश्चतुरङ्ग।

-गो० ब्रा०, १/५/५

## चतुष्टोमः

तं यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुस्तोमस्तं चतुस्तोमं सन्तं चतुष्टोभ इत्याचक्षते। -ऐ० ब्रा०, १४/५

ये वै चत्वारः स्तोमाः। कृतं तत्। अथ ये पञ्च। कलिः सः। तस्माच्चतुष्टोमः। तच्चतुष्टोमस्य चतुष्टोमत्वम्, इति। -तै० ब्रा०, १/५/११/१

चतुः+✓ष्टुञ्-स्तुतौ।

## चतुर्होतृ

चत्वारो वा एते यज्ञाः, तेषां चत्वारो होतारः तदेषां चतुर्होतृत्वम्। -तै० ब्रा०, २/३/१

यदेवैषु चतुर्धा होतारः, तेन चतुर्होतारः। तस्माच्चतुर्होतार उच्यन्ते। तच्चतुर्होतृणां चतुर्होतृत्वम्। -तै० ब्रा०, २/३/१/१.

चतुः+✓हू-दानादानयोः।

## चत्वारः

चत्वारः चलिततमा सङ्ख्या। -निरु०, ३/१०

चलति-गतिकर्मा।

## चनः

चन इत्यन्ननाम पचतिर्नामीभूतः।

-निरु०, ६/१६

✓चायृ-पूजानिशामनयोः।

## चनोधा

चनोधाश्चनोधाऽअसि चनो मयि धेहि।

-यजु०, ८/७

चनस्+✓डुधाञ्-धारणपोषणयोः।

## चन्दनं

चन्दनं चन्दतेः। कान्तिकर्मणः चन्दनमित्यप्यस्य भवति। -निरु०, ११/५

✓चदि-आह्लादने दीप्तौ च।

## चन्द्रः

चन्दश्चन्दतेः। कान्तिकर्मणः। चन्दनमित्यप्यस्य भवति चारु द्रमति, चिरं द्रमति, चमेर्वा पूर्वम्।

-निरु०, ११/५

✓चदि-आह्लादने दीप्तौ च, ✓चन्द्र - कान्तिकर्मा, चारु+✓द्रमु-गतौ, चिर+✓द्रमु-गतौ।

## चन्द्रमस्

चन्द्रमाश्चायन्द्रमति। चन्द्रो माता। चान्द्रं मानमस्येति वा। चन्द्रश्चन्दतेः। कान्तिकर्मणः।।

-निरु०, ११/५

सोऽमन्यत किं किं वा अकरमिति। स चन्द्रं म आहरेति प्रालपत्। तच्चन्द्रमसश्चन्द्रमसस्त्वम्।

-तै० ब्रा०, २/२/१०/३

चाय+✓द्रम्-गतौ, चन्द्र+✓मा-माने।

## चमस्

चमसः कस्मात्, चमन्त्यस्मिन्निति।

-निरु०, १०/१२

✓चमु-अदने।

## चरणं

अप्सरसां गन्धर्वाणां मृगाणां चरणे चरन्।

-ऋ०, १०/१३६/६

मनो हि प्रथमं प्राणानाम्। चक्षुरेव चरणम्। चक्षुषा ह्यात्मा चरति।

-श० ब्रा०, १०/३/५/७

आदित्य एव चरणम्। यदा ह्येवैष उदेति अथेदं सर्वं चरति। तदेतद्यजुः सपुरश्चरणमधिदेवतम्।

-श० ब्रा०, १०/३/५/३

✓चर-गतौ भक्षणे च।

## चरुः

चरुर्मृच्चयो भवति। चरतेर्वा। समुच्चरन्त्यस्मादापः। -निरु०, ६/११

✓चर-गतौ भक्षणे च।

## चर्कृत्यं

यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः।

-ऋ०, ८/१०३/३

✓डुकृञ्-करणे।

## चर्मन्

चर्म चरतेर्वा। उच्चृतं भवतीति वा।

-निरु०, २/५

✓चृती-हिंसाग्रन्थनयोः, ✓चर-गतौ।

## चर्षणिः

विशः पूर्वीः प्र चर चर्षणि प्राः।

-साम० पू० ३/१०/६

चर्षणिः चायिता, आदित्यः।

-निरु०, ५/२४

✓कृष-आकर्षणे विलेखने च, ✓चायृ-पूजानिशामनयोः।

## चातुर्मास्यं

ते चतुरो मासोऽयुवन्त वरुणपुघासैः परांश्चतुरस्साकमेधैः पराश्चतुरस्तानेव भ्रातृव्याद्युवते यच्चतुरश्चतुरो मासोऽयुवन्त तच्चातुर्मास्यानां चातुर्मास्यत्वम्।

-का० सं०, ३६/३-४

## चारुः

चारुरासु। चारु चरतेः। -निरु०, ८/१५

चारु रुचेर्विपरीतस्य। -निरु०, ११/५

✓चर्-गतिभक्षणयोः, ✓रुच-दीप्तावभिप्रीतौ च।

## चिकित्वान्

न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान्। -ऋ०, १/७१/७

चिकित्वांश्चेतनावान्। -निरु०, २/११, ८/५

✓कित्-ज्ञाने।

## चितिं

चित्तिमचित्तिं चिनवद्वि विद्वान्।

-ऋ०, ४/२/११

तद् यत्पञ्च चितीश्चिनोति एताभिरेवैनं तत्तनूभिश्चिनोति। यच्च चिनोति तस्माच्चितयः।

-श० ब्रा०, ६/१/२/१७, १८, १९

चितिमिच्छतेति वाव तदब्रुवन्। तच्चेतयमाना अपश्यन् तस्माच्चितयः।

-श० ब्रा०, ६/३/२/९

चेतयध्वमिति। चितिमिच्छतेतिवाव तदब्रुवन्।

-श० ब्रा०, ६/३/१/१

चेतव्यो ह्यस्यासीत् तस्माच्चित्यः चित्य उ एवायं यजमानस्य भवति। चेतव्यो ह्यस्य भवति। तस्माद्वेव चित्यः। -श० ब्रा०, ६/१/२/१६

✓चिञ्-चयने, ✓चिती-सञ्ज्ञाने।

## चित्तं

चितास्त्वयि भोगाः। चेतयसे इति वा।

-निरु०, ५/५

चित्तमध्यात्मं चेतयितव्यम्।
-सु० उप०, ५/९

चित्तं च चेतयितव्यम्।
-प्र० उप०, ४/८, सु० उप० ६/२

चिच्चेत्यम्। -म० उप०, ४/१२१

चित्तं चेततेः। -निरु०, १/६

चित्तेन चेतयति। -ना० परि० उप०, ६/२

✓चिती-संज्ञाने।

## चित्रः

उग्र चित्र चेतिष्ठ सूनृत। -ऋ०, ८/४६/२०

चित्र चायनीयम्। -निरु०, ४/४

तवश्रियोवर्षयस्येव विद्युतश्चित्रश्चिकित्र उषसां न केतवः। -ऋ०, १०/९१/५

स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम्। -ऋ०, ६/६/७

तस्य चित्रस्य नाम करोति पाप्मानमेवास्य तदपहन्ति चित्रनामानं करोति चित्रोऽसि इति। सर्वाणि हि चित्रण्यग्निः।
-श० ब्रा०, ६/१/३/२०

✓चिती-संज्ञाने, ✓चिञ्-चयने।

## चित्रवसुः

रात्रिर्वै चित्रवसुः। सा हीयं सङ्गृह्येव चित्रणि वसति। -श० ब्रा०, २/३/४/२२, १/४/१/१७

चित्र+✓वस-निवासे।

## च्यवनः

च्यवन ऋषिर्भवति। च्यावयिता स्तोमानाम्। च्यवानमित्यप्यस्य निगमा भवन्ति।
-निरु०, ४/१९

✓च्युङ्-गतौ।

## च्यावनं

एभ्यो वै लोकेभ्य वृष्टिरपाक्रामन्तां प्रजापतिर्च्या-वनेनऽच्याव यद्यदच्यावयतच्च च्यावनस्य च्यावानत्वम्। -ता० ब्रा०, १३/५/१

च्यावनं भवति। प्रजापतिर्वै च्यावनं प्रजायते।।
-ता० ब्रा०, १३/५/११-१२

एभ्यो वै लोकेभ्यो वृष्टिरयाक्रामत्तां प्रजापतिश्च्यावनेनाच्यावयद्यदच्यावयत्तच्च्यावनस्य च्यावनत्वञ्च्यावयति वृष्टिञ्च्यावनेन तुष्टुवानः।
-ता० ब्रा०, १३/५/१३

च्यावनं भवति प्रजापतिर्वै च्यावनम्।
-ता० ब्रा०, १९/३/६

यद् उ च्यावनो भार्गवोऽपश्यत् तस्माच् च्यावनम् इत्य, आख्यायते। -जै० ब्रा०, ३/१२८

✓च्युङ्-गतौ।

## छदिश्छन्दः

अतिच्छन्दा वै छदिश्छन्दः। सा हि सर्वाणि च्छन्दांसि च्छादयति। अतिच्छन्दा ह भूत्वा सिंहा उच्चक्रमुः। -श० ब्रा०, ८/२/४/५

✓छदि-संवरणे अपवारणे।

## छन्दः

आछदि त्वा छन्दो दधो।
-मैत्र०, १/६/१४, १/६/२२

छन्दांसि छन्दयतीति वा। -दे० ब्रा०, ३/२०

छन्दांसि वाव तान् मृत्योः पाप्मनोऽछादयन्। तद् यद् एनान् छन्दांसि मृत्योः पाप्मनोऽछादयन् तत् छन्दसां छन्दस्त्वम्। छादयन्ति एवैनं छन्दांसि मृत्योः पाप्मनो य एवं वेद।
-जै० ब्रा०, १/२८४

छन्दांसि छादनात्। -निरु०, ७/१२

छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्यांचिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद। -ऐ० आ०, २/१/६

तस्मै दैवा एतदन्नं प्रायच्छन् एताच्छन्दस्याः। पशवो वै छन्दांसि अन्नं पशवः। तान्यस्मा-

ऽअच्छदयन् तानि यदस्मा अच्छदयन् तस्माच्छन्दांसि। -श० ब्रा०, ८/५/२/१

ते छन्दोभिरच्छादयन्यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वम्। -छान्दो० उप०, १/४/२

✓छदि-अपवारणे संवरणे च, ✓चदि-आह्लादने दीप्तौ च।

## छन्दोमः

तद् यच् छन्दोभ्यो निरमिमत तच् छन्दोमानां छन्दोमत्वम्। -जै० ब्रा०, ३/१७३

✓छद-अपवारणे संवरणे च, ✓चदि-आह्लादने दीप्तौ च।

## जगती

जगती गततमं छन्दो जज्जगतिर्भवति क्षिप्रगतिः। जज्जलाकुर्वन्नसृजतेति हि ब्राह्मणम्। -दे० ब्रा०, ३/१७-१८

तदिदं सर्वं जगदस्याम्। तेनेयं जगती। तज्जगतीं प्रथमामकुर्वन्। -श० ब्रा०, १/८/२/११

द्वादशाक्षरा वै जगती। अस्यां हीदं सर्वं जगत्। इयमु वा अग्निः। -श० ब्रा०, ६/२/१/२९

साऽष्टाचत्वारिंशदक्षरा जगती। इयं वै जगती। अस्या हीदं सर्वं जगत्। -श० ब्रा०, ६/२/२/३२

जगती गततमं छन्दः। जलचरगतिर्वा। जल्गल्यमानोऽसृजत्। निरु०, ७/१३

जगती गततमम्। -निरु०, ७/३२

✓गम्लृ-गतौ।

## जगुरिः

जगुरिजङ्गम्यते। -निरु०, ११/२५

✓गम्लृ-गतौ, ✓गृ-निगरणे।

## जघनं

आ जङ्घन्ति सान्वेषां जघनाँ उपजिघ्नते। -ऋ०, ६/७५/१३

जघनं जङ्घन्यतेः। -निरु०, ९/२०

✓हन्-हिंसागत्योः।

## जज्झती

आपो भवन्ति शब्दकारिण्यः। प्रदिवो जज्झतीरिव। -निरु०, ६/१६

✓जज्झ-शब्दानुकरणे।

## जठरं

जठरमुदरं भवति। जग्धमस्मिन्ध्रियते धीयते वा। -निरु०, ४/७

✓जनि-प्रादुर्भावे, ✓जग्ध (अद्)-भक्षणे+ ✓धा-धारणे।

## जनः जनासः

जनस्य गोपा अजनिष्ट जागृविः। -ऋ०, ५/११/१, यजु०, १५/२७

यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथाः यजत्राः। -ऋ०, ५/५८/४

जन मनुजातम्। -ऋ०, १/४५/१

यो अश्वमनोरन्तरग्निं जजान संवृक् समत्सु स जनास इन्द्रः। -ऋ०, २/१२/३, अथर्व०, २०/३४/३

यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः। -ऋ०, २/१२/७, अथर्व०, २०/३४/७

✓जनी-प्रादुर्भावे।

## जनश्रीः

जनश्रियं जातश्रियम्। -निरु०, ६/४

जन+✓श्रिञ्-सेवायां।

## जनिता

अधा हि त्वा जनिता जीजनद्वसो रक्षोहणं त्वा जीजनद्वसो। -ऋ०, १/१२९/११, १०/२/६

अशत्रुं हि मा जनिता जजान। -ऋ०, १०/२१/९, १०/२८/६

✓जनी-प्रादुर्भावे।

## जनित्राः

ये जाता उत वा ये जनित्राः।

-अथर्व०, २/२८/३

✓जनी-प्रादुर्भावे।

## जनित्री

देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्।

-ऋ०, १०/१३४/१-६

देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत्, इति।

-ऐ० ब्रा०, ३७/३

✓जनी-प्रादुर्भावे।

## जनिः

सुजनिमाजजान। -ऋ०, १०/२/७

आपो वै जनयोऽद्भ्यो हीदं सर्वं जायते।

-श० ब्रा०, ६/८/२/३

आपो वै जनयः। अद्भ्यो हीदं सर्वं जायते।

-श० ब्रा०, ६/८/२/३

नक्षत्राणि वै जनयः। ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि जोतींषि।

-श० ब्रा०, ६/५/४/८

जनीनाम् जायानाम्। -निरु०, १०/२१

✓जनी-प्रादुर्भावे।

## जन्तुः

अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः।

-तै० सं०, २/६/११/१२

✓जनी-प्रादुर्भावे।

## जन्म

जनस्य जन्म। -ऋ०, १/७०/१

✓जनी-प्रादुर्भावे।

## जपं

अथ यत् पुरस्तात् तूष्णीं जपं जपति? स्वर्गो वै लोको यज्ञः, तद् यत् पुरस्तात् तूष्णीं जप जपति स्वस्त्ययनमेव तत् कुरुते स्वर्गस्य लोकस्य समष्टयै। -शां० ब्रा०, १४/१

स स्तुते पवमान एतं जपं जपेत्।

-शां० ब्रा०, १२/५

✓जप-व्यक्तायां वाचि।

## जबारुः

जबारु जवमानरोहि। जरमाणरोहि। गरमाणरोहीति वा। -निरु०, ६/१७

✓जू-गतौ, ✓जव-गतौ, ✓गृ-निगरणे+✓रुह-बीजजन्मनि प्रादुर्भावे च।

## जमदग्निः

चक्षुर्वै जमदग्निर्ऋषिः। यदेनेन जगत्पश्यति, अयो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः।

-श० ब्रा०, ८/१/२/३

जमदग्नयः प्रजामिताग्नयो वा। प्रज्वलिताग्नयो वा। तैरभिहुतो भवति। -निरु०, ७/२४

जमदग्नेसप्ताहम् यद् उ जमदग्निर अपश्यत् तस्माज् जमदग्नेस् सप्ताहम् इत्य् आख्यायते। तद् एषोपगीता। -जै० ब्रा०, १/१५२

✓जमु-अदने+अग्निः।

## जयः

असुरान् जयन् यदजयन् तज्जयानां जयत्वम्।

-तै० सं०, ३/४/४/४

✓जि-जये।

## जरण्

प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता-गच्छथो गृहम्। -ऋ०, १०/४०/३

✓जृष-वयोहानौ, ✓जृ-स्तुतिकर्मा।

## जरा

जीयते पुरैनं जरसः प्राणो जहाति।

-अथर्व, ११/३/५६

जरा स्तुतिः। जरतेः स्तुतिकर्मणः।

-निरु०, १०/८

✓जृष्-वयोहानौ, ✓गृ-शब्दे स्तुतौ च।

## जराबोधः

जरा स्तुतिः। जरतेः स्तुति कर्मणः। तां बोध। तया बोधयितारिति वा। -निरु०, १०/८

जरा+✓बुध-गमने।

## जराबोधीयं

तं ह स्मैतेनैव साम्ना प्रातर् बोधयति जार बुधयस्वेति तद् एव जराबोधीयस्य जरा बोधीयत्वम्। -जै० ब्रा०, ३/१९७

जरा+✓बुध-अवगमने।

## जरामूरीयं

एतद् ह वै सत्रं जरामूरीयम् जरया वा ह्य् एवास्मान् मुच्यते मृत्युना वा।

-जै० ब्रा०, १/५१

जरा+✓मुच्लृ-मोचने।

## जरायुः

जरायु जरया गर्भस्य। जरया यूयत इति वा।

-निरु०, १०/३९

जरा+✓यु-मिश्रणामिश्रणे।

## जरिता

वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः।

-ऋ०, १/२/२

जरिता गरिता। -निरु०, १/७

✓जृष्-वयोहानौ, ✓गृ-निगरणे।

## जरूथं

जरूथं गरूथं गृणातेः। -निरु०, ६/१७

✓जृष्-वयोहानौ, ✓गृ-शब्दे।

## जल्हवः

न ज्वलनेन हीनाः। -निरु०, ६/२५

✓ज्वल-दीप्तौ।

## जसुरिः

जसुरिः जस्तमिव। -निरु०, ४/२५

✓जस्-हिंसायां।

## जहा

जहा जघानेत्यर्थः। -निरु०, ४/१

✓हन्-हिंसायां।

## जागृविः

जागृविर्जागरणात्। -निरु०, ९/८

✓जागृ-निद्राक्षये।

## जातः

अस्मात्त्वधि जातोऽसि त्वदयं जायतां पुनः।

-यजु०, ३५/२२

एषो ह देवः प्रदिशोऽनु सर्वाः, पूर्वो ह जातः स उ गर्भेऽअन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः॥

-यजु०, ३२/४

जातः जायते। -ऐ० ब्रा०, ७/२

जातं च मे जनिष्यमाणं च मे।

-काण्व सं०, १९/१७

विश्वं जातः विश्वं जनित्रं वैश्वानरं विश्वकर्मन्हुवेम। -मा० श्रौ० सू०, ८/२२/२६

✓जनी-प्रादुर्भावे।

## जातवेदः

स राजा विश्वा वेद जनिमा जातवेदाः।

ऋ०, ६/१५/१३

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम्। महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन् निहितो जातवेदाः।। -ऋ०, ३/१/२०

जन्मञ्जन्मन् निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः। तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।।

-ऋ०, ३/१/२१

अग्ने जातान् प्राणुदा नः सपत्नान् प्रत्यजातान्नुद जातवेदः। -यजु०, १५/१

सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व। -यजु० १५/२

अग्निरस्मि जन्मना जातवेदा।

-सा० पू०, ६/३/३/१२, (६१३)

अग्ने जातान् प्राणुदा मे सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व।

-अथर्व०, ७/३५/१

यत्रैषामग्ने जनिमानि वेत्थ गुहा सतामत्त्रिणां जातवेदः। -अथर्व०, १/८/४

अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः। -मै० सं०, ४/१३/७७

अन्तर्वती जन्यं जातवेद समध्वराणां जनयतं पुरोगाम। -मा० श्रौ० सू, १/५/२/३

इमांल्लोकान् जनयतेऽथायमीक्षतेऽग्निर्जातवेदाः।

-गो० ब्रा०, १/२/२०

जाता वै प्रजा अनेनाविदमिति तज्जातवेदस्यम-भवन्तज्जा वेदसो जातवेदस्त्वम्।

ऐ० ब्रा०, १३/१२

तद् यज्जातं जातं विन्दते तस्माज्जातवेदाः।

-श० ब्रा०, ९/५/१/६८

प्रजापति प्रजा असृजत, ताः सृष्टाः पराच्य एवायन्, न व्यावर्तन्त, ता अग्निना पर्यगच्छत्। ता अग्निमुपावर्तन्त, तमेवाद्याप्युपावृत्ताः, सोऽब्रवीज्जाता वै प्रजा अनेनाविदं-मिति, यदब्रवीज्जाता वै प्रजा अनेनाविदमिति, तज्जातवेदस्यमभवत् तज्जातवेदसो जातवेदस्त्वम्। -ऐ० ब्रा०, ३/३६

प्रजापतिः प्रजा असृजत ताः सृष्टाः पराच्य एवाऽऽयन्न व्यावर्तन्त ता अग्निना पर्यगच्छता अग्निमुपावर्तन्त तमेवाद्याप्युपावृताः सोऽब्रवीज्जाता वै प्रजा अनेनाविदमिति तज्जातवेदस्यमभवन्तज्जातवेदसो जातवेदस्त्वम्, इति। -ऐ० ब्रा०, १३/१२

प्राणा वै जातवेदाः स हि जातानां वेद।

-ऐ० ब्रा०, १०/८

जातवेदाः कस्मात्। जातानि वेद। जातानि वैनं विदुः। जाते-जाते विद्यत इति वा। जातवित्तो वा। जातधनः जातविद्यो वा जातप्रज्ञानः यत्तज्जातः पशूनविन्दत [इति] तज्जातवेदो जातवेदस्त्वमिति ब्राह्मणम्।

-निरु०, ७/१९

जात+✓विद्-ज्ञाने विचारणे लाभे सत्तायां च।

## जामातृ

जा अपत्यं तन्निर्माता। -निरु०, ६/९

✓जनी-प्रादुर्भावे+✓माङ (मा)-माने।

## जामिः

त्वं जामिर्जनानामग्ने मित्रो असि प्रियः।

-ऋ०, १/७५/४

जामिरन्येऽस्यां जनयन्ति जामपत्यम्। जमतेर्वा स्याद्गतिकर्मणः। निर्गमनप्राया भवति।

-निरु०, ३/६

बालिशस्य वा। समानजातीयस्य वोपजनः।

-निरु०, ४/२०

तद्यत्सामान्यामृचि समानाभिव्याहारं भवति

तज्जामि भवतीत्येकम्। -निरु०, १०/१६

✓जनी-प्रादुर्भावे।

## जाया

जनीयते जायाम्। -अथर्व०, ६/८२/३

जायां जनित्री मातरम् ये। -अथर्व०, ९/५/३०

अथ यदैव जायां विन्दते अथ प्रजायते। -श० ब्रा०, ५/२/१/१०

तज्जाया जाया भवति, यदस्यां जायते पुनः। -ऐ० ब्रा०, ७/१३

तद्यदब्रवीत आभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति, तस्माज्जाया अभवंस्तज्जायानां जायात्वं यच्चासु पुरुषो जायते। -गो० ब्रा०, १/१/२, १३/३३

वीर्यवान्हास्माज्जायते। वीर्यवन्तमु ह सा जनयति। -श० ब्रा०, १०/५/२/९

✓जनी-प्रादुर्भावे।

## जायान्यः

विद्म वै ते जायान्य जानं यतो जायान्य जायसे। -अथर्व०, ७/७६/५

✓जनी-प्रादुर्भावे।

## जारः

सखायं प्रबोधाय जरितर्जारमिन्द्रम्। -ऋ०, १०/४२/२

हविषा जारो अपाम् -ऋ०, १/४६/४

आदित्योऽत्र जार उच्यते। रात्रेर्जरयिता। अपि त्वं मनुष्यजार एवाभिप्रेतः स्यात्। -निरु०, ३/१६

जारः कनीनाम्। जरयिता कन्यानाम्। पतिर्जनीनाम्। पालयिता जायानाम्। -निरु०, १०/२१

✓जॄ-वयोहानौ।

## जालं

जालं जलचरं भवति। जले भवं वा। जलेशयं वा। -निरु०, ६/२७

✓जनि-प्रादुर्भावे।

## जितिः

जितिं अजयत्। -जै० ब्रा०, १/३

जितयो वै नामैता यदुपसदः। असपत्नां वा एताभिर्देवा विजितिं व्यजयन्त। इति। -ऐ० ब्रा०, ४/७

तेऽनेन च तपसापीनेन च वेदेन तामु एव जितिमजयन् यां प्रजापतिरजयत्॥ -जै० उ० ब्रा०, १/२/१/११

प्रजापतिर्वै साम्नेयां जितिमजयत्। यास्येयं जितिः तां स स्वर्गं लोकमारोहत्। -जै० उ० ब्रा०, १/४/२/७

या दीक्षया जितिं जयति याम् ऋद्धिम् ऋध्नोति। जयति तां जितिम्। -जै० ब्रा०, ३/३५८

विजितिं व्यजयन्त तां विजितिं विजयते स एवं वेद॥ इति। -ऐ० ब्रा०, ४/७

✓जि-जये।

## जिह्मं

जिह्मं जिहीतेः। -निरु०, ८/१५

✓ओहाक्-त्यागे।

## जिह्वा

विजेहमानः परशुर्न जिह्वाम्। -ऋ०, ६/३/४

जिह्वा कोकुवा। कोकूयमाना वर्णान्नुदतीति वा। [ काकूयतेर्वा स्याच्छब्दकर्मणः ] जिह्वा जोहुवा। -निरु०, ५/२६

✓ह्वेञ्-स्पर्द्धायां शब्दे च, ✓लिह-आस्वादने।

## जीवः

दश मासाञ्छशयानः कुमारो अधि मातरि। निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि॥
-ऋ०, ८/७८/९

रायस्पोषेण बहुला भवन्तीर्जीवाजीवान्तीः।
-अथर्व०, ३/१४/६

मधुमद् घृतवत् पिन्वमाना जीवा जीवन्तीरूप वस्सदेम। -का० सं०, १/११

✓जीव्-प्राणधारणे।

## जुष्टिः

जुष्टा भवन्तु जुष्टयः। -ऋ०, १/१०/१२

जुषी-प्रीतिसेवनयोः

## जूः

अयमेवाकाशो जूः यदिदमन्तरिक्षम्। एतं ह्याकाशमनु जवते। तदेतद्यजुर्वायुश्चान्तरक्षिं च यञ्च जूश्च। -श० ब्रा०, १०/३/५/२

✓जव्-गतौ।

## जूतिः

जूतिर्गतिः

जूतिर्गतिः। प्रीतिर्वा। -निरु०, १०/२८

✓जव्-गतौ।

## जूर्णिः

जूर्णिर्जवतेर्वा। द्रवतेर्वा। दूनोतेर्वा। क्षिप्ता जूर्णिर्न वक्षतीव्ययि निगमो भवति।
-निरु०, ६/४

✓जव-गतौ, ✓ज्वर-रोये, ✓द्रु-गतौ, ✓दुञ्-हिंसायां।

## जेमन्

जेमने जयमने। जेमना। -निरु०, १३/५

✓जि-जये।

## जोषवाक्

जोषवाकं इत्यविज्ञातनामधेयम्। जोषार्यतव्यं भवति। -निरु०, ५/२१

✓जुष्-प्रीतिसेवनयोः+✓वच्-परिभाषणे।

## ज्ञाता

ज्ञाता कस्मात्। ज्ञायतेः। -निरु०, १३/२३

✓ज्ञा-अर्वबोधने।

## ज्ञातिः

ज्ञातिः संज्ञानात्। -निरु०, ४/२१

✓ज्ञा-अवबोधने।

## ज्या

ज्या जयतेर्वा। जिनातेर्वा। प्रजावयतीषूनिति वा।
-निरु०, ९/१७

✓जि-जये।

## ज्येष्ठघ्नी

ज्येष्ठमेषामवधिष्मेति। तज्जयेष्ठघ्नी।
-तै० ब्रा०, १/५/२/७

✓जि+जये+✓हन्-हिंसायां।

## ज्योतिः

सूर्ये ज्योतिरदधुर्मास्यवक्तून् परिद्योतनिं चरतो अजस्रा। -ऋ०, १०/१२/७

यद्वै तज्ज्योतिरभवत्तत् ज्योतिषो ज्योतिष्ट्वम्।
-तां० ब्रा०, १६/१/१

अथावद्योतयति ........ ज्योति इति।
-जै० ब्रा०, १/३९

✓द्युत्-दीप्तौ।

## ज्योतिष्टोमः

कतमानि तानि ज्योतींषि? 'य एतस्य स्तोमाः इति' त्रिवृत्पञ्चदश, सप्तदश, एकविंशः। एतानि वाव तानि ज्योतींषि। य एतस्य स्तोमाः इति। -तै० ब्रा०, १/५/११/१

त्रिवृत्पञ्चदशः सप्तदश एकविंशः। एतानि वाव तानि ज्योतींषि। य एतस्य स्तोमाः।

-तै० ब्रा०, १/५/११/१

यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते। -ऐ० ब्रा०, १४/५

स्तोमे ज्योतिर्दधत इति। तस्माज्ज्योतिष्टोम इत्याख्यायते। -जै० ब्रा०, १/६६

ज्योतिष्+✓ष्टुञ्-स्तुतौ।

## ज्वलन्तं

अथ कस्मादुच्यते ज्वलन्तमिति यस्मात् स्वमहिम्ना सर्वाल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते, ज्वालयते सविता प्रसविता दीप्तौ दीपयन् दीप्यमानः ज्वलं ज्वलिता उपन्दितपन्त्संतपन्रोचनो रोचमानः शोभनः शोभमानः कल्याणस्तस्मादुच्यते ज्वलन्तमेति।

-नृ० पू० ता० उप०, २/४

✓ज्वल-दीप्तौ।

## तक्मन्

तक्मेत्युष्ण नाम। तकत इति सतः।

-निरु०, ११/२५

✓तक्-प्रसहने।

## तक्मानं

तक्मनाशन तक्मानं नाशयन्नितः।

-अथर्व०, ५/४/१

✓तक्-प्रसहने।

## तळित्

तळिदित्यन्तिकतधयोः संसृष्टकर्म। ताळयतीति सतः। -निरु०, ३/१०

✓तडि-ताडने।

## ततः

तत इति सन्तान नाम। पितुर्वा पुत्रस्य वा।

-निरु०, ६/६

✓तनु-विस्तारे।

## ततनुष्टिः

ततनिषुं धर्मसन्तानादपेतमलंकरिष्णुमयज्वानम्। तनू शुभ्रं तनू शोभयितारम्। -निरु०, ६/१९

✓तनु-विस्तारे+✓नश्-नाशने।

## ततुरिः

येषां शुष्मः पृतनासु साह्वान् प्र सद्यो द्युम्ना तिरते ततुरिः। -ऋ०, ६/६८/७

उपहूतेडा ततुरिति तदेनां प्रत्यक्षमुपह्वयते। ततुरिरिति। सर्वं ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति। -श० ब्रा०, १/८/१/२२

✓तृ-प्लवनसंतरणयोः।

## तनयं

अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड।

-ऋ०, २/३३/१४, यजु०, १६/५०

तनयं तनोतेः। -निरु०, १०/७

✓तनु-विस्तारे।

## तनित्री

तन्यतुस्तनित्री वाचोऽन्यस्याः।

-निरु०, १२/३०

✓तनु-विस्तारे।

## तनूत्यक्

तनूत्यक् तनुत्यक्ता। -निरु०, ३/१४

तनु+✓त्यज्-त्यागे।

## तनूनपात्

तनूनपात् आज्यमिति कात्थक्यः। नपादित्यननन्तरायाः प्रजाया नामधेयम्। निर्णतमा भवति। गौरत्र तनूरुच्यते। तता अस्यां भोगाः। तस्याः पयो जायते। पयस आज्यं जायते। अग्निरिति शाकपूणिः। आपोऽत्र तन्व उच्यन्ते। तता अन्तरिक्षे। ताभ्य ओषधिवनस्पतयो जायन्ते। ओषधि वनस्पतिभ्य एष जायते।

-निरु०, ८/५

तनूनपातम् यजति। ग्रीष्मो वै तनूनपाद् ग्रीष्मो हि आसां प्रजानां तनूस्तपति।

-श० ब्रा०, १/५/३/१०

प्राणो वै तनूनपात्स हि स तन्वः पाति।

-ऐ० ब्रा०, ६/४

तनूनपातं यजति प्राणो वै तनूनपात्स हि तन्वः पाति प्राणमेव तत्प्रीणाति। -ऐ० ब्रा०, २/४

तनू+न (अव्याख्यात)+✓पा-रक्षणें।

## तन्तुः

तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषे। पथो रक्ष धिया कृतान्। -ऋ०, १/४२/१

यो यज्ञस्य प्रसाधानस्तन्तुदेवेष्वाततः तमाहुतंनिशीमहि॥ -ऋ०, १०/५७/३

तन्तुं तन्वन्नजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्। -ऋ०, १०/५३/६

ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत्॥ -यजु०, ३२/१२

चतुस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते। -यजु०, ८/६१

को अस्मिन् रेतो न्यदधात् तन्तुरा तायतामिति।

-अथर्व०, १०/२/१७

तन्तुरसि प्रजाभ्यस्त्वेति, प्रजा एव पशूननुसन्तनोति। -गो० ब्रा०, २/२/१३

तस्मिन्तन्तुं परमेष्ठी ततान।

-तै० ब्रा०, २/५/२/३

त्रयस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया ददन्ते। -बौ० श्रौ० सू०, ३/१५

प्रजा वै तन्तुः प्रजामेवास्मा एतत्संतनोमि। इति।

-ऐ० ब्रा०, ११/११

समानं तन्तुं परि तातनाते।

-तै० ब्रा०, ३/१/३/१

✓तनु-विस्तारे।

## तन्त्रं

त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः। -ऋ०, १०/७१/९

✓तनु-विस्तारे।

## तपः

तपसा तं तपस्वतं ते शोचिस्तपतु।

-ऋ०, १०/१६/४

अग्ने तपस्तप्यामह उप तप्यामहे तपः।

-अथर्व, ७/६१/२

तपसा तप्यमाना। -अथर्व०, ३/१०/१२

तपिष्ठस्तपसा तपैनम्। -अथर्व०, ११/१/१६

यदग्ने तपसा तप उपतप्यामहे तपः।

-अथर्व०, ७/६१/१

आपस्तपोऽतप्यन्त, तास्तपस्तप्त्वा गर्भमदधत।

-शां० ब्रा०, २५/१

तपोऽतप्यत स तपः।

-नृ० पू० ता० उप०, १/१

तपोऽतप्यन्त तानि तपसाऽपश्यन् तेभ्य एता इष्टका उपदधति। -तै० सा०, ५/३/५/४

तप्यते तपः। -शंख स्मृति०, ५/६

तिष्ठन्नातपन्ति। तस्मादिह तप्ति तूपाः।

-तै० आ०, १/७/३

प्रजापतिः प्रजातिकामस्तपोऽतप्यत। तस्मात्तप्तात्पञ्चा- जायन्त। -शां० ब्रा०, ६/५

भृगूणामङ्गिरसां तपसा तप्यध्वम्।

-काण्व सं०, १/३०

भृगूणामङ्गिरसां तपसा तप्यध्वं।

-तै० सं०, १/१/७/७

यथाशक्तो भवति क्लेशंतस्तप्यते तप इति।

-सं० उप०, १

वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वमित्येतासामेनानि देवतानां तपसा तपति। -मै० सं०, ४/१/५२

स तपोऽतप्यत। स तपस्तत्प्वा शरीरमधुनत।

-तै० आ०, १/२३/२

संवत्सरो वाव तपो नवदशः। तस्य द्वादश मासाः, षड्तवः, संवत्सर एव तपो नवदशः। तद्यत्तमाह अभीवर्त इति। संवत्सरो हि सर्वाणि भूतान्यभिवर्तते। तदेव तद्रूपमुपदधाति।

-श० ब्रा०, ८/४/१/१४

✓तप-सन्तापे, ऐश्वर्ये, दाहे च।

## तपिष्ठः

स्वैस्तपा तपिष्ठ तपसा तपस्वान्।

-ऋ०, ६/५/४

तपिष्ठैः। तप्ततमैः। तृप्ततमैः। प्रपितष्ठतमैरिति वा। -निरु०, ६/१२

✓तप-सन्तापे।

## तपुषिः

तपुषिस्तपतेः। -निरु०, ६/३

✓तप-संतापे।

## तपुः

तपुर्मूर्धा तपतु रक्षसो ये ब्रह्मद्विषः शरवे हन्तवा उ। -ऋ०, १०/१८२/३.

तपुस्तपते। -निरु०, ६/११

✓तप-संतापे।

## तप्तः

तदभ्यश्राम्यदभ्यतपत् समतपत्, तस्य श्रान्तस्य तप्तस्य सन्तप्तस्य ललाटे स्नेहो यदार्द्यमाजायत्।

-गो० ब्रा०, १/१/१

✓तप-संतापे।

## तप्तकुयः

तप्यन्तेऽस्मै कुयानिति तप्तकुयः स्वर्गे लोके प्रतितिष्ठति। -गो० ब्रा०, २/६/१२

✓तप-संतापे।

## तप्तायनी

तप्तायनी मेऽसि इति इमामेवैतदाह। अस्यां हि तप्त एति। -श० ब्रा०, ३/५/१/२७

तप्त+✓इण्-गतौ।

## तमस्

स इत्तमोऽवयुनं ततन्वत्। -ऋ०, ६/२१/३

तमस्तनोतेः -निरु०, २/१६

✓तमु-कांक्षायां, ✓तनु-विस्तारे।

## तरणिः

द्विमाता तूर्षु तरणिर्विभूषति।

-ऋ०, १/११२/४

✓ तृ-प्लवनसंतरणयोः।

## तरस्विन्

तरसं तरस्विनम्।

-सा० पू०, ४/१/४/१ (३७०)

✓तृ-प्लवनसंतरणयोः।

## तरुतृ

सहावानं तरुतारं रथानामित्येष वै सहावांस्तरुतैष हीमांल्लोकान् सद्यस्तरति, इति।

-ऐ० ब्रा०, १८/६

तरुतारं तारयितारम्। -निरु०, १०/२८

✓तृ-प्लवनसंतरणयोः।

## तविषी

तविषीति बलनाम। तवतेः वा। वृद्धिकर्मणः। -निरु०, ९/२५

✓तु-गतिवृद्धिहिंसासु।

## तस्करः

तस्करस्तत्करोति (तत्करो भवति) यत्पापकमिति नैरुक्ताः। तनोतेर्वा स्यात्। सन्ततकर्मा भवति। अहोरात्र कर्मा वा। रशनाभिर्दशभिरभ्यधीताम् अभ्यधाताम्। ज्यायांस्तत्र गुणोऽभिप्रेतः। -निरु०, ३/१४

✓तनु-विस्तारे, +✓डुकृञ्-करणे, ✓तसु-उपक्षये+ ✓डुकृञ्-करणे, तत्+✓डुकृञ्-करणे।

## तानूनप्तृ

तनूनप्त इत्याह, तन्वो हि ते ताः समवाद्यन्तः। -गो० ब्रा०, २/२/३

ते वरुणस्य राज्ञो गृहे तनूः संन्यदधत। ते यद् वरुणस्य राज्ञो गृहे तनूः संन्यदधत तत् तानूनप्त्रमभवत् तत्तानूनप्त्रस्य तानूनप्त्रत्वम्॥ इति॥ -ऐ० ब्रा०, ४/७

यत्तन्वः समवाद्यन्त, तत् तानूनप्त्रस्य तानूनप्त्रत्वम्। -गो० ब्रा०, २/२/२

✓तनु-विस्तारे+न (नञ्) ✓पत्लृ-गतौ।

## तापश्चित्

तपो वा उपसदः। तद्यत् तपसि चीयते। तस्मात्तापश्चितः। -श० ब्रा०, १०/२/५/३

तप+✓चिञ्-चयने।

## तायुः

तायुरितिस्तेन नाम। संस्त्यानमस्मिन् पापकमिति नैरुक्ताः। तस्यतेर्वा स्यात्। -निरु०, ४/२४

✓तायृ-सन्तानपालनयोः, ✓तसु-उपक्षये।

## तारं

अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्म व्याधि जरामरण संसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम्। -अ० शि० उप०, ४

✓तृ-प्लवनसंतरणयोः।

## तारकः

गर्भजन्मजरामरणसंसारमहद्भयात् संतारयति तस्मात्तारकमिति। -अ० ता० उप०, ३

गर्भजन्मजरामरणसंसारमहद्भयात् संतारयति तस्मादुच्यते तारकम्। -रा० ता० उप०, १/२

गर्भजन्ममरणसंसारमहद्भयात्तं तारयति। तारकमित्येतत्तारकं ब्राह्मणो नित्यं महीयते। -श्री वि० ता० उप०, १/२

तारकत्वात्तारको भवति। -ता० सा० उप०, २/१

सलिलं वा इदमन्तरासीत्। यद्तरन्। तत्तारकाणां तारकत्वम्। -तै० ब्रा०, १/५/२

✓तृ-प्लवनसंतरणयोः।

## तार्क्ष्यः

तार्क्ष्यः त्वष्टा व्याख्यातः। तीर्णेऽन्तरिक्षे क्षियति। तूर्णमर्थं रक्षति। अश्नोतेर्वा। -निरु०, १०/२७

✓तृक्ष-गतौ।

## तालुः

तालु तरतेस्तीर्णतममङ्गम्। तलतेर्वा स्याद्, लम्बकर्मणो विपरीतात् यथा तलं लतेत्यविपर्य्ययः -निरु०, ५/२६

✓तृ-प्लवनसंतरणयोः।

## तिग्मं

तिग्मेन नस्तेजसा संशिशाधि।

-ऋ०, ६/१५/९

तेतिक्ते तिग्मा तु जसे अनीका।

-ऋ०, ४/२३/७

तिग्मं तेजतेः। उत्साहकर्मणः। -निरु०, १०/६

✓तिग-गतौ, ✓तिज-निशाने।

## तितउ

तितउ परिपवनं भवति। ततवद्वा। तुन्नवद्वा। तिलमात्रतुन्नमिति वा। -निरु०, ४/९

✓तनु-विस्तारे, ✓तुद्-व्यथने।

## तित्तिरिः

तित्तिरिस्तरणात्। तिलमात्रचित्र इति वा।

-निरु०, ३/१८

✓तृ-प्लवनसंतरणयोः।

## तिरस्

तिरः सत इति प्राप्तस्य। तिरस्तीर्णं भवति। सतः संसृतं भवति। -निरु०, ३/२०

✓तृ-प्लवनसंतरणयोः।

## तीर्थः

तीर्थैस्तरन्ति प्रवतो महीरिति।

-अथर्व०, १८/४/७

तीर्थेन हि प्रतरन्ति तद्यथा समुद्रं तीर्थेन प्रतरेयुः।

-गो० ब्रा०, १/५/२

✓तृ-प्लवनसंतरणयोः।

## तुग्वन्

तुग्वं तीर्थं भवति। तूर्णमेतदायन्ति।

-निरु०, ४/१५

✓तुज्-हिंसाबलादाननिकेतनेषु।

## तुञ्जः

तुञ्जः तुञ्जतेर्दानकर्मणः -निरु०, ६/१८

✓तुजि-पालने, दाने च।

## तुरः

तुरं यतीषु तुरयन्नृजिप्यः। -ऋ०, ४/३८/७

अनु ते शुष्मं तुरयन्तमीयतुः क्षाणी शिशुं न मातरा।

विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि॥ -यजु०, ३३/६७

तुर इति यम नाम। तरतेर्वा। त्वरतेर्वा। त्वरया तूर्णगतिर्यमः -निरु०, १२/१४

✓तुर्-त्वरणे, ✓तुर्व्-हिंसायाम्, ✓तृ- प्लवन-संतरणयोः।

## तुरीपं

तुरीपं तूर्णापि। -निरु०, ६/२१

✓त्वर-त्वरणे।

## तुरीयं

तुरीयं त्वरतेः। -निरु०, १३/९

✓त्वर-त्वरणे।

## तूर्णिः

तूर्णिर्हव्यवाडिति शंसति, वायुर्वै तूर्णिहव्याड्, वायुर्हीदं सर्वं सद्यस्तरति यदिदं किञ्च। वायुर्देवेभ्यो हव्यं वहति वायुमेव तदन्तरिक्षं लोकं आयातयति, इति। -ऐ० ब्रा०, १०/२

तूर्णिर्हव्यवाट्। सर्वं ह्येष पाप्मानं तरति। तस्मादाह तूर्णि हव्यवाडिडति।

-श० ब्रा०, १/४/२/१२

✓ञित्वरा-विभ्रमे, ✓तृ-प्लवनसंतरणयोः।

## तूर्णाशं

तूर्णाशमुदकं भवति। तूर्णमश्नुते।

-निरु०, ५/१६

तूर्ण+✓अशूङ्-व्याप्तौ, ✓तूरी-गतित्वरणहिंसनयोः+ ✓अशूङ्-व्याप्तौ।

## तूर्वणिः

तूर्वणिस्तूर्णवनिः। -निरु०, ६/१४

✓तुर्वी-हिंसार्थे, तुर+✓वण्-सम्भक्तौ।

## तुविक्षं

तुविक्षं बहुविक्षेपं महाविक्षेपं वा।

-निरु०, ६/३३

✓तु-गतिवृद्धिहिंसासु+✓क्षि-क्षये।

## तूतुं

तूतुं तूर्णम्। -निरु०, ५/२५

✓तु-गतिवृद्धिहिंसासु।

## तूर्यः

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः॥

-ऋ०, ८/८८/५, यजु० ३३/६६, अथर्व० २०/१०५/१, साम० ४/१/२/९ (३११)

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि॥

-ऋ०, ८/८८/६, यजु० ३३/६७, २०/१०५/२

✓तूरी-गतित्वरणहिंसनयोः ✓तृ-प्लवनसंतरणयोः।

## तृणं

यत्किञ्चित् तृन्द्यात् तृणं तत् तर्दनामिति तृणम्।

-निरु०, १/१२

✓ तृदिर्-हिंसानादरयोः।

## तृपलप्रभर्मान्

तृप्रप्रहारी। क्षिप्रप्रहारी। सृप्रप्रहारी।

-निरु०, ५/१२

✓तृप-पिपासायां+प्र+✓हृञ्-हरणे, तृपल (क्षिप्र)+ प्र+✓हृञ्-हरणे।

## तृषुः

तृष्वीति क्षिप्रनाम। तरतेर्वा। त्वरतेर्वा।

-निरु०, ६/१२

✓ञितृष-पिपासायां, ✓तृ-प्लवनसंतरणयोः।

## तृष्टिका

तृष्टिका तृष्टवन्दन उदमूं छिन्धि तृष्टिके।

-अथर्व०, ७/११३/१

✓ञितृष-पिपासायां।

## तृष्णज्

तृष्णक् तृष्यतेः -निरु०, ११/१५

✓ञितृष-पिपासायां।

## तैरश्चं

यद् उ तिरश्चिर् आंगिरसोऽपश्यत् तस्मात् तैरश्चम् इत्य आख्यायते। -जै० ब्रा०, ३/५६

✓तृ-प्लवनसंतरणयोः।

## तैरश्चयं

तिर्यङ्पर्यवैत् तस्मात् तैरश्च्यम्।

-ता० ब्रा०, १२/६/१२

✓तृ-प्लवनसंतरणयोः।

## तोकं

तोकं तुद्यतेः। -निरु०, १०/७

✓तुज-हिंसाबलादाननिकेतनेषु, ✓तुद्-व्यथने।

### तोदः

तोदस्तुद्यतेः। तोदस्येव शरण आ महस्य। तुदस्येव शरणेऽधि महतः। -निरु०, ५/६

✓तुद्-व्यथने।

### तौरयाणः

तौरयाणस्तूर्णयानः। -निरु०, ५/१५

✓तूरी-गतित्वरणहिंसनयोः +✓या-प्रापणे।

### त्राता:

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायताम-प्रयुच्छन्। -ऋ०, १/१०६/७, ४/५५/७

पातं नो मित्रा पायुभिरुत त्रायेथां सुत्रात्रा। -साम० उ०, ६/४/२

परि दध्म इन्द्रस्य समन्तं त्रातुस्त्रायतां नः। -अथर्व०, ६/९९/३

✓त्रैङ्-पालने।

### त्रि

त्रयस्तीर्णतमा सङ्ख्या। -निरु०, ३/१०

✓तृ -प्लवनसंतरणयोः।

### त्रितः

त्रितस्तीर्णतमो मेधया बभूव। अपि वा संख्यानामेवाभिप्रेतंस्यात्। एकतो द्वितस्त्रित इति त्रयो बभूवुः। -निरु०, ४/६

त्रितः त्रिस्थानः। -निरु०, ९/२५

त्रितः त्रिस्थानः। -निरु०, ९/२५

✓तृ-प्लवनसंतरणयोः।

### त्रिधा

यदीमान्त्रीनभिधत्ते तत् त्रिधेति। -शौ० उप०, २/५

त्रि+✓डुधाञ्-धारणपोषणयोः।

### त्रिधातुः

य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा। -ऋ०, १/१५४/४

त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे। -साम०पू०, १५९२

यत् त्रिः प्रायच्छत् त्रिः प्रत्यगृह्णात् तत् त्रिधातोस्त्रिधातुत्वम्। -तै० सं०, २/४/१२

त्रि+✓डुधाञ्-धारणपोषणयोः।

### त्रिवत्

उद्वद्वा एतत् त्रिवदहर्यत् तृतीयं तदेव तदभिवदति। -ता० ब्रा०, १२/५/२

त्रि+✓वद्-व्यक्तायां वाचि।

### त्रिवृत्

वायुर्वा आशुस्त्रिवृत् स एषु लोकेषु वर्तते। -श० ब्रा०, ८/४/१/९

त्रि+✓वृतु-वर्तने।

### त्रिष्टुभ्

त्रिष्टुप् स्तोभत्युत्तरपदा। का तु त्रिता स्यात्। तीर्णतमं छन्दः। त्रिवृद्वज्रः। तस्य स्तोभनीति वा। यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्त्वम्। इति विज्ञायते॥ -निरु०, ७/१२

त्रिष्टुभ् स्तोभत्युत्तरपदा। का तु त्रिता स्यात्तीर्णतमं छन्दो भवतीति। त्रिवृद्वज्रस्तस्य स्तोभिनी-वेत्यौपमिकम्॥ -दे० ब्रा०, ३/१४-१६

यदब्रवीत् त्रिरहं ष्टुब् अस्मीति तस्मात् त्रिष्टुप्। -जै० ब्रा०, १/३२४

त्रि+✓स्तुभ-स्तुतौ।

## त्रैककुभं

तद् यद् एतेषां लोकानाम् तिस्रः ककुभोऽत्राद्यम् अवारुन्धत् तत् त्रैककुभस्य त्रैककुभत्वम्।
-जै० ब्रा०, १/१८५

तांस्त्रिककुवधिनिधायाचरत्स एतत्सामापश्यत् यत्त्रिककुवपश्यत् तस्मात् त्रैककुभम्।
-ता० ब्रा०, ८/१/४

त्रि+ककुभ इति दिङ्नाम।

## त्रैतं

यद् उ त्रित आप्त्योऽपश्यत् तस्मात् त्रैतं इत्याख्यायते। -जै० ब्रा०, १/१८४

## त्रैधातवी

तद् यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याऽऽशेत तस्मात्त्रैधातवी नाम। -श० ब्रा०, ५/५/५/६

त्रै (त्रि)+✓डुधाञ्-धारणपोषणयोः।

## त्रैशोकं

इमे वै लोकाः सहसꣳस्तेषामिन्द्र एतेन कम् साम्ना शुचमपहन्त्यत्रयाणां शोचतामपा-हꣳस्तस्मात्त्रैशोकम्। -ता० ब्रा०, ८/१/९

तद् यद् एषां त्रयाणां लोकानां तिस्रश् शुचोऽपाघ्नंस् तत् त्रैशोकस्य त्रैशोकत्वम्।
-जै० ब्रा०, ३/७२

यद् उ त्रिशोकोऽपश्यत् तस्मात् त्रैशोकम् इत्य् आख्यायते। -जै० ब्रा०, ३/७४

त्रै (त्रि)+✓शुच-शोके।

## त्र्यम्बका

कस्मात्र्यमबकमिति। त्रयाणां पुराणामम्बकं स्वामिनं तस्मादुच्यते त्र्यम्बकामिति।
-त्रि० ता० उप०, ४

अम्बिका ह वै नामास्य स्वसा। तयाऽस्यैष सह भागः तद् यदास्यैष स्त्रिया सह भागः। तस्मात् त्र्यम्बका नाम। -श० ब्रा०, २/६/२/९

त्रि+✓अबि-शब्दे।

## त्वष्टा

त्वष्टा अस्मै वज्रं स्वर्यं ततक्ष।
-ऋ०, १/३२/२

त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष।
-ऋ०, १/५२/७

वाग्वै त्वष्टा वाग्घीदं सर्वं ताष्टीव।
-ऐ० ब्रा०, २/४

त्वष्टा तूर्णमश्नुत इति नैरुक्ताः। त्वषतेर्वा स्यात्। दीप्तिकर्मणः। त्वक्षतेर्वा स्यात्। करोतिकर्मणः। तस्यैषा भवति। -निरु०, ८/१३

✓त्वक्ष-तनूकरणे, ✓त्विष्-दीप्तौ ✓तक्ष-त्वचने तनूकरणे च।

## त्वेषः

त्वेष प्रतीका। भयप्रतीका। (बलप्रतीका यशः प्रतीका) महाप्रतीका दीप्तप्रतीका वा।
-निरु०, १०/२१

✓त्विष्-दीप्तौ।

## दक्षिणः

दिग्घस्तप्रकृतिर्दक्षिणो हस्तः। दक्षतेरुत्साहकर्मणः दाशतेर्वा स्याद् दानकर्मणः।
-निरु०, १/७

✓दक्ष-वृद्धौ शीघ्रार्थे च, ✓दाशृ-दाने।

## दक्षिणा

हस्ते दधे दक्षिणे दक्षिणावान्।
-ऋ०, ३/३९/६

दक्षिणाज्योतिषं ददाति। -अथर्व०, ९/५/३१

तद् यद् दक्षिणाभियज्ञं दक्षंयति, तस्माद् दक्षिणा नाम। -शां० ब्रा०, १५/१

तं देवा दक्षिणाभिरदक्षयन्। तद् यदेनं दक्षिणाभिरदक्षयंस्तस्माद् दक्षिणा नाम।
-श० ब्रा०, ४/३/४/२

दक्षाय त्व दक्षिणां प्रतिगृह्णामिति। सोऽदक्षत दक्षिणां प्रतिगृह्य। दक्षते ह वै दक्षिणां प्रतिगृह्य।
-तै० ब्रा०, ३/११/८/८

दक्षिणा दक्षतेः समर्धयतिकर्मणः व्यृद्धं समर्धयतीति। -निरु०, १/७

दक्षिणा ददाति। -गो० ब्रा०, २/१/२६

दक्षिणा यज्ञे दीयन्ते। -गो० ब्रा०, १/२/१७

यत्ततो ददाति सा दक्षिणा।
-तै० ब्रा०, २/१/५/३

यत् सायं जुहोति, रात्रिमेव तेन दाक्षिण्यं कुरुते। यत्ततो ददाति सा दक्षिणा, इति।
-तै० ब्रा०, २/१/५/२-३

यद्दक्षिणा नीयन्ते। यज्ञं वा एतद् दक्षयन्ति, तद्दक्षिणानां दक्षिणात्वम्।
-गो० ब्रा०, २/३/१७

यद्दक्षिणा दीयन्ते यज्ञं वा एतद्दक्षयन्ति, तद्दक्षिणानां दक्षिणत्वं, यत्तद्दक्षयन्ति, स्वर्गो वै लोको माध्यंन्दिनं सेवनं, यन्माध्यंदिने सवने दक्षिणा दीयन्ते। -मै० सं०, ४/८/३

स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिर-दक्षयन्। तद् यदेनं दक्षिणाभिरदक्षयन्। तस्माद्दक्षिणा नाम। -श० ब्रा०, २/२/२/२

हुतेषु दाक्षिणेषु दक्षिणा नीयन्तेऽत्रापवर्गो ह्यभिषवो भवति। अथो आत्मानमेवैतन्निष्क्रीणाति, तद् यद् दक्षिणाभियज्ञं दक्षयति, तस्माद् दक्षिणा नाम।
-शां० ब्रा०, १५/२

✓दक्ष - वृद्धौ शीघ्रार्थे च, ✓दाशृ - दाने।

## दघ्नं

दघ्नं दघ्यतेः स्रवतिकर्मणः। दस्यतेर्वा स्यात्। विदस्ततरं भवति। -निरु०, १/९

✓दघ - घातने पालने च।

## दंशः

दंशः दंशते: -निरु १/२०

✓दशि-दंशनदर्शनयो:।

## दंसिः

दंसयः कर्माणि। दंसयति एनानि।
-निरु०, ४/२४

✓दसि-दंशनदर्शनयो:।

## दण्डः

दण्डो ददातेर्धारयतिकर्मणः। अक्रूरो ददते मणिमित्यमिभाषन्ते। दमनादित्योपमन्यवः।
-निरु०, २/२

✓दद-दाने, ✓दमु-उपशमे।

## दत्तात्रेयः

अथ कस्मादुच्यते दत्तात्रेय इति। यस्मात् सुदुश्चरं तपस्तप्यमानायात्रये पुत्रकामायातितरां तुष्टेन भगवता ज्योतिर्मयेनात्मैव दत्तो यस्माच्यानुसूयायामत्रेस्तनयोऽभवत् तस्मादुच्यते दत्तात्रेय इति। -शा० उप०, ३/२

✓दद-दाने+अ (नञ्)+त्रि।

## दद्राणं

दद्राणं दमनशीलम्। -निरु०, १४/१८

✓दमु-उपशमे।

## दधिः

दधिर्यो धायि। -ऋ०, १०/४६/१

अधायीव वा अनेनेति तस्माद् दधि।
-जै० ब्रा०, २/१५७

तदस्मै (इन्द्राय) दध्यकुर्वन् तदेनमधिनोत्, तद् दध्नो दधित्वम्। -तै० सं०, २/५/३/४

दधि मां धिनोतु। -तै० ब्रा०, ३/७/६/१३

पय एव सद्, इन्द्रस्यैव सत्, तत् पुनर्ननिवाचक्षते। यदब्रवीद्धिनोति मेति। तस्माद्दधि।
-श० ब्रा०, १/६/३/६

✓दध-धारणे।

## दधिक्रा

दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा। दधद् आकारी भवतीति वा।

-निरु०, २/२८

दधि+✓क्रमु-पादविक्षेपे।

## दध्यङ्

दध्यङ् प्रत्यक्तो ध्यानमिति वा। प्रत्यक्तमस्मिन्ध्यानमिति वा।

-निरु०, १२/३३

✓ध्यै-चिन्तायां+✓अञ्चु-गतिपूजनयोः।

## दनः

दानमनसो नो मनुष्यान्। -निरु०, ६/३१

✓दा-दाने।

## दभ्रं

दभ्रं दभ्नोतेः। सुदम्भं भवति।

-निरु०, ३/२०

✓दम्भु-दम्भने।

## दमूना

दमूना दममना वा। दानमना वा। दान्तमना वा। अपि वा दम इति गृहनाम। तन्मनाः स्यात्।

-निरु०, ४/४

✓दमु-उपशमे, दमु+मनः।

## दर्भाः

या वै वृत्राद्बीभत्समाना आपो धन्व दृभन्त्य उदायन् ते दर्भा अभवन्। द् दृभन्त्य उदायन् तस्माद्दर्भाः। -श० ब्रा०, ७/२/३/२

✓दृभी-ग्रन्थे, भये च, ✓दृ-विदारणे।

## दर्मन्

अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः -ऋ०, १/१३२/६, यजु०, ८/५३

✓दृ-विदारणे, ✓दृ-भये।

## दर्शपूर्णमास

एष एव पूर्णमाः। यच्चन्द्रमाः। एतस्य ह्यनु पूरणं पौर्णमासीत्याचक्षते। अथैष एव दर्शो य एष तपति। -श० ब्रा०, ११/२/४/२

एष वै पूर्णमाः। य एष तपति। अहरहर्ह्येवैष पूर्णः। अथैष एव दर्शः। यच्चन्द्रमाः। एष पूर्णमाः।

-श० ब्रा०, ११/२/४/१

दर्श >✓दृशिर-प्रेक्षणे+पूर्ण>✓पृ-पालनपूरणयोः। मास>✓मा-माने, दर्श+पूर्ण+ मास > दर्शपूर्णमास।

## दशन्

दश दस्ता। सङ्ख्या। दृष्टार्था वा।

निरु०, ३/१०

✓दशि-दंशनदर्शनयोः, ✓दस-सङ्घाते।

## दशहोता

ब्रह्माऽऽत्मन्वदसृजत। तदकामयत। समात्मना। पद्येयेति। आत्मन्नात्मन्नित्यामन्त्रयत तस्मै दशमं हूतः प्रत्यश्रृणोत्। स दशहूतोऽभवत्। दशहूतो ह वै नामैषः। तं वा एतं दशहूतं सन्तम् दशहोतेत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। -तै० ब्रा०, २/३/१

दश+✓हु-दानादानयोः।

## दस्मः

न क्षीयन्ते नोप दस्यन्ति दस्म।

-ऋ०, १/६२/१२

✓दसु-उपक्षये।

## दस्युः

दस्युर्दस्यतेः। क्षयार्थात्। उपदस्यन्त्यस्मिन्रसाः। उपदासयति कर्माणि। -निरु०, ७/२३

✓दसु-उपक्षये।

## दहनं

अग्निरिवास्य दहतो दावस्य दहतः पृथक्।

-अथर्व०, ७/४५/२

✓दह्-भस्मीकरणे।

## दाक्षायणयज्ञः

स वै दक्षो नाम तद् यदनेन सोऽग्रेऽयजत, तस्माद् दाक्षायणयज्ञो नाम।

-श० ब्रा०, २/४/४/२, श० ब्रा०, १/३/४/१

✓दक्ष-वृद्धौ शीघ्रार्थे च+✓यज्- देवपूजासंगति-करणदानेषु।

## दाता

देवो न सविता वसोर्दाता वस्वदात्।

-यजु०, ४/१६

कोऽदात्कस्माऽअदात् कामोऽदात् कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥

-यजु०, ७/४८

अग्निर्वै दाता, वैष्णवाः पुरुषाः तदस्माऽअग्निर्दाता पुरुषान् ददाति।

-श० ब्रा०, ५/२/५/२

क इदं कस्मा अदात्कामः कामायादात्कामो दाता। -ता० ब्रा०, १/८/१७

दाता ददातु दाशुषे।

-आ० गृ० सू०, १/१४/३

✓डुदाञ्-दाने।

## दात्रं

सुदामन्तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः। -ऋ०, ६/२०/७

✓डुदाञ्-दाने।

## दानं

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते।

-पा० स्मृति, १/२८

तस्यैव दीयते दानम् यदीच्छेच्छ्रेय आत्मनः

-अ० स्मृति, ३४०

दद्याद् दानं द्विजातिभ्यः। -हा० स्मृति, २/१

दानं दद्याच्चैवेतेषा प्रशस्तं स्वर्गसाधनम्।

-पा० स्मृ०, २/१०

यत्प्रदीयते तद् दानं प्रोच्यते मया।

-जा० उप०, २/७

यद्दानं दीयते तस्मै। -पा० स्मृ०, १२/४७

यद्दानं दीयते भक्त्या तद्भवेत्सुमहत्फलम्।

-सं० स्मृति, ४९

✓डुदाञ्-दाने।

## दानवः

आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः। -ऋ०, ५/५३/६

तं दनुश्च दनायुश्च मातेव च पितेव च परिजगृहतुः तस्माद् 'दानव' इत्याहु।

-श० ब्रा०, १/६/३/९

दानवं दानकर्माणम्। -निरु०, १०/९

✓डुदाञ्-दाने, ✓दो-अवखण्डने।

## दानुः

कल्याणदानाः। -निरु०, ६/२३

✓डुदाञ्-दाने, ✓दो-अवखण्डने।

## दारुः

दारु दृणातेर्वा, द्रूणातेर्वा, तस्मादेव द्रु।

-निरु०, ४/१५

✓दृ-विदारणे, ✓द्रूञ्-हिंसायाम्।

## दावन्

दावने दानस्य। -निरु०, ४/१८

✓डुदाञ्-दाने।

## दाशपत्यं

तस्मै विजित्यासीनाय दशपतये-दशपतय आ

इत्य् एवोद्धारान् उदाहरन्। तद् एव दाशस्पत्यत्वम्। -जै० ब्रा०, १/१७२

दश+पतिः।

## दाशुष्

ददाति दाशुषे वसूनि। -ऋ०, ७/२७/३

दधासि दाशुषे। -ऋ०, १०/२१/६, ७/२७/३

दाश्वांसो दाशुषः सुतम्। -ऋ०, १/३/७

नकिः परिष्टिर्मघवन्मघस्य ते यद्दाशुषे दशस्यसि। -ऋ०, ८/७७/११

पराददाति दाशुषे। -ऋ०, १/८१/६

ततो ददाति दाशुषे वसूनि। -अथर्व०, १९/५/१

ततो ददाति दाशुषे वसूनि। -सा० पू०, ६/३/१/२, (५८७)

✓दाशृ-दाने।

## दासः

दासो दस्यतेः, उपदासयति कर्माणि। -निरु०, २/१७

✓दसु-उपक्षये, ✓दसि-दर्शनदंशनयोः।

## दिप्सुः

दिप्सन्ति दिप्सवः -ऋ०, १/२५/१४

✓दिप्स (दम्भु)-दम्भने।

## दिद्युत्

दिद्युत् द्युतेर्वा द्योततेर्वा। -निरु०, १०/७

✓द्युत्-दीप्तौ।

## दिवः

दिव द्योतनात्। -निरु०, २/२०

अद्युतद् इव वा अद इति तद्दिवो दिवत्वम्। -जै० ब्रा०, २/२८८, -ता० ब्रा०, २०/१४/२

✓दिवु-क्रीडाविजिगीषाव्यवहारद्युतिस्तुति-मोदमदस्वप्नकान्तिगतिषु।

## दिविष्टिः

दिविष्टिषु दिव एषणेषु। -निरु०, ६/२२

दिव्+✓इषु-इच्छायां।

## दिव्यः

दिव्यो दिविजः -निरु०, ७/१८

✓दिवु-क्रीडाविजिगीषा... गतिषु।

## दिश्

दिशतेः। आसदनात्। अपि वाऽभ्यसनात्। -निरु०, २/१५

✓दिश-अतिसर्जने।

## दीक्षा

अथातः कैशिनी दीक्षा। केशी ह दार्भ्यो दीक्षितो निषसाद। -शां० ब्रा०, ७/४

अशरीराभिः प्राणदीक्षाभिर्दीक्षते। -शां० ब्रा०, ७/१

पृथिवी दीक्षा। तयाग्निर्दीक्षया दीक्षितः। ययाऽग्निर्दीक्षया दीक्षितः तया त्वा दीक्षया दीक्षयाति।... आपश्चौषध यश्च ऊर्क् च सूनृता च तास्त्वा दीक्षमाणमनु दीक्षयन्ताम्। -तै० ब्रा०, ३/७/७/४-८

सैषानुपूर्व दीक्षा, तद्य एवं दीक्षन्ते दीक्षिमाणा एव ते संत्रिणां प्रायश्चित्तं न विन्दते। -गो० ब्रा०, १/४/६

✓दीक्ष-मौण्ड्येज्योपनयननियमव्रतादेशेषु, दी (धीः) +✓क्षि-निवासगत्योः।

## दीक्षितः

तद् यद् दिग्भिर् ईक्षितस् तस्माद् दीक्षितः। -जै० ब्रा०, २/५२

यस्यैता दीक्षन्ते स दीक्षितः।

-शां० ब्रा०, ७/४

श्रेष्ठां धियं क्षियतीति, तं वा एतं दीक्षितं सन्तं दीक्षित इत्याचक्षते परोक्षेण।

-गो० ब्रा०, १/३/९

स वै धीक्षते। वाचो हि धीक्षते। यज्ञाय हि धीक्षते। यज्ञो हि वाक्। धीक्षितो ह वै नामैतत् यद् दीक्षित इति।

-श० ब्रा०, ३/२/२/२०, श० ब्रा०, ४/२/२/३०

✓दीक्ष-मौण्ड्येज्योपनयननियमव्रतादेशेषु, दी (धीः), ✓क्षि-निवासगत्योः।

## दीधितिः

दीधितयोऽङ्गुलयो भवन्ति। धीयन्ते कर्मसु।

-निरु०, ५/१०

✓दीधीङ्-दीप्तिदेवनयोः, ✓धा-धारणे।

## दीप्ताग्रः

अस्य ह्यसावग्रे दीप्यतेऽमुष्य वा अतः। तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी दीप्ताग्र इति। दीप्ताग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद। -जै० उ० ब्रा०, २/२/२/२

✓दीपी-दीप्तौ+अग्र।

## दीर्घं

तेऽब्रुवन् स्वर्गं लोकं गत्वा दीर्घं वाव नो भूत्वेदं साम स्वर्गं लोकं अवाक्षीत् इति। तद् एव दीर्घस्य दीर्घत्वम्। -जै० ब्रा०, ३/१६२

दीर्घं द्राघतेः। -निरु०, २/१६

✓द्राघृ-आयामे।

## दुघा

तुभ्यं धेनुः सबर्दुघा विश्वावसूनि दोहते।

-ऋ०, १/३४/४

ऋतस्य धाराः सुदुघा दुहानाः।

-ऋ०, ७/४३/४

इषं दुहन्सुदुघां विश्वधायसम्।

-ऋ०, १०/१२२/६

रोदसी दुघे दुहे धेनुः सरस्वती।

-यजु०, २१/३४

✓दुह-प्रपूरणे।

## दुर्वर्तुः

दहतिकर्मा। दुर्वर्तुर्दुर्वारः। -निरु०, ४/१७

दुर्+✓वृ-वरणे।

## दुराशः

ते ऽब्रुवन् दुराशं बतेदं देवा अक्रतेति। तद् एव दुराशस्य दुराशत्वम्। -जै० ब्रा०, २/९९

दुर्+✓अश-भोजने।

## दुरोणः

दुरोण इति गृहनाम (दुरोण) दुखा भवन्ति, दुस्तर्याः। -निरु०, ४/५

दुस्+✓अव-रक्षणे।

## दुःष्वप्न्यं

दुःष्वप्न्यं सर्वं द्विषते सं नयामसि।

-अथर्व०, ६/४६/३

दुर्+✓ञिष्वप्-शये।

## दुहितृ

दुहिता दुर्हिता। दूरे हिता। दोग्धेर्वा।

-निरु०, ३/४

## दूरोहणं

दूरोहणं रोहति। स्वर्गो वै लोको दूरोहणम्। स्वर्गमेव तल्लोकं रोहति य एवं वेद। यदेव दूरोहणम् असौ वै दूरोहोयोऽसौ तपति। कश्चिद्वा अत्र गच्छति। स यद्दूरोहणं रोहत्येतमेव तद्रोहति।

हंसावत्या रोहति। हंसः शुचिषदित्येष वै हंस शुचिषत्। -ऐ० ब्रा०, १८/६

दुर्+✓रुह-बीजजन्मनिप्रादुर्भावे च।

## दूरोह्णं

तासु जगतीषु दूरोह्णं रोहति। जागतो वा एष य एष तपति, यजमाना दूरोह्णः, एतमेव यद् यजमाना रोहन्ति। -शां० ब्रा०, २५/७

दुर्+✓रुह-बीजजन्मनि प्रादुर्भावे च।

## दूः

होचुः क्वनु सोऽभूद्यो न इत्थमसक्तेत्यय-मास्येऽन्तरिति सोऽपास्य आङ्गिरसोऽङ्गानां हि रसः। सा वा एष देवता दूर्नाम दूरं ह्यस्या मृत्युः। दूरं ह वो अस्मान्मृत्युर्भवति एवं वेद। -बृ० उप०, १/३/८/९

✓दु-गतौ, ✓दुदु-उपतापे।

## दूढी

दूढ्यः दुधियः पापधियः। -निरु०, ५/२३

दुर्+✓ध्यै-चिन्तायां।

## दूतः

प्र यो वां मित्रावरुणाजिरो दूतो अद्रवत्। -ऋ०, ८/१०१/३

दूतो जवतेर्वा। द्रवतेर्वा। वारयतेर्वा। -निरु०, ५/१

✓दु-गतौ, ✓दुदु-उपतापे।

## दूरं

दूरं कस्मात्? द्रुतं भवति। दुरयं वा। -निरु०, ३/१९

दुर्+✓इण्-गतौ।

## दूर्वा

यदब्रवीदधूर्वीन्मेति तस्माद्धूर्वा। धूर्वा ह वै तां दूर्वेत्याचक्षते। -श० ब्रा०, ७/४/२१/२

✓दुर्वी-हिंसायां।

## दृढं

इन्द्रेण रोचना दिवो दृढानि दृंहितानि च। स्थिराणि न परा णुदे। -ऋ०, ८/१४/९

✓दृहि-बृद्धौ।

## दृहळं

दृहळानि दर्द्रत्। -ऋ०, ६/१७/५

✓दृ-विदारणे।

## देवः

आ देवो ददे बुध्न्या वसूनि। -ऋ०, ७/६/७

देवान्देवयते यज। -ऋ०, १/१५/१२

देवन्देवं वोऽवसे देवन्देवमभिष्टये। देवन्देवं हुवेम वाजसातये गृणन्तो देव्या धिया॥ -यजु०, ३३/९१

देवं बर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवं देवमवर्धयत्। -यजु०, २८/४४

देवा ददतु भर्तवे। -अथर्व०, ३/५/३

तेन देवानसृजत, तद्देवानां देवत्वं स यस्तद्देवानां देवत्वं वेद दिवा ह वा अस्मै देवत्रा भवति। -मै० सं०, ४/२/१

तेन मे ज्वल। तेन मे दीदिहि। यावद्देवाः। -तै० ब्रा०, ३/१०/३/१

दिदीहि देव देवयुम्। -सा० पू०, ६/२/४/२, (५७९)

दिवा देवत्राऽभवत्। तदनु देवानसृजत। तद्देवानां देवत्वम्। -तै० ब्रा०, २/३/८/३

दिवा वै नोऽभूदिति तद्देवानां देवत्वम्। -तै० ब्रा०, २/२/९/२

देवो दानाद्वा। दीपनाद्वा। द्योतनाद्वा। द्युस्थानो भवतीति वा। यो देवः सा देवता। -निरु०, ७/१५

यद्दिवा देवानसृजत तद्देवानां देवत्वम्।

-ष० ब्रा०, ५/१/१

वह देवान् देवायते।

-मै०, १/२/५८, मैत्रा०, १/२/१०१

अध्वरे देवान् देवयतै यज।

-सा० पू०, २/१/१/४

✓दिवु-क्रीडाविजिगीषाव्यवहारद्युतिस्तुति मोदमद-स्वप्नकान्तिगतिषु,✓दा-दाने, ✓दीवी-दीप्तौ, ✓दीप-द्योतने।

## देवगोपाः

देवी गोप्त्री देवान् गोपायत्विति। देवा एनां गोपायान्त्विति वा। -निरु०, ११/४६

देव+✓गुप-रक्षणे।

## देवजूतं

देवजूतं देवगतं देवप्रीतं वा। -निरु०, १०/२८

देव+✓जू-सौत्र धातु, देव+✓जू-गतौ।

## देवपीयु

पियारुं देवपीयुम्। पीयतिर्हिंसाकर्मा।

-निरु०, ४/२५

देव+✓पीङ्-पाने, ✓पी-हिंसने।

## देवयजन्

अथातो देवयजनान्यात्मा देवयजनं श्रद्धा देवयजमृत्विजो देवयजनं भौमं देवयजनं तद् वा आत्मा देवयजनं यदुपव्यायच्छमानो वाऽनुपव्यायच्छमानो वा शरीरमधि वसत्येष यज्ञ एषः यजत एतं यजन्त एतद् देवयजनम्।

-गो० ब्रा०, १/२/१४

यद्वै तद्यज्ञमविन्दस्तद्देवयजनस्य देवयजनत्वम्।

-मैत्रा०, ३/८/११

देव+✓यज-देवपूजासंगतिकरणदानेषु।

## देवरः

देवरः कस्मात्? द्वितीयो वर उच्यते। देवरो दीव्यतिकर्मा। -निरु०, ३/१५

✓दिवु-क्रीडाविजिगीषादिषु।

## देववयोनाधा

प्राणा वै देवा वयोनाधाः। प्राणैर्हीदं सर्वं वयुनं नद्धम्। -श० ब्रा०, ८/२/२/८

देव+वयस्+✓नाधृ-याच्ञोपतापैश्वर्याऽऽशीःषु, ✓णह-बन्धने।

## देववाहनः

अश्वो न देववाहनः इति। अश्वो ह वा एष भूत्वा देवेभ्यो यज्ञं वहति।

-श० ब्रा०, १/४/१/३०

देव+✓वह-प्रापणे।

## देवश्रुतं

तदेतद्देवश्रुत्साम। सर्वा ह वै देवताः शृण्वन्ति।

-जै० उ० ब्रा०, १/३/४/३

देवश्रुतं देवा एनं शृण्वन्ति। -निरु०, २/१२

देव+✓श्रु-श्रवणे।

## देवसूः

एता ह देवताः सुताः एतेन सवेनयेनैतत्सोष्यमाणो भवति। ता एवैतत्प्रीणाति। ता अस्मा इष्टाः प्रीता एवं सवमन्युमन्यते। ताभिरनुमतः सूयते।

-श० ब्रा०, ९/४/३/१२

एता ह वैः देवाः सवस्येते। तस्माद्देवस्वो नाम। तदेनमेता एव देवताः सुवते। ताभिः सूतः श्वः सूयते। -श० ब्रा०, ५/३/३/१.३

तद् यदेता देवताः सुताःएतेन सवेन, यद्धैनमेता देवता एतस्मै सवाय सुवतेतस्मादेता देवस्वः।

-श० ब्रा०, ९/४/३/१२

यस्मै वै सवाय सूयतेयेन वा सवेन सूयतेतदस्य द्वितीयं नाम। -श० ब्रा०, ९/४/३/१३

देव +✓षू - प्रेरणे।

## देवस्थानं

तस्मिन् यत् स्वर्गे लोके (देवाः) समतिष्ठन्त तद् व एव देवस्थानस्य देवस्थानत्वम्।

-जै० ब्रा०, ३/२५५

देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन् स्वर्गेलोके प्रतितिष्ठामेत्येतत्।

-ता० ब्रा०, १५/3/२९

तद् यद् एतेनास्थापयंस् तद् देवस्थानस्य देवस्थानत्वम्। -जै० ब्रा०, ३/२५५

देव+✓ष्ठा-गतिनिवृत्तौ।

## देवहूतिः

देवहूतयः। ये देवानाह्वयन्त। -निरु०, ५/२५

देव+✓ह्वेञ्-स्पर्द्धायां शब्दे च।

## देवापि

देवापिर्देवानामप्त्या स्तुत्या च प्रदानेन च।

-निरु०, २/११

देव+✓आप्लृ-व्याप्तौ।

## देवाव्यं

देवाव्यम् इति। यो देवानवदित्येतत्।

-श० ब्रा०, ६/३/१/२०

देव+✓अव-रक्षणे।

## देविकाः

छन्दांसि देव्यः। अथैष कः प्रजापतिः। तद्यद्देव्यश्च कश्च तस्माद्देविकाः।

-श० ब्रा०, ९/५/१/३९

✓दिवु-क्रीडाविजिगीषादिषु।

## देवी

जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः।

-अथर्व०, ७/४६/१

आपो ह मह्यं तद् देवीर्ददन् हृद्द्योतभेषजम्।

-अथर्व०, ६/२४/१

✓दिवु-क्रीडाविजिगीषादिषु, ✓दा-दाने।

## देवेद्धः

अग्निर्देवेद्ध इति शंसत्यसौ वा अग्निर्देवेद्ध एतं हि देवा इन्धते। -ऐ० ब्रा०, १०/२

देवा ह्येतमग्र ऐन्धत। तस्मादाह देवेद्ध इति।

-श० ब्रा०, १/४/२/५

देव+✓ञिन्धी-दीप्तौ।

## दैर्घश्रवस्

यद् उ दीर्घश्रवा अपश्यत् तस्माद् दैर्घ्यश्रवसम् इत्य् आख्यायते। -जै० ब्रा०, ३/२/५/७

दीर्घश्रवा वै राजन्य ऋषिर्ज्योगपरुद्धोऽश-नायंश्चरन् स एतद्दैर्घश्रवसमश्यत्।

-तां० ब्रा०, १५/३/२५

दीर्घ+✓श्रु-श्रवणे, दीर्घश्रवसीय साम।

## दैवानीकं

ततो वै तेऽग्निर्दैवानीकेनासुरान् अजयन्। तद् एव दैवानीकस्य दैवानीकत्वम्।

-जै० ब्रा०, ३/२७५

✓दिवु-क्रीडाविजिगीषादिषु।

## दैवोदासं

यद् उ दिवोदासो वाध्यश्विर् अपश्यत् तस्माद् दैवोदासम् इत्य् आख्यायते।

-जै० ब्रा०, १/२२२

दैव+✓दसु-उपक्षये।

## दोग्ध्री

दोग्ध्री धेनुरित्याह। धेन्वामेव पयो दधाति। तस्मात्पुरा दोग्ध्री धेनुरजायत।

-तै० ब्रा०, ३/८/१३/१

✓दुह-प्रपूरणे+✓धा-धारणे।

## दोः

दोः शिताम भवति। दो द्रवतेः।

-निरु०, ४/३

✓दसु-उपशमने।

## दोहः

दुहे सायं दुहे प्रातर्दुहे मध्यन्दिनं परि।
दोहा ये अस्य संयन्ति तान् विद्मानुपदस्वतः।
-अथर्व०, ४/११/१२

नास्मै पृश्निं वि दुहन्ति येऽस्या दोहमुपासते।
-अथर्व० ५/१७/१७

वृषा वृष्णे दुदुहे दोहसा दिवः।
-अथर्व०, १८/१/१८

सर्वं दोहमदुहन्। -गो० ब्रा०, २/३/९

✓दुह-प्रपूरणे।

## दोहादोहीयं

अथ दोहादोहीयं दुग्ध्या एव एतस्याह्नो दोहाय।
-जै० ब्रा०, २/१३

दोह+✓दुह-प्रपूरणे।

## द्यावापृथिवी

अतो भूरत आ उत्थितं रजोतो द्यावापृथिवी अप्रथेताम्।
-ऋ०, १०/१४९/२

✓द्युत्-दीप्तौ+✓पृथु-विस्तारे।

## द्युः

दोषावस्तर्दीदिवांसमनु द्यून्। -ऋ०, ४/४/८

द्युरित्यह्नो नामधेयम्। द्योतते इति सतः।
-निरु०, १/६

✓द्युत्-दीप्तौ।

## द्युत्

द्योतनवान्। -नि०, ६/१९

✓द्युत्-दीप्तौ।

## द्युम्नः

द्योततेः, यशो वा, अन्नं वा। -निरु०, ५/५

✓द्युत्-दीप्तौ।

## द्यौ

अग्ने दीदयसि द्यवि। -ऋ०, ८/४४/२९

तृतीयमूर्द्धमुदास्यत् तत् द्यौरभवदद्युतदिव वा अद इति तद्दिवो दिवत्वम्।
-ता० ब्रा०, २०/१४/२

दिवि देवास् आसते। -ऋ०, १/१९/६

✓द्युत्-दीप्तौ।

## द्रप्सः

द्रप्सः संभृतः। प्सानीयो भवति।
-निरु०, ५/१४

✓द्रप-हर्षमोहनयोः।

## द्रविः

विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत्। -ऋ०, ६/३/४

✓द्रु-गतौ।

## द्रविणं

धनं द्रविणमुच्यते। यदेनमभिद्रवन्ति। बलं वा द्रविणं वा। यदेनेनाभिद्रवन्ति। -निरु०, ८/१

✓द्रु-गतौ।

## द्रविणोदाः

द्रविणोदा द्रविणसः। -ऋ०, १/१५/७

द्रविणोदा ददातु नो वसूनि।
-ऋ०, १/१५/८

द्रविणं ह्येभ्यो ददाति।
-श० ब्रा०, १/३/३/१३

द्रविणोदाः कस्मात्। धनं द्रविणमुच्यते। यदेनमभिद्रवन्ति। बलं वा द्रविणम्। यदेनेनाभिद्रवन्ति। तस्य दाता द्रविणोदाः। द्रविणोदाः। यस्त्वम्। द्रविणस इति द्रविणसादिन इति वा। द्रविणमानिन इति वा।

द्रविणसस्तस्मात्पिबत्विति वा। यज्ञेषु देवमीळते। याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा। तत्को द्रविणोदाः इन्द्र इति क्रौष्टुकिः स धनबलयोर्दातृतमः। तस्य च सर्वा बलकृतिः। अथाप्यग्निं द्राविणोदसमाह। एष पुनरेतस्माज्जायते। अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति। तेषां पुनः पात्रस्येन्द्रपानमिति भवति। अथाप्येनं सोमपानेन स्तौति। अयमेवाग्निद्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः। प्रवादा भवन्ति। यथो एतत्स बलधनयोर्दातृतम इति सर्वासु देवतास्वैश्वर्यं विद्यते। यथो एतदोजसो जातमुत मन्य एनमिति चाहेति। अयमप्यग्निरोजसा बलेन मथ्यमानो ज़ायते। तस्मादेनमाह सहसस्पुत्रं सहसः सूनुं सहसो यहुम्। यथो एतदग्निं द्राविणोदसमाहेति ऋत्विजोऽत्र द्रविणोदस उच्यन्ते। हविषो दातारस्ते चैनं जनयन्ति। यथो एतत्तेषां पुनः पात्रस्येन्द्रपानमिति भवतीति भक्तिमात्रं तद्भवति। यथा वायव्यानीति सर्वेषां सोमपात्राणाम्। यथो एतत्सोमपानेनैनं स्तौतीस्यस्मिन्नप्येतदुपपद्यते। यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इत्यस्यैव तद्भवति॥

-निरु०, ८/१, २

द्रविणः+✓डुदाञ्-दाने।

## द्रापिः

एष वै द्रापिः। एष वै तं द्रापयति, यं दिद्रापयति।

-श० ब्रा०, ९/१/१/२४

✓द्रा-कुत्सायां गतौ, ✓द्रै-स्वप्ने+✓पा-रक्षणे।

## द्रोणं

द्रोणं द्रुममयं भवति। -निरु०, ५/२६

✓द्रु-गतौ।

## द्रुघणः

द्रुघणो द्रुममयो घनः। -निरु० ९/२३

✓द्रुह-जिज्ञांसायां।

## द्वारः

अपावृणोदिष इन्द्रः परीवृता द्वारः इषः परीवृताः।

-ऋ०, १/१३०/३

द्वारो जवतेर्वा। द्रवतेर्वा। वारयतेर्वा।

-निरु०, ८/९

विष्णुर्वै देवानां द्वारपः स एवास्मा तद्द्वारं विवृणोति॥ इति॥ -ऐ० ब्रा०, ५/४

✓वृञ्-वरणे।

## द्वि

द्वौ द्रुततरा संख्या। -निरु०, ३/१०

✓द्रु-गतौ।

## द्विता

द्विता द्वैधम्। -निरु०, ५/३

✓द्रु-गतौ।

## द्विबर्हस्

द्विबर्हाः द्वयोः स्थानयोः परिवृढः। मध्यमे च स्थान उत्तमे च। -निरु०, ६/१७

द्वि+✓बृह-बृद्धौ।

## द्वैगतं

स यद् अयास्योऽमुष्माल्लोकाद् इमं लोकं आगच्छद्, अस्माल्लोकाद् अमुं लोकं अगच्छत् स इमौ लोकौ द्विर् अनुसमचरत् तद् द्वैगतस्य द्वैगतत्वम्। -जै० ब्रा०, ३/२१६

द्वैगतं भवति। द्विगद्वा एतेन भार्गवो द्विः स्वर्गं लोकमगच्छदागत्य पुनरगच्छत् द्वयोः कामयोरवरुध्यै द्वैगतं क्रियते।

-तां० ब्रा०, १४/९/३१-३२

द्वि+✓गम-गमने।

## धनं

यदुदीरत आजयो धृष्णवे धीयते धना।

-ऋ०, १/८१/३

ददुरस्मै दधिरे कृत्नवे धनम्।

-ऋ०, २/१३/१०

इदं धनं नि दधे ब्राह्मणेषु।

-अथर्व०, ११/१/२८

धिनोतु प्रजया धनेन। -काण्व सं०, ३/७१

धनं कस्मात्। धिनोतीति सतः। -निरु०, ३/९

✓डुधाञ्-धारणपोषणयोः।

## धनुः

धनुर्हस्तादाददानो। -ऋ०, १०/१८/९

धारया धनुः। -अथर्व०, ७/५०/९

धनुर्धन्वतेर्गतिकर्मणः। वधकर्मणो वा। धन्वन्त्यस्मादिषवः। -निरु०, ९/१६

✓धृ-धारणपोषणयोः, ✓धन-धान्ये।

## धन्वन्

धन्वन्तरिक्षम्। धन्वन्त्यस्मादापः। -निरु०, ५/५

✓धवि-गत्यर्थः।

## धरुणी

मूर्द्धासि राड् ध्रुवासि धरुणा धर्य्यसि धरणी। आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा।।

-यजु०, १४/२१

✓धृञ्-धारणे।

## धरुणं

उपसृजन् धरुणं मात्रे धरुणो मातरं धयन्। रायस्पोषमस्मासु दीधरत् स्वाहा।

-यजु०, ८/५१

तद् यत्तमा धरुण इति।

यदा ह्येवैषोऽस्तमेति अथेदं सर्वं ध्रियते।

-श० ब्रा०, ८/४/१/१२

धरुणं धिष ओजसा। -ऋ०, १/५६/६

धर्ता ह त्वा धरुणो धारयाता।

-अथर्व०, १८/३/२९

अथ यद्धरुण एकविंश इत्यसौ हि स आदित्यः। एतस्मिन् वा इदं सर्वं धृतम्।

-जै०ब्रा०, ३/३०९

✓धृञ्-धारणे।

## धर्मन्

अतो धर्माणि धारयन्। -काण्व सं०, ३३/३१

एष वै धर्मः। य एष तपति। एष हीदं सर्वं धारयति। एतेनेदं सर्वं धृतम्।

-श० ब्रा०, १४/२/२/२९

तद्यद् धृङ्ङित्यपतत्। तस्माद्धर्मः।

-श० ब्रा०, १४/१/१/१०

धर्म्म भवति धर्मस्य धृत्यै।

-ता० ब्रा०, १४/११/३५

धर्माणि धारयन्। -ऋ०, १/२२/१८

धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय।। -यजु०, ३८/१४

✓धृञ्-धारणे।

## धर्मधृत्

ते देवा धर्मधृतो धर्मं धारयन्त्वित्येते वै देवा धर्मधृतो यदिमे प्राणा। -मै० सं०, ४/४/२

धर्म+✓धृञ्-धारणे।

## धाता

आ सिञ्चतु प्रजापतिः धाता गर्भं दधातु ते।

-ऋ०, १०/१८४/१

चक्षुर्धाता दधातु नः। -ऋ०, १०/१५८/३

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिया देवोऽअग्निः। त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात स्वाहा।।

-यजु०, ८/१७

त्वष्टुर्धातुर्धाताजायत। -अथर्व०, ११/८/९

धाता तद् भद्रया पुनः सं दधत् परुषा परुः। -अथर्व०, ४/१२/१

धाता दधातु। -अथर्व०, ५/२५/४, ७/१७/१, २

धाता दधातु सविता त्रायमाणः। -अथर्व०, ८/१/१५

धात्रे विधात्रे समृधे। -अथर्व०, ३/१०/१०

वर्म धाता दधातु मे। -अथर्व०, ८/५/१८

स धाता विधर्ता स वायुर्नभ उच्छ्रितम्। -अथर्व०, १३/४/३

यद् दधद् विदधद् अतिष्ठत् तस्माद्धाता। -श० ब्रा०, ९/५/१/३५

सविता देव इति धाता सर्वस्य विधाता। -निरु, ११/१०

✓डुधाञ्-धारणपोषणयोः।

## धातुः

धातुर्दधातेः। -निरु०, १/२०

✓डुधाञ्-धारणपोषणयोः।

## धाना

द्रोणकलशे धाना भवन्ति, तासां हस्तैरादधाति। -गो० ब्रा०, २/४/६

धाना भ्राष्ट्रे हिता भवन्ति। फले हिता भवन्तीति वा। -निरु०, ५/३

हर्योरस्य स भागः। धानाश्चेति। धाना भ्राष्ट्रे हिता भवन्ति। फले हिता भवन्तीति वा। -निरु०, ५/१२

✓डुधाञ्-धारणपोषणयोः।

## धाम (धामानि)

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा। यत्र देवाऽअमृतमानशानास्तृतीये धामन्नध्यैरयन्त॥ -यजु०, ३२/१०

✓डुधाञ्-धारणपोषणयोः।

## धान्यं

धत्ते धान्यम् पत्यते वसव्यैः। -ऋ०, ६/१३/४

धान्यमसि धिनुहि देवान् प्राणाय त्वोदानाय त्वा व्यानाय त्वा। -यजु०, १/२०

धान्यमसि, धिनुहि देवान्। -मै०, १/१/१५

धान्यमसि धिनुहि देवां धिनुहि यज्ञं धिनुहि यज्ञपतिम् धि नुहि माँ यज्ञन्यम्। -काण्व सं०, १/३३

धान्यमसि धिनुहि देवान्। -तै० सं०, १/१/६

धान्यमसि धिनुहि देवानित्याह। -तै० ब्रा०, ३/२/६/३

धान्यमसि धिनुहि देवान्धिनुहि यज्ञं धिनुहि यज्ञपतिं धि नुहि। -बौ० श्रौ० सू०, १/६

धान्यं हि देवान् धिनवदित्यु हि हविर्गृह्यते। -श० ब्रा०, १/२/१/१८, २/१/४/१७

✓डुधाञ्-धारणपोषणयोः।

## धाय्या

दधद्यो धायी सुते वयासि यन्ता वसूनि विधते तनूपाः॥ -साम० पू०, १/२/३/५

तथैवैतद् यजमानो धाय्याभिरेवेमाँल्लोकान् धयति, यं यं कामं कामयते, य एवं वेद यदेव धाय्याः।३।इति॥ -ऐ० ब्रा०, १२/७

धाय्याभिर्वै प्रजापतिरिमांल्लोकानधयद् यं यं काममकामयत।इति। -ऐ० ब्रा०, १२/७

यत्र-यत्र वै देवा यज्ञस्यच्छिद्रं निरजानंस्तद्धाय्या-भिरपिदधुस्तद्धाय्यानां धाय्यात्वम्।इति॥ -ऐ० ब्रा०, १२/७

स्यूमहैतद् यज्ञस्य यद्धाय्यास्तद् यथा सूच्या वासः संदध दिया देवमेवैताभिर्यज्ञस्य च्छिद्रं संदधदेति, य एवं वेद, यद्वेव धाय्या।इति॥ -ऐ० ब्रा०, १२/७

✓डुधाञ्-धारणपोषणयोः।

## धारका

धारकां समिधम्। धारका ह वै नामैषा। एतया ह वै प्रजापतिः प्रजा धारयांचकार।

-श० ब्रा०, ११/६/२/१०

✓डुधाञ्-धारणपोषणयोः।

## धारा

तद् यदब्रवीत् आभिर्वा अहमिदं सर्वधारयिष्यामि तदिदं किञ्चेति तस्मात् धारा अभवंस्तद् धाराणां धारात्वं यच्चासु ध्रियते। -गो० ब्रा०, १/१/२

✓डुधाञ्-धारणपोषणयोः, ✓धृञ्-धारणे।

## धिषणाः

राये नु यं जज्ञतू रोदसीमे देवी धिषणा धाति देवम्। -ऋ०, ७/१०/३, यजु०, २७/२४

धिषणा वाक्। धिषतेर्दधात्यर्थे। धीसादिनीति वा। धीसानिनीति वा। -निरु०, ८/३

✓धिष्-धारणे, धि (धी)+✓षद्लृ-विशरण-गत्यवसादनेषु, ✓षण-सम्भक्तौ।

## धिष्ण्याः

प्राणा वै देवा धिष्ण्याः। ते हि सर्वा धिय इष्णन्ति। -श० ब्रा०, ७/१/१/२४

धि+✓इष-आभीक्ष्ण्ये, गतौ।

## धीः

धियं धाः। -ऋ०, १/६१/१६

राय एषेऽवसे दधीत धीः।

-ऋ०, ५/३/४१/५, ५/४१/५

✓ध्यै-चिन्तायां।

## धीतिः

अधायिधीतिः। -ऋ०, १०/३१/३

धीरस्य धीतयो धनुत्रीः।

-सा० पू०, ६/१/५/६, (५३८)

✓डुधाञ्-धारणपोषणयोः, ✓धीङ्-आधारे।

## धीरः

धीराः प्रज्ञानवन्तो ध्यानवन्तः।

-निरु०, ४/१०

धीरो धीमान्। -निरु०, ३/१२

✓डुधाञ्-धारणपोषणयोः, ✓ध्यै-चिन्तायां+✓रमु-क्रीडायां।

## धुनिः

धुनिर्धूनोतेः। -निरु०, ५/१२

✓धूञ्-कम्पने।

## धूः

धूरसि धूर्व धूर्वन्तं धूर्व। -यजु०, १/८

धूर्धूर्वतेर्वधकर्मणः। इयमपीतरा धूरेतस्मादेव। विहन्ति वहम्। धारयतेर्वा। -निरु०, ३/९

तस्योत्तरां धुरमभिमृराति धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति, तं धूर्वं यं वयं धूर्वामः।

-बौ० श्रौ० सू०, १/४/१/४

तेन पुरुषेणासुरानधूर्वन्। यदधूर्वस्तद्धुरां धूस्त्वम्। धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद।

-ष० ब्रा०, २/३/४

धूरसि धूर्व धूर्वन्तं तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। -तै० स०, १/१/४/४

धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति। धूर्व तं यं वयं धूर्वामः। -काण्व सं०, १/११

यद् अधूर्वस् तस्माद् धुरोऽभवन्।

-जै० ब्रा०, १/३१८

यद् देवा असुरान् अधूर्वन् तद् धुरां धूस्त्वम्। धूर्वति द्विषन्तं भ्रातृव्यं य एवं वेद।

-जै० ब्रा०, १/९९

षड् धुरः एता देवाः। एताभिः तद् देवा असुरान् अधूर्वन्। यद् अधूर्वन् तस्मात् धुरोऽभवन्।

-जै० ब्रा०, १/१९

✓धुर्वी-हिंसार्थे, ✓डुधाञ्-धारणपोषणयोः।

## धूतशरीरः

स एषोऽपहतपाप्मा धूतशरीरोऽतीव्यैतं मृत्युं शरीर धूनुते। -जै० ब्रा०, १/२५२

✓धूञ्-कम्पने+✓शृ-हिंसायां।

## धूमः

तस्योपादीप्तस्य धूम एव शरीरं धुनोति। स यद् धुनोति तस्मात् धुनः। धुनो ह वै नामैषः। तं धूम इति परोक्षं आचक्षते। -जै० ब्रा०, १/४९

तस्योपादीप्तस्य धूम एव शरीरं धुनोति। स यद् धुनोति तस्माद् धुनः। धुनो ह वै नामैषः। तं धूम इति परोक्षम् आचक्षते परोक्षेणैव। परोक्षप्रिया इव हि देवाः। -जै० ब्रा०, १/४९

✓धूञ्-कम्पने।

## धूर्तिः

न यं धूर्वन्ति धूर्तयः। -ऋ०, ८/४५/९

✓धुर्वी-हिंसार्थे।

## धृतिः

इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा। -यजु०, ८/५१

✓धृञ्-धारणे।

## धृष्णुः

उपक्रमस्वाभरधृषताधृष्णोजनानाम्। -ऋ०, ८/७०/७

धृषताधृष्णेस्तवमान आभर। -ऋ०, ८/२४/४

कण्वेभिर्धृष्णवाधृषद्वाजंदर्षि सहस्रिणम्। -ऋ०, ८/३३/३

धृष्णवे धीयते धनम्। -सा० पू०, ५/१/३/६, (४१४)

कण्वेभिर्धृण्णवा धृषद् वाजं दर्षि सतस्रिणम्। -अथर्व०, २०/५२/३

त्वमं धृष्णो धृषता वीत हव्यं॥ -अथर्व०, २०/३७/३

धिष्ण्यात्। धिष्णो धिष्ण्यो धिषणाभवः। धिषणा (वाक्) धिषेर्दधात्यर्थे। धीसादिनीति वा धीसानिनीति वा। -निरु०, ८/३

✓धृञ्-धारणे।

## धेना

धेना दधातेः। -निरु०, ६/१७

✓धेट्-पाने।

## धेनुः

भुवानि दधे धेनुरूध। -ऋ०, १०/२७/१४

धेनुर्गौ न वयो दधुः। -यजु०, २१/१९

आपो वै धेनव आपो हीदं सर्वं धिन्वन्ति। -शा० ब्रा०, १२/९/२/११

धेनुर्धयतेर्वा। धिनोतेर्वा। -निरु०, ११/४२

ता धेनूभिर् आधयन्। -जै० ब्रा०, २/१५६

✓धेट्-पाने, ✓धिवि-प्रीणनार्थाः, ✓डुधाञ्-धारणपोषणरयोः।

## ध्माता

यदीमह त्रितो दिन्युप ध्मातेव धमति शिशीते ध्मातरी यथा। -ऋ०, ५/१/९/५

✓ध्मा-शब्दाग्निसंयोगयोः।

## ध्रुवः

ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा। ध्रुवं ध्रुवेण मनसा वाचा सोमभवनयामि। -यजु०, ७/२५

धारयतां ध्रुवम्। -अथर्व०, ६/८८/२

ध्रुवमसि पृथिवीं दृꣳहाऽऽयुर्दृꣳह प्रजां दृꣳह सजानास्मै। -तै० सं०, १/१/७/७

ध्रुवां भूमिं पृथिवीं धर्मणां धृताम्। -अथर्व०, १२/१/१७

✓ध्रु-गतिस्थैर्ययोः, ✓धृञ्-धारणे।

## ध्राजिः (ध्राजः)

ध्राजिरसि ध्राजोऽसि, स यथा त्वं ध्राज्या ध्राजस एवमहं ध्राज्या ध्राजिषीय, तवेव मे ध्राजमानस्य ध्राजो भूयासु। -मै० सं०, ४/९/८४

✓ध्रज-गतौ।

## नक्तं

नक्तेति रात्रिनाम। अनक्ति भूतान्यवश्यायेन। अपि वा नक्ताव्यक्तवर्णा।। -निरु०, ८/१०

न (नञ्)+✓अञ्जू-व्यक्तिम्रक्षणकान्तिगतिषु।

## नक्षत्रं

तन्नक्षत्राणां नक्षत्रत्वम् यन्न क्षियन्ति।

-गो० ब्रा०, २/१/८

न वा इमानि क्षत्राण्यभूवन्निति। तन्नक्षत्राणां नक्षत्रत्वम्।। -तै० ब्रा०, २/७/१८/३

यानि वै तानि क्षत्राण्यभूवन्, न वै तानि क्षत्राण्यभूवन्, इति, तद्वै नक्षत्राणाम् नक्षत्रत्वम्।

-श० ब्रा०, २/१/२/१९

ते ह देवा ऊचुः न वा इमानि क्षत्राणि अभूवन् इति तन्नक्षत्राणां नक्षत्रत्वम्।

-श० ब्रा०, १/१/२/१२

यो वा इह यजते अमुं सलोकं नक्षते। तन्नक्षत्राणां नक्षत्र त्वम्। -तै० ब्रा०, १/५/२/५

नक्षत्राणि नक्षतेर्गतिकर्मणः। -निरु०, ३/२०

न+✓क्षि-निवासगत्योः, ✓णक्ष्-गतौ।

## नक्षद्दाभं

नक्षद्दाभम्। अश्नुवानदाभम्। अभ्यशनेन दभ्नोतीति वा। -निरु०, ६/३

नक्षद्+✓दाभ-हिंसने।

## नदः

ता नदेन विहरति प्राणो वै नदस्तस्मात्प्राणो नदन्त्सर्वः संनदतीव। -ऐ० आ०, १/३/८

ऋषिर्नदो भवति। नदतेः स्तुतिकर्मणः।।

-निरु०, ५/२

✓नद्-अव्यक्ते शब्दे।

## नदी

यददः संप्रयतिरहावनदता हते। तस्मादा नद्यो३ नाम स्थ तावो नामानि सिन्धवः।।

-अथर्व०, ३/१३/१

सखायोऽश्मन्वती नदी स्यन्दत इयम्।

-अथर्व०, १२/२/२७

नद्यः कस्मात्। नदना इमा भवन्ति शब्दवत्यः।

-निरु०, २/२४

✓णद्-अव्यक्ते शब्दे।

## नना

नना नमतेः। माता वा। दुहिता वा।

-निरु ६/६

✓णम्-प्रह्वत्वे शब्दे।

## नभः

प्र नभस्व पृथिवि भिन्द्धी इदं दिव्यं नभः।

-अथर्व०, ७/१८/१

तद् यद् वै तन्नभो नामाभीर् वै सः। न हि तत् प्राप्य कस्माच्चन बिभेति। तस्मात् तन्नभः।

-जै० ब्रा०, १/३०

नभ आदित्यो भवति। (नेता रसानां)। नेता भासाम्। ज्योतिषाँ प्रणयः। अपि वा भन एव स्याद्विपरीतः। न न भातीति वा।

-निरु०, २/१४

✓णह-बन्धने, ✓नभ्-हिंसाकर्मा, ✓णीञ्-प्रापणे+ ✓भन्-भासने।

### नमामि

अथ कस्मादुच्यते नमामीति यमाद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनः।

-नृ० पू० ता० उप०, २/४

✓णम्-प्रह्वत्वे शब्दे।

### नमस्य

संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन्। -ऋ०, १/७२/५

उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत् कृणोमि। -ऋ०, १०/३४/८

✓णम्-प्रह्वत्वे शब्दे च।

### नरः

यं यज्ञं नयथा नरः। -ऋ०, १/४१/५

नरं नृषाहम् मंहिष्ठम्।

-सा० पू०, २/१/५/१०

नराः मनुष्याः, नृत्यन्ति कर्मसु।

-निरु०, ५/१

✓नृ-नये।

### नरकं

नरकं न्यरकं नीचैर्गमनम्। नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा। -निरु०, १/११

नि+✓ऋ-गतौ।

### नराशंसः

अन्तरिक्षं वै नराशंसः, प्रजा वै नरः, ता इमा अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति, यद्वै वदति शंसतीति वै तदाहुः। तस्मादन्तरिक्षं नराशंसः। -श० ब्रा०, १/८/२/१२

नराशंसो यज्ञ इति कात्थक्यः। नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिः। नरैः प्रशस्यो भवति। -निरु०, ८/६

नर+✓शंसु-स्तुतौ।

### नवन्

नव न वननीया। नवाप्ता वा। -निरु०, ३/१०

नवनामान्युत्तराणि षळेव। नवं कस्मात्। आनीतं भवति। -निरु०, ३/१९

✓णु-स्तुतौ।

### नवनीतं

यन्नवमैत् तन्नवनीतमभवद्यदसर्पत्।

-तै० सं०, २/३/१०/१

नव+✓णीञ्-प्रापणे।

### नसन्त

नसन्त। नसतिराप्नोतिकर्मा वा। नमति कर्मा वा।

-निरु०, ७/१७

✓नस्-गतौ व्यापने नमने च।

### नाकः

सोऽब्रवीन् न वै म इदं अकं अभूद् इति। यद् अब्रवीन् न वै म इदं अकं अभूद् इति तन् नाकस्य नाकत्वम्। स एष वाव नाको यद् दशमं अहः, एष स्वर्गो लोकः, एतद् ब्रध्नस्य विष्टपम्। -जै० ब्रा०, ३/३४५

न वै तत्र जग्मुषे किञ्चनाकम्।

-ता० ब्रा०, २१/८/४

न हि तत्र गताय कस्मैचनाकं भवति। अथो सम्वत्सरो वाव नाकः।

-श० ब्रा०, ८/४/१/२४

नाक आदित्यो भवति। नेता रसानाम् नेता भासाम्। ज्योतिषां प्रणयः। अथ द्यौः। कामेति सुखनाम। तत्प्रतिषिद्धं प्रतिषिध्येत। न वा अमुं लोकं जग्मुषे किञ्चनाकम्, न वा अमुं लोकं गतवते किञ्चनासुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति। -निरु०, २/१४

न+अ (नञ्)+कः-सुखम्।

## नाकसदः

ततो वै ते नाके स्वर्गे लोकेऽसीदन्। तेऽब्रुवन् न सदामः वै स्वर्गे लोके नाक इति। यद् अब्रुवन् न सदाम वै स्वर्गे लोके नाक इति तन् नाकसदां नाकसत्त्वम्। वि ह वै नाके स्वर्गे लोके सीदति य एवं वेद। -जै० ब्रा०, २/२१०

स एषोऽत्र नाकः स्वर्गो लोकः। तस्मिन्देवा असीदन्। तद्यदेतस्मिन्नाके स्वर्गे लोके देवा असीदन् तस्माद्देवा नाकसदः।

-श० ब्रा०, ८/६/१/१-२-३

नाक+✓षद्लृ-विशरणगत्यवसादनेषु।

## नानदं

तमस्मै प्राहरत्, तमभ्यहनत्, सोऽभिहतो व्यनदत्, यद् व्यनदत् तन्नानदं सामाभवत् तन्नानदस्य नादत्वम्। -ऐ० ब्रा०, १६/२

नानदेन वा इन्द्रो वृत्रं नानद्यमानमहन्। यन् नानद्यमान-महंस्तन्नानदस्य नानदत्वम्।

-जै० ब्रा०, ३/८०

यदस्तृतो व्यनदत्तन्नानदस्य नानदत्त्वम्।

-ता० ब्रा०, १२/१३/१४

सः यद् अस्तृत्वा व्यनदत् तन् नानदम् अभवत्। तन् नानदस्य नानदत्वम्।

-जै० ब्रा०, १/२०३

✓णद-अव्यक्ते शब्दे।

## नाभिः

प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् प्राणवास्मिंस्तद्दधाति इति।

-ऐ० ब्रा, ४/३

नाभिः सन्नहनात्। नाभ्या सन्नद्धा गर्भा जायन्ते इत्याहुरेतस्मादेव ज्ञातीन्त्सनाभय इत्याचक्षते।

-निरु०, ४/२१

नञ्+✓भी-भये, ✓णह्-बन्धने।

## नाराशंसः

तं नाराशंस शंसति, प्रजा वै नरः, वाक् शंसः, प्रजासु तद्वाचं दधाति। तस्मादिमाः प्रजा अदन्त्यो जायन्ते। -गो० ब्रा०, २/६/८

तं स नाराशंसं शंसति प्रजा वै नरो वाक्शंसः प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदत्यो जायन्ते इति।

-ऐ० ब्रा०, ३०/१, गो० ब्रा०, २/६/८

येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः।

-निरु०, ९/९

नरः+✓शंसु-स्तुतौ।

## नार्मेधं

अथैतन्नर्मेधं। नृमेधसमाङ्गिरसꣳ सत्रमासीनꣳ श्वभिरभ्याह्वयन्।

-ता० ब्रा०, ८/८/२१-२२

यद् उ नृमेधोऽपश्यत् तस्मात् नार्मेधम् इत्य् आख्यायते। -जै० ब्रा०, १/१७१

नृ (नर)+✓मिधृ-मेधाहिंसनयोः।

## नाशी

सर्वानिन्द्रियकृतान् पापान् नाशयतीति तेन नाशी भवतीति।

-ज० उप०, २/२, रा० ता० उप०, २/१

✓णश्-अदर्शने।

## नासत्या

(नासत्यौ चाश्विनौ)। सत्यावेव नासत्या-वित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः। नासिकाप्रभवौ बभूवतुरिति वा।

-निरु०, ६/१३

न+अ (नञ्)+अस्-भुवि, ✓नस्-गतौ व्यापने च।

## नासिका

नासिका नसतेः। -निरु०, ६/१७

✓नस्-गतौ, व्यापने नमने च।

## निग्राभ्या

तद् यदेना उरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम।

-श० ब्रा०, ३/९/४/१५

नि+✓ग्रह-उपादाने।

## निघण्टुः

निघण्टवः कस्मात्। निगमा इमे भवन्ति। छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः। ते निगन्तव एव सन्तो निगमनात् निघण्टव उच्यन्ते इत्यौपमन्यवः। अपि वाहननादेव स्युः। समाहता भवन्ति। यद् वा समाहृता भवन्ति।

-निरु०, १/१

नि+✓गम-गतौ, आङ्+✓हन्-आहन्-पाठार्थे, सम्+आङ्+✓हृ-समाहारे, नि+✓हृ-सङ्ग्रहार्थे।

## निचुम्पुणः

अवभृथ निचुम्पुण निचेरूरसि निचुम्पुणः अवदेवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतम्पुरु राण्णो देव रिषस्पाहि। -यजु०, २०/१८

निचुम्पुणः सोमः। निचान्तपृणः। निचमनेन प्रीणाति। -निरु०, ५/१७

समुद्रोऽपि निचुम्पुण उच्यते। निचमनेन पूर्यते। अवभृथोऽपि निचुम्पुण उच्यते। नीचैरस्मिन् क्वणन्ति। नीचैर्दधतीति वा। निचुम्पुण निचुंकुणेति च। -निरु०, ८/१८

नि✓चुप-मन्दायां गतौ, ✓पृ-प्रीणने, नीचै+✓क्वण-शब्दार्थे।

## निचृद्

निचृत् निपूर्वाच्चृतेः। -दे० ब्रा०, ३/२१

नि+✓चृती-हिंसाग्रन्थनयोः।

## निदः

निदो निरन्यतश्चिदारत। -ऋ०, १/४/५

✓णिदि-कुत्सायां।

## निदाघः

या नोऽघं भूदिति। निदाघे वा। नि नोऽघं धीयता इति। -श० ब्रा०, १३/८/१/४

नि+✓दह-भस्मीकरणे।

## निधनकामं वैराजं

वाग् वै विराड्, विराज एवारम्भाय। विराजम् एवैतेन प्रत्यक्षम् आरभन्ते। तस्य हैतस्य निधन एव कामाः। स यं कामं कामयेत् तं ध्यायेत् एतस्य निधनं उपावयन्। स है वास्मै कामस् समृध्यते। यद् व अस्य निधने कामास् तस्मान् निधनकामं वैराजम् इत्य् आख्यायते।

-जै० ब्रा०, ३/६७

निधन+✓कमु-कान्तौ+वि+✓राजृ-दीप्तौ।

## निधा

निधा पाश्या भवति। यन्निधीयते।

-निरु०, ४/२

नि+✓डुधाञ्-धारणपोषणयोः।

## निधिः

देवानां निहितो निधिः।

-अथर्व०, १२/४/२९

निधि शेवधिरिति। -निरु०, २/४

नि+✓डुधाञ्-धारणपोषणयोः।

## निपाताः

निपाता उच्चावचेष्वर्थेषु निपतन्ति।

-निरु०, १/४

नि+✓पत्-गतौ वाऽदन्त इत्येके।

## नियुत्

प्रयाभिर्यासिदाश्वांसमच्छा नियुद्भिर्वाययविष्टये दुरोणे। नि नो रयिं सु भोजसं युवस्व।

-ऋ०, ७/९२/३

नियुतो नियमनाद्वा। नियोजनाद्वा।
-निरु०, ५/२८

नियुवाना नियुतः स्पार्हवीरा इन्द्रवायू स रथं यातमर्वाक्। -ऋ०, ७/९१/५

नियुत्वान्नियुतोऽस्याश्वाः। -निरु०, ५/२८

नि+✓यु-मिश्रणामिश्रणयोः।

## निर्ऋतिः

निर्ऋतिर्निर्गच्छात्। -ऋ०, १०/१०/११

इयं वै निर्ऋतिः। इयं वै तं निरर्पयति यो निर्ऋच्छति। -श० ब्रा०, ७/२/१/११

निऋतिर्निरमणात्। ऋच्छतेः कृच्छ्रापत्तिरितरा।
-निरु०, २/८

पाप्मा वै निर्ऋति। तद्यदेताभिः पाप्मानं निऋतिमपाघ्नत तस्मादेता नैर्ऋत्यः।
-श० ब्रा०, ७/२/१/३

✓ऋ-गतिप्रापणयोः, नि+✓रमु-क्रीडायाम्।

## निर्णीतं

निर्णीतं कस्मात्। निर्णिक्तं भवति।
-निरु०, ३/१९

निर्+✓णिजिर-शौचपोषणयोः।

## निर्बाधा

अथैते निर्बाधा, देवाश्च वा असुराश्चास्पर्धन्त ते देवा एतान्निर्बाधानपश्यः, स्तैरसुरानेभ्यो लोकेभ्यो निर्बाधन्त, तन्निर्बाधानां निर्बाधत्वम्।
-मैत्रा०, ३/२/१

निर्+✓बाधृ-विलोडने।

## निवत्

निवत इति। अवतिर्गतिकर्मा। -निरु०, १०/२०

नि+✓अव-रक्षणगतिकान्त्यादिषु।

## निवर्तः

आ निवर्त निवर्तय पुनर्न इन्द्र गा देहि।
-ऋ०, १०/१९/६

आ निवतर्न वर्तय नि निवर्तन वर्तय। भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय।।
-ऋ०, १०/१९/८

नि+✓वृतु-वर्तने।

## निविद्

अथ वै निविदसावेव योऽसौ तपति, एष हीदं सर्वं निवेदयन्नेति। -शा० ब्रा०, १४/१

तं (यज्ञं) वित्त्वा निविद्‌भिर्न्यवेदयन्य द्वित्वा निविदि्भर्न्यवेदयंस्तन्निविदां निवित्वम्।
-ऐ० ब्रा०, ११/९

निविदि्भः न्यवेदयन्।
-श० ब्रा०, ३/९/३/२८

निविदि्भर्न्यवेदयन् तन्निविदां निवित्त्वम्।
-तै० ब्रा०, २/२/८/५

नि+✓विद्-ज्ञाने, लाभे, विचारणे सत्तायां।

## निवेष्टः

अथाङि्गरसां निवेष्टः। अङि्गरसो वा अकामयन्ताव पशून् रून्धीमहीति। त एतत् सामापश्यन्। तेनास्तुवत। ततो वै तान् सर्वाभ्यो दिग्भ्यः पशवोऽभिन्यवष्टन्त। तद् यद् एनान् सर्वाभ्यो दिग्भ्यः पशवोऽभिन्यवेष्टन्त तन् निवेष्टस्य निवेष्टत्वम्। -जै० ब्रा०, ३/२५०

नि+✓विश-प्रवेशने।

## निशृम्भा

निशृम्भा निश्रथ्यहारिणः। -निरु०, ६/३

नि+✓श्रन्थ-विमोचन प्रतिहर्षयोः सन्दर्भे च।

## निषादः

निषादः कस्मात्। निषदनो भवति। निषण्णमस्मिन्यापकमिति नैरुक्ताः।
-निरु०, ३/९

नि+✓षद्लृ-विशरणगत्यवसादनेषु।

## निषेधः

निषेधेन निषेध्यं न्यषेधन्। -जै० ब्रा०, २/१०३

नि +✓षिधु - गत्यां, संराधौ च।

## निष्ठा

यदा वै करोत्यथ निस्तिष्ठति। नाकृत्वा निस्तिष्ठति। कृत्यैव निस्तिष्ठति। कृतिस्त्वेव विजिज्ञासितव्येति। कृतिं भगवो विजिज्ञास इति।

-छा० उ०, ७/२१/१

यदा वै निस्तिष्ठत्यथ श्रद्दधाति। नानिस्तिष्ठन् श्रद्दधाति। निस्तिष्ठन्नेवं श्रद्धाति। निष्ठात्वेव विजिज्ञासितव्येति। निष्ठां भगवो विजिज्ञास इति।

-छा० उ०, ७/२०/१

निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते। इति।

-ऐ० ब्रा०, २२/९

नि+✓ष्ठा-गतिनिवृत्तौ।

## निष्षपी

निष्षपी स्त्रीकामो भवति। विनिर्गतसपाः।

-निरु०, ५/१६

निस्+✓षप्-समवाये।

## निहारं

निहारं च हरामि मे निहारन्निहराणि ते।

-यजु०, ३/५०

निहारमिन्नि मे हर निहारं निहरामि ते।

-का० सं०, ९/१५

निहारमिन्नि मे हरा निहारं निहरामि ते।

-बौ० श्रौ० सू०, ५/१०

नि+✓हृञ्-हरणे।

## नीचं

नीचैर्निचितं भवति। -निरु०, ४/२४

नि+✓चिञ्-चयने।

## नीचायमानं

नीचायमानं नीचैरयमानम्। -निरु०, ४/२४

नि+✓चिञ्-चयने।

## नीवारः

स ( बृहस्पतिः ) नीवारान्निरवृणीत तन्नीवाराणां नीवारत्वम्। -तै० ब्रा०, १/३/६/७

नि+✓वृञ्-आवरणे।

## नृ

नृणां नर्यो नृतमः क्षपावान्।

-अथर्व०, २०/७६/१

✓णीञ्-प्रापणे।

## नृम्णं

नृम्णं च बलं नृन्नतम्। -निरु०, ११/९

नृ+✓म्ना-अभ्यासे।

## नृसिंहः

अथ कस्मादुच्यते नृसिंहमिति। यस्मात् सर्वेषां मृतानां वीर्यतमः श्रेष्ठतमश्च सिंहोवीर्यतमः श्रेष्ठतमश्च। तस्मात्रृसिंह आसीत् परमेश्वरो जगद्धितं वा एतद्रूपं यदक्षरं भवति प्रतद् विष्णुस्तवते वीर्याय मृगे। न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा तस्मादुच्यते नृसिंहमिति।

-नृ० पू० ता० उप०, २/४

नृ+✓हिंसि-हिंसायां।

## नेता

अथ यत्ततो यज्ञं तन्वतेतद्यन्ति, तन्नयति यो नेता भवति सः। -श० ब्रा०, ४/६/८/१

✓णीञ्-प्रापणे।

## नेमः

नेमोऽपनीतः। -निरु०, ३/२०

न+✓इण-गतौ।

## नेमिं

आ व इन्द्र पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रवम्। -ऋ०, ७/३२/२०

नेमिं नमन्ति चक्षसा मेषम्।

-अथर्व०, २०/५/३

✓णम्-प्रह्वत्वे शब्दे च।

## नैर्ऋत्यः

पाप्मा वै निर्ऋति। तद्यदेताभि पाप्मानं निर्ऋतिमपाघ्नत् तस्मादेता नैर्ऋत्यः।

-श० ब्रा०, ७/२/१/३

अथो य एव पाप्मा, या निर्ऋतितमेताभिरपहते। तद्यदेताभिः पाप्मानं निऋतिमपहते। तस्मादेता नैर्ऋत्यः। -श० ब्रा०, ७/२/१/६, १५

तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नन् तस्मादेता नैऋत्यः। -श० ब्रा०, ७/२/१/५

तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नन् तस्मादेता नैऋत्यः। -श० ब्रा०, ७/२/१/१५

✓ऋ-गतिप्रापणयोः, ✓रमु-क्रीडायाम्।

## नैचाशाखं

नैचाशाखं नीचासाखो नीचैः शाखः। शाखा शक्नोतेः। -निरु०, ६/३२

नीचा+ख (खे-आकाशे)+✓शीङ्-शये।

## नैतोशं

नितोशस्यापत्यं नैतोशम्। -निरु०, १३/५

नि-✓तुष-प्रीतौ।

## नैपातिथं

यद् उ नेपातिथिः काण्डवोऽपश्यत् तस्मात् नैपातिथम् इत्य् आख्यायते।

-जै० ब्रा०, ३/२२०

नैप+अ (नञ्)+तिथिः।

## नोधस्

नोधा ऋषिर्भवति नवनं दधाति।

-निरु०, ४/१६

यन्नोधसे प्रायच्छंस्तस्मान्नोधसं ब्रह्म वै नोधसम्।

-ता० ब्रा०, ७/१०/१०

✓णुद्-स्तुतौ, नव-✓धा-धारणे।

## नौ

नौः प्रणोत्तव्यो भवति। नमतेर्वा।

-निरु०, ५/२३

✓णुद्-प्रेरणे, ✓णम-प्रह्वत्वे शब्दे।

## नौधसं

यद् उ नोधाः काक्षीवतोऽपश्यत् तस्मान् नौधसम् इत्य् आख्यायते। -जै० ब्रा०, १/१४७

तान्नोधा काक्षीवत आगच्छत्तेऽब्रुवन्नृषिर्न आगश्छंस्तस्मै ब्रह्म ददामेति तस्मा एतत् साम प्रायिच्छन्नौधसे प्रायछंश्स्तस्मान्नौधसं ब्रह्म वै नौधसम्। -ता० ब्रा०, ७/१०/१२

नव-✓धा-धारणे, ✓णुद्-प्रेरणे।

## न्यासः

न्यसनं न्यासः।

-गृ० षो० उप० १, पी० उप० १

नि+✓अस्-भुवि।

## न्युब्जं

यतो वा अधि देवा यज्ञेनेष्टवा स्वर्गं लोकमायंस्तत्रैतांश्चमसान् न्युब्जंस्ते न्यग्रोधा अभवन्न्युब्जा इति हाप्यनेनैतर्ह्याचक्षते।

-ऐ० ब्रा०, ३५/४

नि+✓उब्ज-आर्जवे।

## न्यूङ्खः

अथ कस्माच्चतुर्थेऽहन्नयूङ्खयति? इति। वाच एतदायतनं यच्चतुर्थमहः, अन्नं विराड्, अन्नं न्यूङ्खः, अन्नमेव तद् यज्ञे च यजमानेषु च दधाति। -शां० ब्रा०, २२/६

अथाऽतः 'इह न्यूङ्खयेत्? इहाइ? इति। स्तोत्रियानुरूपयोश्चैव न्यूङ्खा उक्थमुखीययोश्च।

अथ नाद्रियेत, आत्मा वै स्तोत्रियः प्रजाऽनुरूपः, अन्नं विराड्, अन्नं न्यूङ्खः, अन्नमेवाऽऽत्मनि प्रजायां च दधाति। आनुष्टुभं न्यूङ्ख न्यूङ्खयेत्' इति हैक आहुः, आनुष्टुभं वै चतुर्थमहः तदेनत् स्वेन छन्दसा समर्धयति। -शां० ब्रा०, २२/८

यो यजते, तस्मान्न्यूङ्खयति; न्यूङ्खमानक इव वै प्रथमम्। सर्वास्वेव न्यूङ्खयेत् अन्नं वै न्यूङ्खः। -शां० ब्रा०, २५/१३

नि+✓उखि-गत्यर्थः।

## पक्तीः

पचात्पक्तीरुत भृज्जातिधानाः। -ऋ०, ४/२४/७

अयं यजमानः पचन् पक्तीः पचन् पुरोडाशम्। -यजु०, २८/२३, २८/४६

पचता पक्तीरवसे कृणुध्वमित् पृणान्नित् पृणते मयः। -सा० पू०, ३/२/५/३, (२८५)

✓डुपचस्-पाके।

## पक्षी

यथा वातो यथा मनो यथा पतन्ति पक्षिणः। -अथर्व०, १/११/६

न वा अपक्षः पक्षिणमाप्नोत्यथ यदेष पक्षी पक्षिणि निधीयते तस्मात्पक्षिणः पक्षैः पतन्ति। -ता० ब्रा०, १९/१०/३

✓पण-व्यवहारे स्तुतौ च, ✓पत्लृ-गतौ।

## पङ्क्तिः

पङ्क्ति पञ्चपदा। -निरु०, ७/१२

पञ्चपदा पङ्क्तिः।
गो० ब्रा० २/२/४, ऐ० ब्रा० २३/३, शां० ब्रा० १९/४, १९/७

पञ्चपदा वै पङ्क्ति। -शां० ब्रा०, १९/४

पञ्चाक्षरा पङ्क्तिः। तै० ब्रा०, २/७/१०/२

पाङ्कतः पञ्चिनी पञ्चपदा। -दे० ब्रा०, ३/१३

सैषा देवताभिः पाङ्क्तो यज्ञः। पाङ्क्तः पशुः। पञ्चर्तवः संवत्सरस्य। एतमेवैतयाऽऽप्नोति यद्देवताभिः पङ्क्तिर्भवति। -श० ब्रा०, ३/१/४/२०

पङ्क्तिः पञ्चपदाम्। -गो० ब्रा०, १/३/८

✓पचि-विस्तारे, व्यक्तीकरणे च।

## पज्रहोषिन्

प्रार्जिहोषिणौ न दैवौ तस्याश्नीथः। -निरु०, ५/२२

✓पद्-गतौ+✓घुष (हुष)-संशब्दने।

## पञ्चन्

पञ्च पृक्ता संख्या। स्त्रीपुंनपुंसकेष्वविशिष्ठा। -निरु०, ३/८

✓पचि-विस्तारे व्यक्ती करणे च।

## पञ्चदशः

चन्द्रमा वै पञ्चदशः। एष हि पञ्चदश्यामपक्षीयते, पञ्चदश्यामापूर्यते। -तै० ब्रा०, १/५/१०/५

पञ्च+दशः।

## पञ्चधा

यस्य चित्तं स्वपवनं, सुषुम्नां प्रविशेदिह भूमिरापोऽनलो वायुराकाशश्चेति पञ्चकः। येषु पञ्चसु देवानां धारणय पञ्चधोच्यते। -यो० त० उप०, ८४, ८३-८४

पञ्च+✓डुधाञ्-धारणपोषणयोः।

## पञ्चविलः

तद् यत् पञ्च हवींषि भवन्ति। तेषां पञ्चविलानि। तस्माच्चरुः पञ्चविलो नाम। -श० ब्रा०, ५/५/१/१

पञ्च+वि+✓लीङ्-श्लेषने, ✓लिश-अल्पीभावे।

## पञ्चहोता

तस्मै पञ्चम हूतः प्रत्यपृणोत। स पञ्चहूतोऽभवत्। पञ्चहूतो वै नामैष। तं वा एतम् पञ्चहूतं सन्तं पञ्च होतेत्याचक्षते।

-तै० ब्रा०, ३/३/११

पञ्च+✓हू-दानादानयोः।

## पञ्चशारदीयः

तद् यद् पञ्चशरदः पञ्चोक्षाणः प्रोक्षिताश् चरन्ति, तस्मात् पञ्च शारदीयः।

-जै० ब्रा०, २/१७६

पञ्च-✓शृ-हिंसायां।

## पञ्चावातीयं

त्रयोऽश्वाः। द्वौ सव्यष्टृसारथी। ते पञ्च प्राणाः। यो वै प्राणः स वातः। तद् यदेतस्य कर्मणा एषा दक्षिणा तस्मात् पञ्चावातीयं नाम।

-श० ब्रा०, ५/२/४/१०

पञ्च+✓वा-गतिगन्धयोः।

## पतङ्गं

अवो दिवा पतयन्तं पतङ्गम्।

-ऋ०, १/१६३/६, यजु०, २९/१७.

अशुर्विपार्श्चत् पतयन् पतङ्गः।

-अथर्व०, १३/२/३९

पतङ्गमक्तमिति। प्राणो वै पतङ्गः। पतन्निव ह्येष्वङ्गेष्वति रथमुदीक्षते। पतङ्ग इत्याचक्षते।

-जै० उ० ब्रा०, ३/६/७/२

✓पत्लृ-गतौ।

## पतिः

पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत्। -ऋ०, ४/५५/५

तस्य पाता वा पालयिता वा। तस्यैषा भवति।

-निरु०, १०/१४, १६

✓पा-रक्षणे।

## पदं

एष वै पदमेषहीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात्पदमित्याचक्षते। -ऐ० आ०, २/२/२

पादः पद्यते। तन्निधानात् पदम्। पशुपाद प्रकृतिः प्रभागपादः। प्रभागपाद सामान्यादितराणि पदानि।

-निरु०, २/७

✓पद्-गतौ।

## पदस्तोभः

पदोरुत्तममपश्यत्तत्पद स्तोभम्य पदस्तोभत्वं।

-ता० ब्रा०, १३/५/२४

पद+✓स्तु-स्तुतौ।

## पदिः

पदिर्गन्तुर्भवति। यत् पद्यते। -निरु०, ५/१८

✓पद्-गतौ।

## पथिन्

पन्थाः पततेर्वा। पद्यतेर्वा। पन्थतेर्वा।

-निरु०, २/२८

✓पत्लृ-गतौ।

## पणिः

पणिर्वणिक् भवति। पणिः पणनात्। वणिक् पण्यं नेनेक्ति। -निरु०, २/१७

✓पन-व्यवहारे स्तुतौ च।

## पण्डकः

पण्डकः पण्डगः। प्रार्दको वा प्रार्दयत्याण्डौ। आण्डावाणी इव व्रीडयति।

-निरु०, ६/३२

✓पडि-गतौ।

## पण्यं

स वै राजानं पणते स यद्राजानं पणते तस्मादिदं सकृत् सर्वं पण्यम्। -श० ब्रा०, ३/३/३/१

✓पण-व्यवहारे स्तुतौ च।

## पपुरिः

हविषा जारो अपां पिपर्ति पपुरिर्नरा।

-ऋ०, १/४६/४

पिपर्त्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा। -निरु०, ५/२४

✓पृ-पालनपूरणयोः।

## पप्रिः

आयं पृणन्ति दिवि सद्म बर्हिषः।

-ऋ०, १/५१/४

स नः पप्रिः पारयाति स्वस्ति नावा पुरुहूतः।

-ऋ०, ८/१६/११, अथर्व०, २०/४६/२

ते नोऽग्नयः पप्रयः पारयन्तु।

-ता० ब्रा०, १/७/५

✓पृ-पालनपूरणयोः।

## पयः

पयसा पियानो नयन्। -ऋ०, १/७१/३

पिन्वन्ति पयसा परिज्रयः। -ऋ०, १/६४/५

पिन्वन्त्यपो मरुतः सुदानवः पयः।

-ऋ०, १/६४/६

येभ्योमातामधुमत्पिन्वते पयः। पीयूषंघौरादितिरद्रि बर्हाः। -ऋ०, १०/६३/३

पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥

-यजु०, १८/३६

पयसा पिपर्मि। -अथर्व०, १/३५/४

पिबसि धान्यं कृष्याः पयः।

-अथर्व०, ८/२१/९

पयः पिबतेर्वा प्यायतेर्वा। -निरु०, २/५

पयसो वै प्रजाः सम्भवन्ति, पयसः सम्भूताः। तद्यत एव सम्भूताः, यतः सम्भवन्ति तत एवैतदुभयो वरुणपाशात् प्रजाः प्रमुञ्चति इतश्चोर्ध्वाः, इतश्चावाचीः। तस्मादुभयत्र पयस्ये भवतः।

-श० ब्रा०, २/५/२/९

पिबेदापस्त्र्यहमुष्णं पयः पिबेत्।

-पा० स्मृ०, ४१६, ४१७

✓पा-पाने।

## परब्रह्म

स होवाचार्थर्वा यस्माच्च बृहति। बृंहयति च सर्वं तस्मादुच्यते परंब्रह्मेति।

-शा० उप०, ३/२

अथ कस्मादुच्यते परं ब्रह्म यस्मात् परं अपरपरायणं च बृहद् बृहत्या बृंहयति तस्मादुच्यते परब्रह्म।

-अथर्व० उप० ४, बटु० उप० १

पर+✓बृह-बृद्धौ।

## परमेष्ठिन्

अयं वा इदं परमोऽभूदिति। तत्परमेष्ठिनः परमेष्ठित्वम्। -तै० ब्रा०, ८/२/३/१३

परमाद्वा एतत्स्थानाद्वर्षति यद्दिवः, तस्मात्परमेष्ठी नाम। -श० ब्रा०, ११/१/६/१६

परम+✓ष्ठा-गतिनिवृत्तौ।

## परः

आमासु पूर्षु परो अप्रमृष्यं नारातयः।

-ऋ०, २/३५/६

अथैतानि। परैर्वै देवा आदित्यं सुवर्गं लोकमपारयन्। यदपारयन् तत्पराणां परत्वम्। पारयन्त्येनं पराणि। य एवं वेद।

-तै० ब्रा०, १/२/४/३

परवैं देवा आदित्यं स्वर्गं लोकमपारयन् यदपारयं

तत् पराणां परत्वम्। -ता० ब्रा०, ४/५/३
✓पृ-पालनपोषणयोः, ✓प्रीङ्-प्रीतौ।

## पराक्

पराके पराक्रान्ते। -निरु०, ५/९
पराङ् एव एतेन स्वर्गं लोकमाक्रमते। यद्वा एतस्याकन्तदस्य पराक् तत् पराक्तस्य पराकत्वम्। -ता० ब्रा०, २१/८/२-३
परा+✓अक-कुटिलायां गतौ, क्रमु-पादविक्षेपे।

## पराच

पराचैः पराञ्चनैरचितः। -निरु०, ११/२५
परा+✓अञ्चु-गतिपूजनयोः।

## पराची

पराङ्वे परा वद पराचीम्।
-अथर्व०, ६/२९/३
परा+✓अञ्चु-गतिपूजनयोः।

## परावत्

प्रेरितवतः परागताद्वा। -निरु०, ७/२६
परावतः प्रेरितवतः। परागताद्वा।
-निरु०, ११/४८
परा+वत्।

## पराशरः

पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठः। इन्द्रोऽपि पराशर उच्यते। पराशातयिता यातूनाम्।
-निरु०, ६/३०
परा+✓शृ-हिंसायां।

## परिक्षित्

अग्निर्वै परिक्षिदग्निर्हीमाः प्रजाः परिक्षेत्यग्निं हीमाः प्रजा परिक्षियन्ति। -ऐ० ब्रा०, ३०/६
संवत्सरो वै परिक्षित्, संवत्सरो हीदं सर्वं परिक्षियतीति। अथो खल्वाहुः, अग्निर्वै परिक्षित्। अग्निर्हीदं सर्वं परिक्षयतीति।
गो० ब्रा०, २/६/१२
परि+✓क्षि-निवासगत्योः।

## परितक्म्या

परितक्म्या रात्रिः। परित एनां तक्म। तक्मेत्युष्णनाम। तकत इति सतः।
-निरु०, ११/२५
परि+✓तक्-हसने गतौ च।

## परिधानीया

परिधानीयाभिः परिदध्युः।
-गो० ब्रा०, २/६/५
परि+✓डुधाञ्-धारणपोषणयोः।

## परिधिः

यं परिधिं पर्यधत्थाऽअग्ने देवपाणिभिर्गुह्यमानः।
-यजु०, २/१७
अमुमादित्यं परिधिं परिदधात्यपुनराभावाय।
-मैत्रा०, ३/८/१४
धारयन् प्रस्तरं परिधीन्परि दधाति।
-तै० ब्रा०, ३/३/६/८
परिधिं पर्यदधुरपुनराभावायै ताम्।
-मैत्रा०, ३/८/१४
परिधिमनुप्रहरति यं परिधिं पर्यधत्था।
-बौ० श्रौ० सू०, १/१९/६
परिधीन् परिदधाति। -श० ब्रा०, १/३/३/१३
यत्परिधयः परिधीयन्ते (यज्ञस्य गोपीथाय) परिधीन्परिध ते। -गो० ब्रा०, २/१/१
परि✓डुधाञ्-धारणपोषणयोः।

## परिप्लवं

तद्यत् पुनः पुनः परिप्लवते। तस्मात्परिप्लवम्।
-श० ब्रा०, १३/४/३/१५
परि+✓प्लुङ्-गतौ।

### परिमरः

अथातो ब्रह्मणः परिमरो यो ह वै ब्रह्मणः परिमरं वेद पर्येन द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते, इति। -ऐ० ब्रा०, ४०/५

ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद्ब्राह्मणः परिमर इत्युपासीत। पर्येण म्रियन्ते द्विषन्तः सपत्नाः। परि येऽप्रियाः भ्रातृव्याः। -तैत्ति० उप० भृगुवल्ली, ३/१०/५

परि+✓मृङ्-प्राणत्यागे।

### परिवीतः

पर्येतिपरिवीतोविभावा। -ऋ०, १०/६/१

परि+✓वी-गतिव्याप्तिप्रजनकान्त्यसनखादनेषु।

### परिसारकं

तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार, इति। -ऐ० ब्रा०, ८/१

परि+✓सृ-गतौ।

### परुच्छेपः

असुरीन्द्रं प्रत्युक्रमत पर्वन्-पर्वन् मुष्कान् कृत्वा; तामिन्द्रः प्रतिजिगीषन् पर्वन् पर्वन् छेपांस्यकुरुत इन्द्र उ वै परुच्छेपः। -शां० ब्रा०, २३/४

परुच्छेप ऋषिः। पर्ववच्छेपः। परुषि-परुषि शेपोऽस्येति वा। -निरु०, १०/४२

परुत्+✓शप्-आक्रोशे।

### परुष्णी

इरावतीं परुष्णीत्याहुः। पर्ववती भास्वती कुटिलगामिनी। -निरु०, ९/२६

✓पृ-पालनपूरणयोः।

### पर्णः

गायत्रिया ह्रियमाणस्य यत्ते। पर्णमपतत् तृतीयस्यै दिवोऽधि सोऽयं पर्णः सोमपर्णाद्धि जातः। -तै० ब्रा०, १/२/१/५, ६

तृतीयस्यामितो। दिवि सोम आसीत्। तं गायत्र्याऽहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्त्वम्। -तै० ब्रा०, १/१/३/१०

यत्र वै गायत्री सोममच्छापतत्, तदस्या आहरन्त्या अपादस्ताभ्यायतस पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञः। तत् पतित्वा पर्णोऽभवत्। तस्मात् पर्णो नाम। -श० ब्रा० १/७/१/१, ३/३/४/१०

✓पृ-पालनपूरणयोः, ✓पर्ण-हरितभावे।

### पर्जन्यः

पर्जन्यस्तृपेः। आद्यन्तविपरीतस्य। तर्पयिता जन्यः। परो जेता वा। परो जनयिता वा। प्रार्जयिता वा रसानाम्। -निरु०, १०/१०

पर्जन्यो वै भवः। पर्जन्याद्धीदं सर्वं भवति। -श० ब्रा०, ६/१/३/१५

✓पृषु-सेचने, पर+✓जि-जये, पर+✓जनी-प्रादुर्भावे।

### पर्याप्तिः

भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति सुवर्गस्य लोकस्य पर्याप्त्यै, इति। -तै० ब्रा०, ३/८/१७

परि+✓आप्लृ-व्याप्तौ।

### पर्यायः

तान् पर्यायैः पर्यायं ऐत्। यत् पर्यायैः पर्यायं ऐत् तत् पर्यायाणां पर्यायत्वम्। तान् आश्विनेन क्रतुना पर्यगृह्णात्। -जै० ब्रा०, २/११०

यत्पर्यायैः पर्यायमनुदत्त तान्वै पर्यायैरेव पर्यायमनुदत्त तत्पर्याणां पर्यायत्त्वम्।इति। -ऐ० ब्रा०, १६/५

यत् पर्यायैः पर्यायम् ऐत् तत् पर्यायाणां पर्यायत्वम्। -जै० ब्रा०, २/११०

यत्पर्यायैः पर्यायमनुदत्त, तस्मात्पर्यायाः, तत्पर्यायाणां पर्यायत्वम्। -गो० ब्रा०, २/५/१

तान् देवाः समन्तं पर्य्यायं प्राणुदत्त यत् यय्यग्रय प्राणुदत्त तत्पर्यायाणां पर्य्यायत्वम्।

-ता० ब्रा०, ९/१/३

यत् पर्यायम् अघ्नंस् तत् पर्यायाणां पर्यायत्वम्।

-जै० ब्रा०, १/२०८

परि+✓इण्-गतौ।

## पर्वतः

पर्ववान् पर्वतः। -निरु०, १/२०

✓पर्व-पूरणे।

## पर्तॄन्

ताँ अँहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठय।

-ऋ०, ७/१६/१०

✓पृ-पालनपूरणयोः।

## पर्वः

पर्वः पुनः पृणातेः प्रीणातेर्वा। अर्द्धमास पर्व देवान् अस्मिन् प्रीणन्तीति। -निरु०, १/२०

✓पृ-पालनपूरणयोः, ✓पर्व-पूरणे।

## पर्शुः

पार्श्वं पर्शुमयमङ्गं भवति। पर्शुः स्पृशतेः। संस्पृष्ठा पृष्ठदेशम्। संस्पृष्टमङ्गैः।

-निरु०, ४/३

पर+✓शृ-हिंसायां, ✓स्पृश-संस्पर्शने।

## पलाशं

पलाशं पलाशनात्। -निरु०, १२/२९

✓पल-गतौ+✓अशूङ्-व्याप्तौ।

## पलितः

पलितस्य पालयितुः। -निरु०, ४/२६

✓पा-रक्षणे।

## पवनः

रयिं मे विश्वे नि यच्छन्तु देवाः स्योना मापः पवनैः पुनन्तु। -अथर्व०, १८/३/११

✓पूञ्-पवने।

## पवमानः

सोम पवमान पूयसे। -ऋ०, ९/८६/३०

पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा। -यजु०, १९/४२

पवमान पवसे धाम गौनां।

-सा० पू०, ५/१/५/२, ५३४

पवमानः पुनातु मा। -अथर्व०, ६/१९/१, २

प्यायति पवमानः पुरस्तात्।

-अथर्व०, ४/११/४

अग्निरेवैनन्निष्टपति पवमानः पुनाति पूतमेवैनं यज्ञियं पृष्ठान्यूपनयति।

-ता० ब्रा०, १६/५/१०

अपूता इव वा एते येषां दीक्षितानां प्रमीयते यदेवाग्निपावमानी प्रतिपद्भ-वत्याग्निरेवैनान्निष्टपति पवमानः पुनाति।

-ता० ब्रा०, ६/१०/२

पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे।

-मै० सं०, ३/११/९३

पवनात्पावमानो। -मैत्रा० उप०, ५/७

यत् सवितारं यजति तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः पवते। -ऐ० ब्रा०, २/१

✓पूञ्-पवने।

## पविः

पविः शल्यो भवति। यद्विपुनाति कायम्। तद्वत्।

-निरु०, १२/३०

✓पूञ्-पवने।

## पविता

पवितारः पुनीतन सोममिन्द्राय पातवे।

-ऋ०, ९/४/४

✓पूञ्-पवने।

## पवित्रं

पवित्र आवाचं पुनन्ति कवयोः मनीषिणः।

-ऋ०, ९/७३/७

पवित्रेणविचर्षणिः। यः पोतास पुनातुनः।

-ऋ०, ९/६७/२२

पवित्रेणसवेनच। मां पुनीहि विश्वतः।

-ऋ०, ९/६७/२५

पवित्रेभिः पवमानोनृचक्षाराजा देवानामुत मर्त्यानाम्। -ऋ०, ९/९६/२४

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीहिनः। -ऋ०, ९/६७/२३

अथैनं दर्भपवित्रेण पावयति।

-श० ब्रा०, ३/१/३/१८

अयं वै पवित्रम् योऽयं पवते।

-श० ब्रा० १/१/३/१, १/७/१/१२

चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिस्तस्य ते पवित्रयते पवित्रेण यस्मै कं पुने तच्छकेयम्। -का० सं०, २/४

तत्सवितृप्रसूत एवैतदुत्पुनाति आच्छिद्रेण पवित्रेणेति। यो वा अयं पवते एषोऽच्छिद्रं पवित्रम्। -श० ब्रा०, १/१/३/६

तद्देव पवित्रेणैव वाचं पुनीते।

-गो० ब्रा०, २/६/१६

देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण। सुप्वा कामधुक्षः। -का० सं०, १/६

येन देवाः पवित्रेणात्मानं पुनते सदा। तेन सहस्रधारेण पावमानीः पुनन्तु नः॥

-साम० ३०-५/२/८/५, सा० १३०२

पवित्रं पुनातेः मन्त्रः पवित्रमुच्यते रश्मय पवित्रमुच्यन्ते आपः पवित्रमुच्यन्ते। अग्निः पवित्रमुच्यते। वायु पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्र मुच्यते। इन्द्रः पवित्रमुच्यते। -निरु०, ५/६

पवित्रेण पुनाहि मा...पुनीमहे।

-तै० ब्रा०, १/४/८/१,२

वायोः पूतः पवित्रेण प्रत्यङ्।

-का० सं०, ११/४४

वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः।

-का० सं०, २१/३

सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः। -तै० सं०, १/१/४

सुतं सोमं पवित्र आ नय। पुनाहीन्द्राय पातवे।

-सा० पू०, ६/१/२/३, (४९९)

✓पूञ्-पवने।

## पवित्रपतिः

पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्।

-यजु०, ४/४

✓पूञ्-पवने+✓पा-रक्षणे।

## पवी

पवी रथनेमिर्भवति, यद्विपुनाति भूमिम्।

-निरु०, ५/५

✓पूञ्-पवने।

## पवीरवान्

पविः शल्यो भवति। यद्विपुनाति कायम्। तद्वत्। पवीरमायुधम्। तद्वानिन्द्रः पवीरवान्।

-निरु०, १२/३०

✓पूञ्-पवने।

## पशुः

यदपश्यत् तस्मादेते पशवः।

-श० ब्रा०, ६/२/१/२

यदपश्यत् तस्मादेते पशवः। तेष्वेतमपश्यत् तस्माद्वेवैते पशवः। -श० ब्रा०, ६/२/१/४

पशुः पश्यतेः। -निरु०, ३/१६

✓ दृशिर्-प्रेक्षणे।

## पशुपतिः

ओषधयो वै पशुपतिः। तस्माद्यदा पशव ओषधीर्लभन्ते अथ पतीयन्ति।

-श० ब्रा०, ६/१/३/१२

पशुपतिरहंकाराविष्टः संसारी जीवः स एव पशुः सर्वज्ञः पञ्चकृत्यः सम्पन्नः सर्वेश्वर ईशः पशुपतिः। के पशव इति पुनः स तमुवाच जीवा पशवः उक्ता तत्पतित्वा पशुपतिः।

-ज० उप०, १

य ईशे पशुपतिः पशूनां चतुष्पदामुत यो द्विपदाम्।

-अथर्व०, २/३४/१

सर्वे देवाः पशुतामवापुः स्वयं तस्मात्पशुपतिर्बभूव। तस्मै रुद्राय नमोऽस्तु।

-शर० उप०, १२

पशु+✓पा-रक्षणे।

## पशुसनिः

पशूनेव सनोति। -श० ब्रा०, १२/८/१/२२

पशु+✓षण्-सम्भक्तौ।

## पसः

पसः पसतेः। स्पृशति कर्मणः।

-निरु०, ५/१६

✓स्पृश्-संस्पर्शने।

## पाकः

मेधं शृतपाकं पचन्तु। -ऋ०, १/१६२/१०

पाकः पक्तव्यो भवति। विपक्वप्रज्ञ आदित्यः।

-निरु०, ३/१२

पाकः पक्तव्यो भवति। विपक्वप्रज्ञ आत्मा। इत्यात्म गतिमाचष्टे। -निरु०, ३/१२

✓डुपचस्-पाके।

## पाङ्क्तः

उपकृत्य पञ्च जुहोति। पाङ्क्ताः पशवः पशूनेवावरुन्धे। -तै० सं०, ३/१/५/१

ता उ पञ्च पञ्च भवन्ति पाङ्क्तो यज्ञः पाङ्क्ताः। -ता० ब्रा०, १९/२/५

ते यत् पञ्चान्यद्भूत्वा पञ्चान्यद् भूत्वा कल्पेतां, तस्मादाहुः, पाङ्क्तो यज्ञः पाङ्क्ता पशव इति।

-गो० ब्रा०, २/३/२०

पञ्चगृहीतं भवति। पाङ्क्ता हि पशवः।

-तै० ब्रा०, १/६/३/२

पंचभिरभिजुहोति, पांक्तो यज्ञः।

-गो० ब्रा०, २/४/७

पञ्चभिः वै व्याहृतिभिर् इदं देवा अजयंस् तावता जयामेति। पांक्ते यज्ञः।

-जै० ब्रा०, २/३५६

पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा। -ऐ० ब्रा०, ७/४

पाङ्क्तो ह्ययं पुरुषः पञ्चधा विहितः लोमानि त्वगस्थिमज्जामस्तिष्कम्।

-गो० ब्रा०, २/६/८

स पाङ्क्तो भवति। पाङ्क्तोऽयं पुरुषः, पञ्चधा विहितो लोमानि त्वङ्मांस मस्थि मज्जा स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति।

-ऐ० ब्रा०, ३०/३

✓पचि-विस्तारे व्यक्तीकरणे च।

## पाँसुः

अथ यदेतद् भस्मोद्धृत्य परावपन्ति, एष एवासन् पांसवः। -श० ब्रा०, २/३/२/३

पाँसवः पादैः सूयन्त इति वा। पन्नाः शेरत इति वा। पंसनीया भवन्तीति वा।

-निरु०, १२/१९

पाद+✓षूञ्-अभिषवे, पन्न+✓शीङ्-शयने।

## पाजः

पाजः पालनात्। -निरु०, ६/१२

✓पा-रक्षणे।

## पाञ्चवाजं

यद् उ पञ्चवाजाः कौत्सोऽपश्यत् तस्मात् पाञ्चवाजम् इत्य् आख्यायते।

-जै० ब्रा०, ३/२२९

पाञ्च+✓जव-गतौ।

## पाणिः

पाणिः पणायतेः पूजाकर्मणः। -निरु०, २/२६

✓पण-व्यवहारे स्तुतौ च।

## पात्रं

तद्देवता अनु प्रपिवन्ति। देवपात्रेणैव तद्देवतास्तृप्यन्ति, इति। -ऐ० ब्रा०, १२/११

देव पात्रेणैव तद्देवतास्तर्पयति।

-ऐ० ब्रा०, ११/५

देव पात्रेणैव तद्देवतास्तर्पयति।

-गो० ब्रा०, २/३/१

पात्रं पानात्। -निरु०, ५/१

✓पा-पाने रक्षणे च+✓तृप-तृप्तौ।

## पाथः

पाथोऽन्तरिक्षं पथाव्याख्यातम्। श्येनो न दीयन्नन्वेति पाथ इत्यपि निगमो भवति, उदकमपि पाथ उच्यते पानात्। आचष्ट आसां पाथो नदीनामित्यपि निगमो भवति, अन्नमपि पाथ उच्यते। पानादेव। -निरु०, ६/७

विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः। -ऋ०, ३/५५/१०

✓पा-रक्षणे, ✓पा-पाने।

## पादः

पादः पद्यते। -निरु०, २/७

✓पद-गतौ।

## पादुः

पादुः पद्यतेः। पादुः पतनं गमनम्।

-निरु०, ५/१९

✓पद्-गतौ।

## पापं

ते तमः पाप्मानमपाघ्नते ते तमः पाप्मानमपाघ्नते।

-गो० ब्रा०, २/५/५

पातः पाताऽपेयानाम्। पापत्यमानोऽवाङ्ेव पततीति वा। पापत्यतेर्वा स्यात्।

-निरु०, ५/२

✓पा-रक्षणे, ✓पत्लृ-गतौ।

## पायुः

अदब्धेभिः पायुभिः पाह्यस्मान्।

-ऋ०, १/९५/९

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परि पाहि नो गयम्। -ऋ०, ६/७१/३

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः। अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः।

-ऋ०, १/१४३/८

पायुभिः पाहि शग्मैः। -ऋ०, १/१३०/१०

पाहि नो अग्ने पायुभिरजस्रैरुत।

-ऋ०, १/१८९/४

पाहि पायुभिः। शिवेभिः। -ऋ०, ८/६०/८

विश्वेभिः पातु पायुभिर्नि सूरीन्।

-ऋ०, ७/३८/३

तेभिर्नो अध पायुभिर्नु पाहि दुहितर्दिवः।

-अथर्व०, १९/४७/५

✓पा-रक्षणे।

## पारं

मिहः पावकाः प्रतता अभूवन् स्वस्ति नः पिपृहि पारमासाम्। -ऋ०, ३/३१/२०

प्रवाजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन्। -ऋ०, ७/६०/७

पारं परं भवति। -निरु०, २/२३

✓पार-कर्मसमाप्तौ।

## पारावतघ्नी

पारावतघ्नीं पारावारघातिनीम्। -निरु०, २/२३

पारावत+✓हन्-हिंसागत्योः।

## पार्थः

एतेन वै पृथो वन्य उभयेषां पशूनामाधिपत्यमाश्नुतो भयेषां पशूनामाधिपत्यमश्नुते पार्थेन तुष्टुवानः। -ता० ब्रा०, १३/५/२०

यद् उ पृथुर् वैन्योऽपश्यत् तस्मात् पार्थम् इत्य आख्यायते। -जै० ब्रा०, ३/२५

✓प्रथ-प्रख्याने।

## पार्थिवः

दीर्घं पृथु पप्रथे सद्म पार्थिवम्। -ऋ०, ५/८७/७

आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः। -ऋ०, ८/८४/९

✓प्रथ-प्रख्याने।

## पावमानी

तेन सहस्रधारेण पावमानी पुनन्तु नः। -साम०उ०, १०/७/१३/५, (१३०२)

पवित्रं वै पावमान्यः। पुनात्येवैनं तत्। -शां० ब्रा०, ८/५

✓पूञ्-पवने।

## पावमान्यः

स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षते एतमेव सन्तम्। -ऐ० आ०, २/२/२

✓पूञ्-पवने।

## पाशः

पाशः पाशयतेः। विपाशनात्।। -निरु०, ४/२

✓पाश्-बन्धने।

## पाष्ठौहं

यद् उ पाष्ठौहीर् आङ्गिरसोऽपश्यत् तस्मात् पाष्ठौहम् इत्य आख्यायते। -जै० ब्रा०, ३/५१

पाष्ठौहं भवति। पष्ठवाङ्क एतेनाङ्गिरसश्चतुर्थस्याह्नो वाचं वदन्तीमुपाशृणोत्। -ता० ब्रा०, १२/५/११

पाष्ठ+✓ऊह-वितर्के।

## पिजवनः

पिजवनः पुनः स्पर्धनीय जवो वा। अमिश्रीभावगतिर्वा। -निरु०, २/२४

(अ) पि+✓जू-गतौ।

## पिताः

पर्जन्यः पिता स उ नः पिपर्तु। -अथर्व०, १२/१/१२

पालनात् पालकः पिता। -महा० उप०, ५/८०

यत् पीतत्वं तत्पितृणां पितृत्वम्।

-ष० ब्रा०, ५/१/१

तेन पितृनसृजत, तत् पितृणां पितृत्वं स यस्तत् पितृणां पितृत्वं वेद पितेव ह समानानां भवति।

-मै० सं०, ४/२/१

सोऽसुरान्सृष्ट्वा पितेवामन्यत। तदनु पितृनसृजत। तत्पितृणां पितृत्वम्। -तै० ब्रा०, २/३/८/२

पिता पाता वा पालयिता वा जनयिता।

-निरु०, ४/२१

✓पा-रक्षणे, ✓पा-पाने।

## पितुः

मे पाह्यथर्य पितुं मे पाहि। -यजु०, ३/३७

पितुरित्यन्ननाम। पातेर्वा। पिबतेर्वा। प्यायतेर्वा।

-निरु०, ९/२४

✓पा-रक्षणे, ✓प्याय-वृद्धौ।

## पितुषणिः

पितुषणिरित्यन्नं वै पितु, दक्षिणा वै पितु, तामेनेन सनोत्यन्नसनिमेवैनं तत्करोति।इति।।

-ऐ० ब्रा०, ३/२

पितु+✓षण-सम्भक्तौ, दाने च।

## पितृयज्ञः

अथ यानेवैषां तस्मिन् सङ्गमेऽघ्नन्, तान् पितृयज्ञेन समैरयन्त। पितरौ वै त आसन् तस्मात् पितृयज्ञो नाम।

-श० ब्रा०, २/६/१/१, १/६/१/१

अथर्तवः पितरः प्रजापति पितरं पितृयज्ञेनायजन्त। त एतं लोकमजयन्। यस्मिन्नृतवः। यत्पितृयज्ञेन यजते। एतमेव लोकं जयति। यस्मिन्नृतवः। ऋतूनामेव सायुज्यमुपैति। यदृतवः। पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त। तत्पितृयज्ञस्य पितृयज्ञत्वम्।। -तै० ब्रा०, १/४/१०/८

यदृतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त तत्पितृयज्ञस्य पितृयज्ञत्वम्।

-तै० ब्रा०, १/४/१०/८

पितृ+✓यज्-देवपूजासंगतिकरणदानेषु।

## पिनाकं

पिनाकं प्रतिपिनष्ट्येनेन। -निरु०, ३/२१

✓पिष्लृ-सञ्चूरणे हिंसार्थे च।

## पिन्वन्त्यपीया

तद् यदेव वृत्रं हतमापो व्यायन्, यत् प्रापिन्वन् तस्मात् पिन्वन्त्यपीया। -शां० ब्रां०, १५/३

✓पिवि-सेवने सेचने च।

## पिपीलिका

पिपीलिका पेलतेर्गतिकर्मणः।

-निरु०, ७/१३

पिपीलिका पेलतेर्गतिकर्मणः। पिपीलिकमध्येत्यौपमिकम्।। -दे० ब्रा०, ३/९-१०

✓पेलृ-गतौ।

## पिशुनः

पिशुनः पिंशतेः। विपिंशतीति।

-निरु०, ६/११

✓पिंश-अवयवे।

## पुण्यलक्ष्मीकः

तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते। तस्माद्यस्य सुखे लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते।

-श० ब्रा०, ८/४/४/११

तस्माद्यस्य सर्वतो लक्ष्म भवति तं पुण्यलक्ष्मीक इत्याचक्षते।

-श० ब्रा०, ८/५/४/३

पुण्य+✓लक्ष-दर्शनाङ्कनयोः, आलोचने च।

## पुत्रः

स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया। -ऋ०, १/१६०/३

पुमांसं पुत्रं जनय तं पुमाननु जायताम्। -अथर्व०, ३/२३/३

पुत्रः पुरु त्रायते। निपरणाद्वा। पुन्नरकं ततस्त्रायत इति वा। -निरु०, २/११

यच्च पुत्रः पुन्नामनरकमनेकशततारं तस्मात् त्राति पुत्रस्तत् पुत्रस्य पुत्रत्वम्। -गो० ब्रा०, १/१/२

स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति। स यद्यनेन किंचिदक्षणयाऽकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति, तस्मात्पुत्रो नाम। स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठति। -बृ० उ०, १/५/१७

✓पूञ्-पवने+✓त्रैङ्-पालने।

## पुनर्वसुः

उपाप्तो वर्णासु, उपाप्तः पुनर्वस्वोः तस्मात्तस्यां पुनरादधीत। -शां० ब्रा०, १/३

पुनरेवैनं वामं वसूपावर्तते। -तै० ब्रा०, १/१/२/३

यो वै तमग्रा आद्यन्त्रा स तेन वसुना समभवत्, तत पुनर्वसोः पुनर्वसुत्वं, तस्मात् पुनर्वसा आधेयः। -मैत्रा०, १/७/१३

पुनः+✓वस-निवासे।

## पुनश्चितिः

तद्यच्चितं सन्तं पुनश्चिनोति तस्मात्पुनश्चितिः। -श० ब्रा०, ८/६/३/१३

पुनः+✓चिञ्-चयने।

## पुनस्तोमः

तम् एतेनैव पुनर अयाजयत्। तेनैनं पुनस् समश्रीणात्। सास्य पुनस्तोमता। -जै० ब्रा०, २/८३

पुनः+✓स्तु-स्तुतौ

## पुमान्

पुमान्पुरुमना भवति। पुंसतेर्वा॥ -निरु०, ९/१५

✓पा-रक्षणे, ✓पुंस-अभिवर्द्धने।

## पुरन्दरः

त्वं हि शश्वतीनामिन्द्र दर्त्ता पुरामसि। हन्ता दस्योर्मनोर्वृधः पतिर्दिवः। -अथर्व०, २०/६४/३

पुर+✓दृ-विदारणे।

## पुरन्धिः

पुरन्धिर्बहुधीः। तत्कः पुरन्धिः। भगः पुरस्तात्तस्यान्वदेश इत्येकम्। इन्द्र इत्यपरम्। स बहुतर्कतमः। पुरां च दारयितृतमः। वरुण इत्यपरम्। तं प्रज्ञया स्तौति। -निरु०, ६/१३

पुरन्धिर्योषेत्याह योषित्येव रूपं दधाति। -तै० ब्रा०, ३/८/१३/२

पुरं+✓धि-धारणे, पुरं+✓धा-धारणपोषणयोः, पुरं+✓ध्यै-चिन्तायां।

## पुरश्चरणं

तद्वाऽएतन्मनोऽध्वर्युः पुर इवैव चरति। तस्मात्पुरश्चरणं नाम। -श० ब्रा०, ४/६/७/२०

पुरः+✓चर्-गतौ।

## पुराजाः

ऋषय एते मन्त्रकृतः पुराजाः पुनराजायन्ते देवानां गुप्त्यैकम्। -जै० उ० ब्रा०, १/१४/४/२

पुरा+✓जनी-प्रादुर्भावे।

## पुराणं

पुराणं कस्मात्। पुरा नवं भवति। -निरु०, ३/१९

पुरा+✓णीञ्-प्रापणे।

## पुरीषं

पुरीषं पृणातेः। पूरयतेर्वा॥ -निरु०, २/२२

## पुरीष्यः

पुरीष्य इति वैतमाहुः यः श्रियं गच्छति। समानं वै पुरीषं च करीषं च।

-श० ब्रा०, २/१/१/७

✓पृ-पालनपूरणयोः।

## पुरुत्रा

पुरुत्राते विपूर्तयो नवन्तक्षोणयो यथा।

-ऋ०, १०/२२/९

पुर+✓त्रैङ्-पालने रक्षणे च।

## पुरुमुद्गः

तद् यत् पूर्वेऽमज्जयंस् तद् व् एव पौरुमुद्गस्य पौरुमुद्गत्वम्।

-जै० ब्रा०, ३/४३

यद् उ पुरुमुद्ग आङ्गिरसोऽपश्यत् तस्मात् पौरुमुद्गम् इत्य आख्यायते।

-जै० ब्रा०, ३/४३

पुर+✓मुद्-हर्षे संसर्गे च+✓गम्-गतौ।

## पुरुषः

स यत्पूर्वोऽस्मात्सर्वस्मात् सर्वान्पाप्मन औषत्, तस्मात् पुरुषः। -बृ० उ०, १/४/१

इमे वै लोकाः पूः। अयमेव पुरुषः। योऽयं पवते। सोऽस्यां पुरि शेते। तस्मात् पुरुषः।

-श० ब्रा०, १३/६/२/१

परात्परं पुरिशयं पुरुषमीक्षते।

-प्र० उप०, ५/५

पुरः स पक्षी भूत्वा पुरः पुरुष आविशद् इति। स वा अयं पुरुषः सर्वासु पुर्षु पुरिशंयो नैनेन किंचनानावृतं नैनेन किंचनासंवृत्तम्।

-बृ० उ०, २/५/१८

पुरुषः पुरिषादः। पुरि शयः। पूरयतेर्वा। पूरयत्यन्तरित्यन्तर पुरुषमभिप्रेत्य।

-निरु०, २/३

प्राण एष स पुरिशेते इति स पुरिशेते इति पुरिशयं सन्तं प्राणं पुरुष इत्याचक्षते परोक्षेण।

-गो० ब्रा०, १/१/३९

स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः।

-श० ब्रा० १४ ब २/५/१८

✓पुर-अग्रगमने, ✓पृ-पालनपूरणयोः+✓षद्लृ-विशरणगत्यवसादनेषु, पुरः+✓शीङ्-शयने, ✓पुर-अग्रगमने+✓उष-दाहे।

## पुरुषमेधः

इमे वै लोका पूः। अयमेव पुरुषः। योऽयं पवते। सोऽस्यां पुरिशेते। तस्मात् पुरुषः। तस्य यदेषु लोकेष्वन्नम्। तदस्यान्नं मेधः। तद्यदस्यैतदन्नं मेधः। तस्मात् पुरुषमेधः। अथो यदस्मिन्मेध्यान्पुरुषा-नालभते। तस्माद्वेव पुरुषमेधः।

-श० ब्रा०, १३/६/२/१

पुरुष+✓मिधृ-मेधाहिंसनयोः संगमे च।

## पुरूरवस्

पुरूरवा बहुधा रोरूयते। -निरु०, १०/४६

पुरु+✓रु-शब्दे।

## पुरोडाशः

स वा एभ्यस्तत् पुरोऽदाशयत् य एभ्यो यज्ञं प्रारोचयत्, तस्मात्पुरोदाशः, पुरोदाशो ह वै नामैतद् यत् पुरोडाश इति।

-श० ब्रा०, १/६/२/५

पुरः+✓दाशृ-दाने।

## पुरोधा

समन्तौ एनौ करोति ब्राह्मणं च राजन्यं च समन्तेन तुष्टुवानो, गच्छति पुरोधां, पुरं एन दधति। -जै० ब्रा०, ३/१८६

पुरः+✓धा-धारणे।

## पुरोधाता

यो ह वै त्रीन्पुरोहितांस्त्रीन्पुरोधातृन्वेद सः ब्राह्मणः पुरोहितः। स वदेत् पुरोधाया अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधताऽऽदित्यो वाव पुरोहितो, द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाय स तिरोहितो य एवं न वेद, इति। -ऐ० ब्रा०, ४०/४

पुरः+✓धा-धारणे।

## पुरोरुक्

अथ वै पुरोरुगसावेव योऽसौ तपति, एष हि पुरस्ताद् रोचते। -श० ब्रा०, १४/४

तं पुरोरुग्भिः प्रारोचयन्यत्पुरोरुग्भिः प्रारोचयंस्तत्पुरोरुचां पुरोरुक्त्वम् इति।

-ऐ० ब्रा० ११/९, श० ब्रा०, ३/९/३/२८

पुरः+✓रुच-दीप्तावभिप्रीतौ।

## पुरोहितः

प्रथमः पुरोहितमिति पुर एव वा एनमेतद् दधते।

-जै०ब्रा०, ३/६३

पुर एनं दधति। -निरु०, २/१२

पुरः+✓डुधाञ्-धारणपोषणयोः।

## पुलुकामः

पुलुकामः पुरुकामः। पुलुकामो हि मर्त्य इत्यपि निगमो भवति। -निरु०, ६/४

पुरु+✓कमु-कान्तौ।

## पुष्करं

पुरं मे कुरुतेति। स योऽपां रस आसीत् तमूर्ध्वं समुदौहन्। तामस्मै पुरमकुर्वन्। यद्यदस्मै पुरमकुर्वन् तस्मात्पुष्करम्। पुष्करम् ह वै तत् पुष्करमित्याचक्षते।

-श० ब्रा०, ७/४/१/१३

पुष्करमन्तरिक्षम्। पोषति भूतानि। उदकं पुष्करम्। पूजाकरम्। पूजयितव्यम्। इदमपीतरत्पुष्करमेतस्मादेव। पुष्करं वपुष्करं वा।

-निरु०, ५/१४

✓पुष्-पुष्टौ+✓डुकृञ्-करणे, पुष्क+✓रा- दाने, पुर्+✓डुकञ्-करणे।

## पुष्टा

जगती वै छन्दसां परमं पोषं पुष्टा परमेवैतेन पोषं पुष्यति। -ता० ब्रा०, २१/१०/९

✓पुष्-पुष्टौ।

## पुष्टिः

त्वम् विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि।

-ऋ०, ६/२/१

अथैष मरुत्स्तोम एतेन वै मरुतोऽपरिमितां पुष्टिमपुष्यन्न परिमितां पुष्टिं पुष्यति य एवं वेद। -ता० ब्रा०, १९/४/१

✓पुष-पुष्टौ।

## पुष्पं

पुष्पं पुष्यतेः। -निरु०, ५/१४

✓पुष्प-विकसने।

## पूतीकः

अथ यत्पूयन्निवाशेत तस्मात्पूतीकाः।

-श० ब्रा०, १४/१/२/१२

तस्य ये ह्रियमाणस्यां शवः परापतंस्ते पूतीका अभवन्। -ता० ब्रा०, ८/४/१

अस्य यो अंशु परापतत्स पूतीको अभवत्।

-ता० ब्रा०, ९/५/५

✓पूयी-विशरणे, दुर्गन्धे च, ✓पूञ्-पवने।

## पुरुः

पूरवः पूरयितव्या। -निरु०, ७/२३

✓पृ-पालनपूरणयोः।

## पूर्णाहुतिः

स्रुचैकाहितमात्रेण व्रतस्यापुरितेन च। याहुतिर्दीयते वह्नौ सा पूर्णाहुतिरुच्यते।

-शि० उप०, ४/५१

पूर्ण+✓हु-दानादानयोः।

## पूर्ववाट्

न्याहवनीयो गार्हपत्यकामयत्। नि गार्हपत्य आहवनीयम्। तौ विभाजं नाशक्नोत्! सोऽश्वः पूर्ववाड् भूत्वा। प्राञ्चं पूर्वमुदवहत्। तत्पूर्ववाहः पूर्ववाट्त्वम्। -तै० ब्रा०, १/१/५/६

पूर्व+✓वह-प्रापणे।

## पूषन्

अयं वै पूषा। योऽयं पवते। एष हीदं सर्वं पुष्यति।

-श० ब्रा०, १४/२/१/९

इयं वै पूषा। इयं हीदं सर्वं पुष्यति।

-श० ब्रा०, १४/१/२/२५

यद्रश्मिपोषं पुष्यति तत्पूषा भवति।

-निरु०, १२/१६

पुष्टिर्वै पूषा पुष्टिं यजमाने दधाति।

-मै० सं०, ४/१/१५

सं पूषेति, पुष्टिर्वै पूषा, पुष्टयैवैनाः संसृजति।

-मै० सं०, ४/२/७०

✓पुष-पुष्टौ।

## पृणन्

कृणुध्वमित्पृणन्नित्पृणते मयः।

-ऋ०, ७/३२/८

✓पृ-पालनपूरणयोः।

## पृतनाजितं

यत् पृतनाम् अजयंस् तत् पृतनाजितः पृतनाजित्वम्। जै० ब्रा०, २/९१

✓पृङ्-व्यायामे+✓जि-जये।

## पृतनाज्यं

पृतनानामजनाद्वा। जयनाद्वा।

-निरु०, ९/२४

पृतना+✓अज-गतिक्षेपणयोः।

## पृथक्

पृथक् प्रथतेः। -निरु०, ५/२५

✓प्रथ-प्रख्याने।

## पृथिवी

दिवश्चिदस्य वरिमा वि पप्रथ इन्द्रं न मह्ना पृथिवी चन प्रति। -ऋ०, १/५५/१

दीर्घं पृथु पप्रथे सद्म पार्थिवं येषामज्मेष्वा महशर्धास्यद्भुतैनसाम्। -ऋ०, ५/८७/७

प्रथयन्पृथिवीं मातरं वि।

-ऋ०, १०/६२/३, ७/७२/२

प्रथिष्ट यामन्पृथिवी चिदेषां भर्तेव गर्भं स्वमिच्छवो धुः। ऋ०, ५/५८/७

वि सानुना पृथिवी सस्र उर्वी पृथु प्रतीकमध्येधे अग्निः। -ऋ०, ७/३६/१

स धारयत्पृथिवीं पप्रथच्च। -ऋ०, २/१५/२

तत्पृथिवीमप्रथयः। -ऋ०, ८/७८/५, साम० उ०, ६/२/१९/१, (१४२९),

उरु पृथु प्रथमानं पृथिव्याम्। -यजु०, २९/४

प्रजापतिष्ट्वा सादयत्वपां पृष्ठे समुद्रस्येमन्। व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि॥

-यजु०, १३/१७

स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः॥ -यजु०, ३६/१३

दीर्घं पृथु पप्रथे सद्म पार्थिम्।

-अथर्व०, ५/८७/७

पृथिवी नः पार्थिवात् पात्वहंसोऽन्तरिक्षम्।

-अथर्व०, ८/४/२३

पृथिवी नः प्रथतां राध्यतां नः।

-अथर्व०, १२/१/२

आदिद् द्यावापृथिवी अप्रथेताम्।

-तै० सं०, ४/६/२/४, काण्व सं० १८/२५

आपो वा इदमग्रे सलिलमासीत्। तेन प्रजापतिरश्राम्यत्। कथमिदं स्यादिति सोऽपश्यत्पुष्करपर्णं तिष्ठत्। सोऽमन्यत। अस्ति वै तद् यस्मिन्निदमधि तिष्ठतीति। स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्च्छत्। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। तत्पृथिव्यै पृथिवीत्वम्।

-तै० ब्रा०, १/१/३/६

जुषाणोरु पृथु प्रथमानं पृथिव्याम्।

-काण्व सं०, ३१/४

तामप्रथयत सा पृथिव्यभवत्।

-श० ब्रा०, ६/१/१/१५

पृथिवीं सा पप्रथे पृथिवी पार्थिवानि।

-बौ० श्रौ० सू०, १/१०

पृथिवी सा प्रपथे पृथिवी पार्थिवाय।

-मा० श्रौ० सू०, १/२/४/५

पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि। -तै० सं०, ४/२/९/१

पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् व्यु प्रथते वितरं वरीयः।

-काठक संहिता, ३१/४१

पृथिव्यां सा पप्रथे पृथिवी पार्थिवाय।

-का० सं०, ३१/४३

पृथु प्रथमानं पृथिव्याम्।

-तै० सं०, ५/१/११/३

प्रथयत्येवैनं। प्रति प्रथस्व पृथिवीमुत द्याम्। इतीमे एव प्रथयति। -मै० सं०, ४/१/५५

प्रथोऽसि, पृथि इत्यस्य, दितिरसि।

-मैत्रा०, २/८/३१

प्रपथे यथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः।

-मै० सं०, ४/१४/२३८, अथर्व०, ७/९/१

यदप्रथत तत् पृथिवी।

-कां० सं०, ८/४-५, जै० ब्रा०, ३/३१८

यदप्रथयत् तत्पृथिव्यै पृथिवित्वम्।

-तै० ब्रा०, १/१/३/३६

वेदेन वेदीं विविदुः पृथिव्याः सा पप्रथे पृथिवी पार्थिवानि। -वा० श्रौ० सू०, १/१/२/२०

व्यचस्वतीं प्रथस्वतीं प्रथस्व पृथिव्यसि।

-काण्व सं०, १४/१७

स वाराहो रुपं कृत्वोपन्यमज्जत्। स पृथिवीमधः। आर्च्छत। तस्या उपहत्योदमज्जत्। तत्पुष्करपर्णेऽप्रथयत्। यदप्रथयत्। तत् पृथिव्यै पृथिवित्वम्। -तै० ब्रा०, १/१/३/१-७

सा पप्रथे पृथिवी। -तै० ब्रा०, ३/३/९/१०

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम्। -मै० सं०, ३/१६/२/२०

प्रथनात् पृथिवीत्याहुः। -निरु०, १/१३, १४

✓प्रथ-प्रख्याने।

## पृथुज्रयः

पृथुज्रयाः पृथुजवः। -निरु०, ५/९

✓प्रथ-प्रख्याने+✓जि-अभिभवे।

## पृथुश्रवाय्यं

श्रोत्रं वै पृथु श्रवाय्यम्, श्रोत्रेण हीदमुरु पृथु श्रृणोति श्रोत्रमेवैतया समिन्धे।

-श० ब्रा०, १/४/३/५

पृथु+✓स्त्यै-संघाते।

## पृश्निः

पृश्निरादित्यो भवति। प्राश्नुत एनं वर्ण इति नैरुक्ताः। संस्पृष्टो रसान्। संस्पृष्टा भासं ज्योतिषाम्। संस्पृष्टो भासेति वा॥ अथ द्यौ सम्पृष्टो ज्योतिर्भिः पुण्यकृद्भिश्च।

-निरु०, २/१४

प्रजापतिर्विराजमपश्यत् तया भूतं च भव्यं चासृजत् तामृषिभ्यस्तिरोऽधात् तां जमदग्नि-

स्तपसाऽपश्यत् तया वै स पृश्नीन् कामानसृजत् तत् पृश्नीना पृश्नित्वम्।

-तै० सं०, ३/३/५/२

सोऽब्रवीत् पृश्निः वै बहुः प्रजया पशुभिः प्राजनिषिति। तत् पृश्निनः पृश्नित्वम्।

-जै० ब्रा०, ३/७५

प्र+✓स्पृश-संस्पर्शने, प्र+✓अशूङ्-व्याप्तौ।

## पृश्निगर्भः

पृश्निगर्भाः प्राष्टवर्णगर्भाः। आप इति वा।

-निरु०, १०/३९

पृश्नि+✓गृ-निगरणे, ✓गृ-शब्दे।

## पृष्ठं

पृष्ठं स्पृशतेः। संस्पृष्टमङ्गैः। -निरु०, ४/३

पृष्ठम् भवति। पृष्ठं वा एतदह्नां यन्नवमं पृष्ठ एव तत्पृष्ठेन स्तुवते प्रतिष्ठायै।

-ता० ब्रा०, १५/३/१९

यद् दिवि स्पृष्टम् अतिष्ठन्, तत् स्पृष्टानां स्पृष्टत्वम्। -जै० ब्रा०, ३/११७

✓स्पृश्-संस्पर्शने, ✓पृष्-सेचने, ✓प्रच्छ-ज्ञीप्सायां।

## पृष्ठिः

तस्मादभिप्लवोऽन्नञ्च एवाङ्गिरसो गुरुभिः सामभिः सर्वैः स्तोमैः सर्वैस्पृष्ठ्यैः स्वर्गं लोकमभ्यस्पृशन्त, यदभ्यस्पृशन्त तस्मात् स्पृश्यस्तं वा एतं स्पृशं सन्तं पृष्ठ्य इत्याचक्षते।

-गो० ब्रा०, १/४/२३

अङ्गिरसः सर्वैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन्। यदस्पृशन्। तस्मात् पृष्ठ्यः।

-श० ब्रा०, १२/२/२/११

एतेन हीदं सर्वं स्पृष्टम्। स्पृष्टयो ह वै नामैषः। तं पृष्ठय इति परोक्षम् आचक्षते।

-जै० ब्रा०, २/३१

✓स्पृश्-संस्पर्शने।

## पेशः

पेश इति रूपनाम। पिंशतेः। विपिशितं भवति।

-निरु०, ८/११

✓पिश-अवयवे।

## पेसुकं

पेसुकं वै वास्तु। पिस्यति ह प्रजया पशुभिः यस्यैवं विदुषोऽनुष्टभौ भवतः।

-श० ब्रा०, १/७/३/१८

✓पेसृ-( पिसृ )-गतौ।

## पोता

यः पोता स पुनातु नः।

-ऋ०, ९/६७/२२, यजु०, १९/४२

तं यत्तस्यामेव वायुभूतं पुनन्तः स्तुवन्तः शंसन्तोऽतिष्ठन् तत् पोताऽभवत् तत् पोतुः पोतृत्वम्। -गो० ब्रा०, १/२/१९

✓पूञ्-पवने।

## पोषं

सहस्रपोषं पुष्यन्ति। -मैत्रा०, १/२/३५

साम भूयासं पोषं पुष्यति। तमनु पोषं पोषुको भवति। -श० ब्रा०, ४/१/१४

✓पुष-पुष्टौ।

## पौरः

पौरो अश्वस्य पुरुकृद् गवामस्युत्सो देव हिरण्ययः।

-ऋ०, ८/६०/१६

✓पूर्-गतौ, ✓पृ-पालनपूरणयोः।

## पौरमुद्गं

यद् उ पुरुमुद्ग आङ्गिरसोऽपश्यत् तस्मात् पौरुमुद्गं इत्याख्यायते। देवाः च वा असुराश्चाधि समुद्रं अस्पर्धन्त। ते देवा अकामयन्त पूर्व एवासुरान् समुद्रे मज्जयेमेति। त एतत् सामापश्यन्।

तेनास्तुवत। तेनासुरान् पूर्वेऽमज्जयन्। तद् यत् पूर्वेऽमज्जयन् तद् व एव पौरुमुद्गस्य पौरुमुद्गत्वम्। -जै० ब्रा०, ३/४३

पौर+उत्+✓गम-गतौ।

## पौरुमङ्गं

देवाश्च वासुराश्चास्पर्द्धन्त ते देवा असुराणां पौरुमङ्गेन पुरोऽमज्जयन्यत पुरोऽमज्जयꣳस्तस्मात्पौरुमङ्गम्।

-ता० ब्रा०, १२/३/१४

पौरं+✓अञ्जु-गतिपूजनयोः।

## पौरुहन्मनं

तद् यद् पूर्वेऽघ्नन् तद् व् एव पौरुहन्मनस्य पौरुहन्मनत्वम्। -जै० ब्रा०, ३/२१५

पुरुहन्मा वा एतेन वैखानसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः।

-ता० ब्रा०, १४/९/२९

यद् उ पुरुहन्मा वैखानसोऽ अपश्यत् तस्मात् पौरुहन्मनम् इत्य् आख्यायते।

-जै० ब्रा०, ३/२१५

पौर+✓हन्-हिंसागत्योः।

## पौर्णमासी

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय।

-अथर्व०, ७/८४/१

एष एव पूर्णमाः। यच्चंद्रमाः। एतस्य ह्यनु पूरणं पौर्णमासीत्याचक्षते। -श० ब्रा०, ११/२/४/२

✓पृ-पालनपूरणयोः+मास।

## पौर्वातिथं

यद् उ पूर्वतिथिर् आर्चमानसोऽपश्यत् तस्मात् पौर्वातिथम् इत्य आख्यायते।

-जै० ब्रा०, १/२२७

पौर (पूर्व)+अ (नञ्)+✓अत-सातत्यगमने।

## पौष्कलं

अथैतत्पौष्कलमेतेन वै प्रजापतिः पुष्कलान्यशूनसृजततेषुरुपजतधाधदेत्साम भवति। पुव्वेरुपदधाति। -ता० ब्रा०, ८/५/६

यद् उ पुष्कल आङ्गिरसोऽपश्यत् तस्मात् पौष्कलम् इत्य आख्यायते।

-जै० ब्रा०, १/१६०

✓पुष्-पुष्टौ+✓कल-शब्दसंखनयोः।

## पौष्णं

पुष्यसे इति पौष्णम्। -श० ब्रा०, ३/१/४/१९

✓पुष्-पुष्टौ।

## प्रकलविद्

प्रकलविद्वणिग्भवति। कलाश्च वेद प्रकलाश्च।

-निरु०, ६/६

प्रकल+✓विद्-ज्ञाने।

## प्रउगमः

ता अमुतोऽवाच्यो देवतास्तृतीयसवनात् प्रातः सवनमभिप्रायुञ्जतः, तद् यदभिः प्रायुञ्जत, तत् प्रउगस्य प्रउगत्वम्।

-शां० ब्रा०, १४/५

प्र+✓युजिर्-योगे।

## प्रगाथः

तद् यद् गाथायै रसं प्रावृहन्त, तत् प्रगाथस्य प्रगाथत्वम्। -जै० ब्रा०, ३/४१

स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद्यदिदं किञ्च तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम्।

-ऐ० आ०, २/२/२

सैतं ऋग् गाथायै रसं प्रावृहत। स एष प्रगाथोऽभवत्। तद् यद् गाथायै रसं प्रावृहत, तद् व, एव प्रगाथस्य प्रगाथत्वम्।

-जै० ब्रा०, ३/४१

प्र+✓गै-शब्दे।

## प्रचेता

प्रचेतसः प्रवद्धचेतसः। -निरु०, ९/२०

प्रवृद्धचेताः। -निरु०, ८/५

प्र+✓चिती-सञ्ज्ञाने।

## प्रजनयिता

संवत्सरो वै प्रजननमग्निः प्रजननमेतत् प्रजननं यत् संवत्सर ऋचाऽग्नौ समिधमादधाति प्रजनना देवैनं तत् प्रजनयिता प्रजनयति।

-गो० ब्रा०, १/२/१५

प्रजनयिता तत् प्रजननं यत् पुरा संवत्सरादग्नौ समिध आदधाति प्रजननादेवैनं प्रजनयिता प्रजनयति। -का सं०, ७/८५

प्र+✓जनी-प्रादुर्भावे।

## प्रजाः

इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकामः। -ऋ०, १०/१८३/१

सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम्। -यजु०, ७/१८

इह प्रजा जनय पत्ये अस्मै।

-अथर्व०, १४/२/४०

अग्निः प्रजानां प्रजनयिता।

-तै० सं०, २/१/२/८

अग्निं वै प्रजा अनुप्रजायन्ते।

-मैत्रा०, १/१०/३०

अन्नप्रजाः प्राजायन्त। -मैत्रा०, ३/१०/१२

तस्मात् प्रजाः सृष्ट्वा प्रजायन्ते।

-मैत्रा०, ३/७/७

ता इमाः प्रजाः प्रजापत्याः प्राजायन्त।

-मैत्रा०, १/७/१३

प्रजाताः प्रजाः प्रतिगृभ्णादिति।

-मैत्रा०, १/१०/३८

प्राणा वै गुदः प्राणादधि प्रजाः प्रजायन्ते प्रजननाय, स्थविमत उपजयति, स्थविमतौ हि प्रजाः प्रजायन्ते। -मैत्रा०, ३/१०/१२

प्राणेभ्यो वै ताः प्रजाः प्राजायन्त।

-मैत्रा०, १/१०/३१

प्रजाः प्रजायन्ते।

-मैत्रा० २/३/१९, श० ब्रा०, ४/४/२/९, ष० ब्रा०, १/३/१८

प्रजास्तासामेषा योनिस्ता एतामनुप्रजायन्ते।

-मैत्रा०, १/१०/३८

मिथुनात् खलु वै प्रजाः पशवः प्रजायन्ते।

-मैत्रा०, १/८/८, १/१०/३०

सपेमेति, सपाद्धि प्रजाः प्रजायन्ते।

-मैत्रा०, ३/७/९-११

अतोऽधि प्रजाः प्रजायन्ते। -जै० ब्रा०, १/१७

प्रजननादिमाः प्रजाः प्रजायन्ते।

-श० ब्रा०, ३/५/१/११

प्रजा एव तद् यद् यजमानः पोषयति। वैश्वदेव्याभिक्षा भवति। वैश्वदेव्यो वै प्रजाः एवास्मै प्रजनयति। -तै० ब्रा०, १/६/२/५

प्रजा गृह्णाति प्र जाता जनयति।

-ता० ब्रा०, ६/१/३

प्रजाः पशवोऽनु प्रजायन्ते।

-तां० ब्रा०, १०/१/९

प्रजा प्रजायन्ते यदेतेन सिकतानिवपति प्रजानां प्रजननायेन्द्रो। -तै० सं०, ५/२/६/२

प्रजां पशून् यजमानाय प्रजनयति।

-तै० सं०, २/६/१/१५

प्रजां प्रजनयन्ति विन्दते।

-तै० सं०, २/१/५/३

रेतसः सिक्ताः प्रजाः प्रजायन्ते प्रजानां प्रजननाय। प्रजावान् प्रजनयिष्णुर्भवति, प्रजात्यै प्रजायते प्रजया पशुभिः। -गो० ब्रा०, २/६/१५

सुप्रजाः प्रजाः प्रजनयन्। -काण्व सं०, ७/१७

स एवास्मै प्रजां पशून् प्रजनयति।

-तै० सं०, २/१/१/५

प्र+✓जनी-प्रादुर्भावे।

## प्रजापतिः प्राणः

अथ यत प्रजापतिः प्राणयत् तस्मादु प्रजापतिः प्राणः। -श० ब्रा०, ७/५/१/२१

प्रजापतिः+प्र+✓अन्-प्राणने।

## प्रजासनिः

प्रजासनि इति प्रजामेव सनोति।

-श० ब्रा०, १२/८/१/२२

प्रजा+✓षण्-सम्भक्तौ।

## प्रजातिः

प्रजातिर्वै च्यावनं प्रजायते बहुर्भवति।

-ता० ब्रा०, १३/५/१२

प्र+✓जनी-प्रादुर्भावे।

## प्रजापतिः

यस्मान्न जातः परोऽअन्यो अस्ति य आविवेश भुवनानि विश्वा। प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी॥

-यजु०, ८/३६

प्रजापतिर्जनयति प्रजा इमा धाता दधातु सुमनस्यमानः। -अथर्व०, ७/१९/१

सः प्रजापतिः सुवर्णमात्मन्नपश्यत् तत् प्राजनयत्।

-अथर्व०, १५/१/२

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति। -प्र० उप०, १/१४

तद्यदब्रवीत् (ब्रह्मा) प्रजापतेः प्रजाः सृष्ट्वा। पालयस्वेति तस्मात्प्रजापतिरभवत् तत्प्रजापतेः प्रजापतित्वम्। -गो० ब्रा०, १/१/४

प्रजानां पाता वा पालयिता वा।

-निरु०, १०/४२

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिनायसे तुभ्यं प्राण प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि। -प्र० उप०, २/७

प्रजापतिर्वा इदमेक एवाग्रास सोऽकामयत प्रजायेय भूयान्स्यामिति। -ऐ० ब्रा०, १०/१

प्रजापते त्वं निधिपाः पुराणः। देवानां पिता जनिता प्रजानाम्। पतिर्विश्वस्य जगतः परस्पाः।

-तै० ब्रा०, २/८/१/३

प्रजाः प्रजायन्ते प्रजानां प्रजननाय।

-गो० ब्रा०, २/४/५

प्राजापत्या हि पशवः, प्रजापतिः पशूनां प्रजनयिता। -मैत्रा०, २/३/२२

योने रेतः प्रजायते, प्रजापतिः प्रजा असृजत्।

-मैत्रा०, ३/२/३

प्र+✓जनी-प्रादुर्भावे+✓पा-रक्षणे।

## प्रणवः

अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुः सामाथर्वाङ्गिरस ब्रह्म ब्राह्मणेभ्यः प्राणो भवति नामयति च तस्मादुच्यते।

-अथर्व० शि० उप०, ४, बटु० उप० १

अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुः सामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः।

-अ० शि० उप०, ३-४, वटु० उप०, १

प्र+✓णम्-प्रह्वत्वे शब्दे च।

## प्रणीः

''प्रणीर्यज्ञानाः रथीरध्वराणाम्'' - इति। एतेन वै सर्वान् यज्ञान् प्रणयन्ति, ये च पाकयज्ञाः, ये चेतरे। तस्मादाह प्रणीर्यज्ञानामिति।

-श० ब्रा०, १/४/२/१०

प्र+✓णीञ्-प्रापणे।

## प्रणीताः

यदापः प्राणयन्। तस्मादापः प्रणीताः। तत्प्रणीतानां प्रणीतात्वम्।

-श० ब्रा०, १२/९/३/८

प्र+✓णीञ्-प्रापणे।

## प्रणेतृमती

ऋजुनीती नो वरुण इति मैत्रावरुणस्य। मित्रो नयतु, विद्वानिति, प्रणेता वा एषः होत्रकाणां यन्मैत्रावरुणः तस्मादेषा प्रणेतृमती भवति।

-गो० ब्रा०, २/५/१२

प्र+✓णीञ्-प्रापणे।

## प्रतरं

प्र तार्यायुः प्रतरं नवीयः। -ऋ०, १०/५९/१

प्र तार्यग्ने प्रतरं न आयुः।

-ऋ०, १०/१२६/८

प्र+✓तृ-प्लवनसन्तरणयोः।

## प्रतद्वसुः

प्रतद्वसु प्राप्तवसू। -निरु०, ६/२१

प्रतद्+✓वस्-निवासे।

## प्रतरणः

प्रतरणः प्रतरयिता। -ऐ० ब्रा०, ३/२

प्र+✓तृ-प्लवनसंतरणयोः।

## प्रतिगरं

ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति।

-तैत्ति० उप०, १/८

तस्माऽएतत् गृणते प्रत्येवाध्वर्युरागृणाति। तस्मात् प्रतिगरो नाम। -श० ब्रा०, ४/३/२/१

प्रति+✓गृ-शब्दे, सेचने, निगरणे, विज्ञाने च।

## प्रतिधुक्

तस्य प्रतिधुक् प्रातस्सवने वानयत्। प्रतीव वा अनेनाधायीति तस्मात् प्रतिधुक्।

-जै० ब्रा०, २/१५७

प्रति+✓डुधाञ्-धारणपोषणयोः।

## प्रतिनाहभाजनं

एवावकृत्य प्रत्यानह्यातिप्रतीनाहभाजनम्।

-श० ब्रा०, ३/३/४/८१

प्रति+✓णह-बन्धने+✓भज्-सेवायाम् विश्रावणे च।

## प्रतिमा

असौ वै लोकः प्रतिमा। एष ह्यन्तरिक्षलोके प्रतिमित इव। -श० ब्रा०, ८/३/३/५

प्रति+✓माङ्-माने पूजायां वा।

## प्रतिराधः

ता वै प्रतिराधैः, प्रत्यराध्नुवन्, तस्मात् प्रतिराधाः, तत् प्रतिराधानां प्रतिराधत्वम्।

-गो० ब्रा०, २/६/१३

प्रतिराधेन वै देवा असुरान् प्रतिराध्याथैना-नत्यायंस्तथैवैतद् यजमानाः प्रतिराधैनेवाप्रियं भ्रातृत्वं प्रतिराध्याथैनमतियन्ति।

-ऐ० ब्रा०, ३०/७

प्रति+✓राध-संसिद्धौ, वृद्धौ च।

## प्रतिष्ठा

गृहा वै प्रतिष्ठा। तद् गृहेष्वेवैतत्प्रतिष्ठायां प्रतितिष्ठति। -श० ब्रा०, २/४/१/७

प्रतिष्ठा ह वा एषा यत्प्रणवः। सर्वाणि ह वा इमानि भूतानि प्रणव एव प्रतितिष्ठन्ति।

-शौ० उप०, २/४

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च। चक्षुर्वाष प्रतिष्ठा।

-छा० उप०, ५/१/३

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति।

-बृहद० उप०, ६/१/३

प्रति+✓ष्ठा-गतिनिवृत्तौ।

## प्रतिहर्ता

अथ यत् प्रतिहर्ता प्रतिहरति।

-गो० ब्रा०, २/५/४

अथ यत् प्रतिहर्ता प्रतिहरति, व्यानमेव तत् प्राणे दधाति। -शां० ब्रा०, १७/७

प्रति+✓हृ-हरणे।

## प्रतीकं

प्रत्यक्तं भवति प्रतिदर्शनमिति वा।

-निरु०, ७/३१

प्रति+✓अञ्चु-गतिपूजनयोः।

## प्रतूर्तिः

संवत्सरो हि सर्वाणि भूतानि प्रतिरति।

-श० ब्रा०, ८/४/१/१३

प्र+✓तॄ-प्लवनसंतरणयोः, प्र+✓ञित्वरा-सम्भ्रमे।

## प्रत्याहारः

इन्द्रियाणां विचरतां विषयेषु स्वभावतः।
बलादाहरणं तेषां प्रत्याहारः स उच्यते।

-जा० द० उप०, ७/१-२

इन्द्रियाणीन्द्रियार्थेभ्यो यत्प्रत्याहरणं स्फुटं। योगी कुम्भकास्थाय प्रत्याहारः स उच्यते।

-यो० त० उप०, ६८/६९

चरतां चक्षुरादीनां विषयेषु यथाक्रमं तत्प्रत्याहरणं तेषां प्रत्याहारः स उच्यते।

-यो० चू० उप०, १२०

विषयेषु विचरतामिन्द्रियाणां बलादाहरणं प्रत्याहारः। -शा० उप०, १/८/८

प्रति+आङ्+✓हृ-हरणे।

## प्रथमः

प्रथम इति मुख्यनाम। प्रतमो भवति।।

-निरु०, २/२२

✓प्रथ-प्रख्याने।

## प्रदक्षिणा

अपि वा प्रदक्षिणागमनात्। दिशमभिप्रेत्य।

-निरु०, १/७

प्र+✓दक्ष-वृद्धौशीघ्रार्थे च।

## प्रधनं

प्रकीर्णान्यस्मिन् धनानि भवन्ति।

-निरु०, ९/२३

प्र+✓डुधाञ्-धारणपोषणयोः।

## प्रधिः

प्रधिः प्रहितो भवति। -निरु०, ४/२७

प्र+✓डुधाञ्-धारणपोषणयोः।

## प्रपोथा

यत्प्रापोथत्ते प्रपोथा। -ता० ब्रा०, ८/४/१

प्र+✓पुथ-हिंसायां।



## प्रभृथः

प्रभृथस्य प्रभृतस्य। -निरु०, ११/४९

प्र+✓भृञ्-भरणे।

## प्रभूतिः

भूतिरिति शैलिनाः। प्राणं वा अनु प्रजाः पशवः प्रभवन्ति। स य एवमेतं प्रभूतिरित्युपास्ते। प्रैव प्राणेन प्रजया पशुभिर्भवति।।

-जै० उ० ब्रा०, २/२/२/५

तेऽब्रुवन् प्रमंहिष्ठो वै नोऽभूद्, इति। तदेव प्रमंहिष्ठीयस्य प्रमंहिष्ठीयत्वम्।

-जै० ब्रा०, ३/२२५

प्र+✓भू-सत्तायां।

## प्रमंहिष्ठीयं

यद् उ प्र इत्य् अपश्यत् तस्मात् प्रमंहिष्ठीयम् इत्य आख्यायते। -जै० ब्रा०, १/१८२

प्र+✓महि-वृद्धौ।

**प्रमगन्दः**

प्रमगन्दस्य धनानि। मगन्दः कुसीदी। साङ्गदो मामागमिष्यतीति च ददाति। तदपत्यं प्रमगन्दः। अत्यन्तकुसीदिकुलीनः। प्रमदको वा योऽयमेवास्ति लोको न पर इति पेप्सुः।

-निरु०, ६/३२

प्र+✓माङ्-माने+✓गम-गमने+✓दा-दाने, प्रमा+✓मगि-गत्यर्थः।

**प्रमा**

अन्तरिक्षलोके वै प्रमा। अन्तरिक्षलोके ह्यस्माल्लोकात्प्रमित इव।

-श० ब्रा०, ८/३/३/५

प्र+✓माङ्-माने।

**प्रम्लोचं**

''प्रम्लोचन्ति चानुम्लोचन्ती चाप्सरसौ'-इति। दिक्चोपदिशा चेतिहस्माह माहित्थिः। अहोरात्रे तु ते। ते हि प्रचम्लोचतोऽनु च म्लोचतः।

-श० ब्रा०, ८/६/१/१८

प्र+✓म्लुचु-गतौ।

**प्रयज्युः**

द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो। -यजु०, ३३/५५

प्र+✓यज-देवपूजासंगतिकरणदानेषु।

**प्रयाजः**

ततो देवा अर्चन्तः श्राम्यन्तश्चेरुः, त एतान् प्रयाजान् ददृशुः तैरयजन्त। तै ऋतून् संवत्सरं प्राजयन् ऋतुभ्यः संवत्सरात् सपत्नानन्तरायन्, तस्मात्प्रजयाः। प्रजया ह वै नामैतद् यत्प्रयाजाः इति। -श० ब्रा०, १/५/३/३

प्रयाजानुयाजान्यजति। -शां० ब्रा०, १/४

सःवत्सरं वै प्रयाजाः पेरीज्यन्ते।

-मैत्रा०, १/७/४

प्र+✓यज-देवपूजासंगतिकरणदानेषु।

**प्रयुक्**

तद् यत्प्रयुजां हविर्भिर्यजते ऋतून्वाऽएतत्सुषुवाणो युङ्क्तेऽएनमृतवो युक्ता वहन्ति ऋतून्वा प्रयुक्ताननुचरति तस्मात् प्रयुजां हविर्भिर्यजते।

-श० ब्रा०, ५/५/२/१

प्र+✓युजिर-योगे।

**प्रवर्ग्यः**

अथ यत्प्रावृज्यत। तस्मात्प्रवर्ग्यः।

-श० ब्रा०, १४/१/१/१०

वारे वृतं ह्यासां। तस्य ज्यामप्यादन्। तस्य धनुर्विप्रवमाणं शिर उदवर्त्तयत्। तद् द्यावापृथिवी अनुप्रावर्त्तत। यत् प्रावर्त्तत। तद् प्रवर्ग्यस्य प्रवर्ग्यत्वम्। -तैत्ति० आ०, ५/१/५

प्र+✓वृजी-वर्जने।

**प्रवतः**

तद् यद् एतानि सामानि भवन्ति प्रवतैव स्वर्गं लोकं प्रयन्त्य् उद्वतो तत्पतन्ति।

-जै० ब्रा०, ३/२६०

प्रवता वै देवाः स्वर्गं लोकं प्रायन्।

-तां० ब्रा०, १४/३/२४

प्रवत उद्वतो निवत इति, अवतिर्गतिकर्मा।

-निरु०, १०/२०

प्र+✓अव-रक्षणगत्यादिषु।

**प्रवह्लिका:**

तस्मात् प्रवह्लिकाः, तत् प्रवह्लिकानां प्रवह्लिकात्वम्। -गो० ब्रा०, २/६/१३

प्र+✓वह्-प्रापणे।

## प्रवाता

प्रवाता वान्ति पतयन्ति विद्युत उतोषधीर्जिहते पिन्वते स्वः। -ऋ०, ५/८३/४

प्र+✓वा-गतिगन्धनयोः।

## प्रवापयिता

प्रवापयिता प्रैव तेन वापयति। -का० सं०, ११/२-४

प्र+✓डुवप-बीजसन्ताने छेदने च।

## प्रशस्तिः

यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्। प्रशंसन्ति प्रशस्तिभिः। -ऋ०, ८/७३/२

प्र+✓शंसु-स्तुतौ।

## प्रसामः

प्र वा इमे साम्नागुरिति। तस्मात् प्रसाम। तस्मादु प्रसाम्यन्नं अत्ति। -जै० उ० ब्रा०, १/४/१/४

प्र+✓षोऽन्तःकर्मणि।

## प्रसितिः

प्रसितिः प्रसयनात्। तन्तुर्वा। जालं वा। -निरु०, ६/१२

प्र +✓षिञ्-बन्धने।

## प्रस्कण्वः

प्रस्कण्वः, कण्वस्य पुत्रः। कण्वप्रभवो यथा प्राग्रम्। -निरु०, ३/१७

प्र+कण्व।

## प्रस्तोता

अथ यत् प्रस्तोता प्रस्तौति, अपानमेव तत् प्राणे दधाति। -शां० ब्रा०, १७/७

प्र+✓ष्टुञ्-स्तुतौ।

## प्राङ्

प्राङ् प्राञ्चयति। -निरु०, १४/२३

प्र+✓अञ्चु-गतिपूजनयोः।

## प्राचीनं

प्राचीनं यावान् प्रत्यङ् समाहितः। -अथर्व०, ४/११/८

प्र+✓अञ्चु-गतिपूजनयोः।

## प्राणः

प्राणेन प्राणतां प्राणेहैव भव मा मृथाः। -अथर्व०, ३/३१/९

नमस्ते प्राण प्राणते। -अथर्व०, ११/४/८

यच्च प्राणति प्राणेन। -अथर्व०, ११/७/२३

अकृत्सनो हि स प्राणन्नेव प्राणो नाम भवति। -बृहद्० उप०, १/४/७

उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते, प्राणे ह्यस्य संप्रति हुतं भवति य एवं विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम्।। -ऐ० ब्रा०, २५/६

एषा हीदं देवता सर्वं प्राणयत्। तद् यत् प्राणयत् तस्मात् प्राणः। -जै० ब्रा०, ३/३७७

तद् यत् प्राणेन तस्मात् प्राणः। -जै० ब्रा०, २/५०

प्राण प्रणीतानि ह भूतानि प्राणप्रणीताः प्रणीतास्ते ब्रूमः। -गो० ब्रा०, १/२/११

प्राणं प्राणन्तं सर्वे प्राणा अनु प्राणन्तीति। -कौ० ब्रा०उप०, ३/२

प्राणो वा अर्कः। तस्यान्नमेव कम्। अन्नं हि प्राणाय कम्। इति नु एवार्कस्य। -श० ब्रा०, १०/६/२/७

प्राणो वा आपतिः, प्राणमेव तेन प्रीणाति। -गो० ब्रा०, २/२/३

प्राणो वै वायुः प्राणमेव तेन प्रीणाति। -गो० ब्रा०, २/१/२६

प्राणो हीदं सर्वं प्राणेत। तद् यत् प्राणेत तस्मात् प्राणः। -जै० ब्रा०, २/५७

यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते। -केन० उप०, १/८

यदिदं प्राणेन प्राणिति।

-जै० उ० ब्रा०, २/४/१/१६, ३/६/४/२

यद्वै प्राणिति स प्राणः।

-छान्दो० उप०, १/३/३

यद्वै प्राणेनान्नमात्मन् प्रणयते। तत् प्राणस्य प्राणत्वम्। -श० ब्रा०, १२/९/१/१४

यावद् ध्य् एव प्राणेन प्राणिति तावद् अग्निहोत्रं जुहोति। जै० ब्रा०, १/२०

यत्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः।

-प्र० उप०, ४/३

प्र+✓णीञ्-प्रापणे, ✓अन्-प्राणने।

## प्राणभृत्

अङ्गानि प्राणभृन्ति। अङ्गानि हि प्राणान्बिभ्रति। प्राणास्त्वेव। प्राणाः, अन्नं प्राणभृत। अन्नं हि प्राणान्बिभर्ति।

-श० ब्रा०, ८/१/३/१

यत् प्राणान् बिभ्रति। तस्मात् प्राणभृतः।

-श० ब्रा०, ८/१/२/११

प्राण+✓भृञ्-भरणे।

## प्रातरनुवाक्

प्रातर्वै स तं देवेभ्योऽन्वब्रवीद् यत्प्रातरन्वब्रवीत् तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्।इति।।

-ऐ० ब्रा०, ७/५

यदेवैनं प्रातरन्वाह तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्। -शां० ब्रा०, ११/१

प्रातः+✓अत्-सातत्यगमने+अनु+✓वच्-कथने।

## प्रायणीयः

तस्य प्राण एव प्रायणीयोऽतिरात्रः। प्राणेन हि प्रयन्ति। -श० ब्रा०, १२/२/४/१

प्रायणीयेन वा अह्वा देवाः स्वर्गं लोकं प्रायन्यत् प्रायस्तत्प्रायणीयस्य प्रायणीयत्वम्।

-ता० ब्रा०, ४/२/२

प्रायणीयेन वा अह्वा देवा स्वर्गं लोकं प्रायन्। यत् प्रायंस् तत् प्रायणीयस्य प्रायणीयत्वम्।

-जै० ब्रा०, २/३३७

स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते तस्मात्प्रायणीयं नाम। -श० ब्रा०, ४/५/१/२

स्वर्गं वा एतेन लोकमुपप्रयन्ति यत्प्रायणीयस्तत्प्रायणीयस्य प्रायणीयत्वम्।

-ऐ० ब्रा०, २/१

स्वर्गं वा एतेन लोकं प्रयन्ति यत् प्रायणीयं तत् प्रायणीयस्य प्रायणीयत्वम्।

-का० सं०, २३/१९-२०

पुरुषो वाव संवत्सरस्तस्य पादावेव प्रायणीयोऽतिरात्रः। पादाभ्यां हि प्रयन्ति।

-गो० ब्रा०, १/५/३

पुरुषो वाव संवत्सरः तस्य प्राण एव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति।

-गो० ब्रा०, १/५/४

प्र+✓इण्-गतौ, ✓णीज्-प्रापणे।

## प्रियमेधः

प्रियमेधः। प्रिया अस्य मेधा। -निरु०, ३/१७

प्रिय+✓मेधृ-मेधाहिंसनयोः संगमे च।

## प्रेङ्खं

अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम्। -ऋ०, ७/८८/३

तदाहुः किं प्रेङ्खोऽयं वै प्रेङ्खो योऽयं पवत एष ह्येषु लोकेषु प्रेङ्खत इति तत्प्रेङ्खस्य प्रेङ्खत्त्वम्।

-ऐ० आ०, १/२/३

प्र+✓इखि-गत्यर्थः।

## प्रैषः

देवानामेनं घोरैः क्रूरे प्रैषैरभिप्रेष्यामि।

-अथर्व०, १६/७/२

तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन्।

-श० ब्रा०, ३/९/३/२८

तं देवाः प्रैषैः प्रैषमैच्छन्। तत्प्रैषाणां प्रैषत्वम्।

-तै० ब्रा०, २/२/८/५

यज्ञो वै देवेभ्य उदक्रामन्तं प्रैषैः प्रैषमैच्छन्यत्प्रैषैः प्रैषमैच्छंस्तत्प्रैषाणां प्रैषत्वम् इति।

-ऐ० ब्रा०, ११/९

यज्ञो वै देवेभ्य उदक्रामत्। तं प्रैषैः प्रैषमैच्छन्। यत् प्रैषै प्रैषमैच्छन् तत् प्रैषाणां प्रैषत्वम्।

-तै० ब्रा०, ३/२/८/५

प्र+✓इषु-इच्छायां।

## प्लवं

ततो वै स स्वस्तीमान् लोकान् सर्वान् समप्लवत। तद् एव प्लवस्य प्लवत्वम्। स्वस्तीमान् लोकान् सर्वान् संप्लवते य एवं वेद।

-जै० ब्रा० ३/१९५

प्लवेन प्रप्लावयति। -ष० ब्रा० ४/२/१४

✓प्लुङ्-गतौ।

## प्लक्षः

तं देवाः प्रापश्यन्। तस्मात्प्रख्यः। प्रख्यो ह वै नामैतद् यत्प्लक्ष इति।

-श० ब्रा०, ३/८/३/११

तस्य मेधं प्लाक्षारयन्त्स प्लक्षोऽभवत्, तत् प्लक्षस्य प्लक्षत्वम्। -मैत्रा०, ३/१०/८-१०

✓प्लक्ष-अदने।

## बकुर

बकुरो भास्करः। भयंकरः। भासमानो द्रवतीति वा। -निरु०, ६/२५

✓बा-(✓भास्) - दीप्तौ, ✓बा-(✓ञिभी)-भये, ✓डुकृञ्-करणे।

## बतः

बतो बलादतीतो भवति। दुर्बलो बतासि।

-निरु०, ६/२८

ब-बलात्+त-अतीतः।

## बद्धं

बन्धातबद्धमिवादिते। -ऋ०, ८/६७/१८

✓बन्ध-बन्धने।

## बधिरः

बधिरः बद्धश्रोत्रः। -निरु०, १०/४१

✓बन्ध-बन्धने।

## बन्धुः

बन्धु सम्बन्धनात्। -निरु०, ४/२१

✓बन्ध-बन्धने।

## बन्धुमान्

स वा एष उद्गीथो बन्धुमान् बन्धुमत्यः। बन्धुमान् बन्धुमत्यो भवति। जानन्ति ह वा एनं पितृतश्च मातृतश्च। य एवं वेद॥

-दे० ब्रा०, १/२५-२६

✓बन्ध-बन्धने।

## बब्धां

बादिनां अभ्यासेनोपहितेन उपाधामदत्ते बभस्तिरत्तिकर्मा। -निरु०, ५/१२

✓भस्-भर्त्सनदीप्त्योः।

## बभ्रुः

बभ्रूणामहं बभ्रुवर्णानां हरणानां भरणानामिति वा। -निरु०, ९/२८

✓हृञ्-हरणे, ✓डुभृञ्-धारणपोषणयोः।

## बर्हणा

बर्हणा परिबर्हणा। -निरु०, ६/१८

✓बृह-बृद्धौ, ✓बर्ह-परिभाषणहिंसाच्छादनेषु।

## बर्हिः

'बर्हिः' इति तद् बार्हतं रूपम्।

-शां० ब्रा०, २४/२

बर्हिः परिबर्हणात्। -निरु०, ८/०८
✓बर्ह-परिभाषणहिंसाच्छादनेषु।

## बलं

बलं कस्मात्। बलं भरं भवति। बिभर्तेः।
-निरु०, ३/९
✓भृञ्-भरणे।

## बलभिद्

ते बलभिदेव बलम् अभिन्दन्।
-जै० ब्रा०, २/९०
बल+✓भिदि-अवयवे।

## बहुः

बहुः कस्मात्। प्रभवतीति सतः।
-निरु०, ३/१३
✓बृहि-वृद्धौ, ✓भू-सत्तायां।

## बालः

बालो बलवर्ती भर्तव्यो भवति। अम्बास्मा अलं भवतीति वा। बलो वा प्रतिषेधव्यवहितः।
-निरु०, ९/१०
बल+✓भृञ्-पालनपोषणयोः।

## बार्हदुक्थं

बृहदुक्थो वा एतेन वामनेयोऽन्नस्य पुरोधामगच्छदन्नं वै ब्रह्मणः पुरोधान्नाद्यस्यावरुध्यै।
-ता० ब्रा०, १४/९/३८
यद् उ बृहदुक्थ आङ्गिरसोऽपश्यत् तस्मात् बार्हदुक्थं इत्याख्यायते। -जै० ब्रा ३/२१९
✓बृह्-वृद्धौ+✓वच्-परिभाषणे।

## बाहुः

बाहुः कस्मात्। प्रबाधत आभ्यां कर्माणि।
-निरु०, ३/८
✓बाधृ-विलोडने।

## बिलं

बिलं भरं भवति बिभर्तेः। -निरु०, २/१७
✓भृञ्-भरणे।

## बिल्मं

बिल्मं भिल्मं भासनमिति वा।
-निरु०, १/२०
✓भास-दीप्तौ।

## बिल्वं

बिल्वं भरणाद्वा भेदनाद्वा। -निरु०, १/१४
✓भासृ-दीप्तौ, ✓बिल्-भेदने।

## बिसं

बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा।
-निरु०, २/२३
✓बस्-भेदने।

## बीजं

वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः। -ऋ०, १०/९४/१३
वापयेत्तत्र बीजानि सा कृषिः सार्वकामिकी।
-पा० स्मृ० १/५५, व्या० स्मृ०, ४/४८
सुक्षेत्रे बापयेद्बीजं।
-पा० स्मृ० १/४८, १/५६, व्या० स्मृ ४/४९
✓डुबप-बीजसन्ताने।

## बीरिटं

बीरिटं तैटीकिरन्तरिक्षमेवमाह पूर्व वयतेः। भांसि वा तदेतस्यामृच्युदाह्वरन्त्यपि निगमो भवति। उत्तरमितेः। वयांसीरन्त्यस्मिन्। -निरु०, ५/२७
बीरिटमन्तरिक्षं भियो वा भासो वा ततिरपि वोपमार्थे स्यात् सर्वपती इव राजानौ, बीरिटे गणे मनुष्याणाम्। -निरु०, ५/२८
✓भास्-दीप्तौ, ✓भी-भये, बी (वयस्) + ✓इर - गतौ।

## बृद्धशवसः

अपारो वो महिमा वृद्धशवसस्त्वेषं शवोऽव-त्वेवयामरुत्। -ऋ०, ५/८७/६

बृद्ध+✓शिव-गतिवृद्धयोः।

## बृबदुक्थः

बृबदुक्थो महादुक्थः। वक्तव्यामस्मा उक्थमिति। बृबदुक्थो वा। -निरु०, ६/४

✓बृह-बृद्धौ+अति+✓वच्-कथने।

## बृबूकं

बृबूकमित्युदकनाम, ब्रवीतेर्वा स्यात्, शब्दकर्मणः। भ्रंशतेर्वा। -निरु०, २/२२

✓बूञ्-व्यक्तायां वाचि, ✓भ्रंसु-अवस्रंसने।

## बृहच्छोचाः

''बृहच्छोचा यविष्ठय'' इति। बृहदु ह्येष शोचति समिद्धः। -श० ब्रा०, १/४/१/२६

बृहत्+✓शुच-शोके।

## बृहत्

इन्द्राय सोम गायत विप्राय बृहते बृहत्। -सा० पू०, ४/२/५/८, (३८८)

ततो बृहदनु प्राजायत बृहन्यर्य्या इदं स ज्योगन्तरभूदिति तद् बृहतो बृहत्वम्। -ता० ब्रा०, ७/६/५

बृहदिति महतो नामधेयम्। परिवृहळं भवति। -निरु०, १/७

✓बृह-बृद्धौ।

## बृहती

तेऽब्रुवन् स्वर्गं लोकं गत्वा बृहती वा इयं अभूद् ययेदं व्यापामेति। तद् एव बृहत्यै बृहतीत्वम्। -जै० ब्रा०, १/१२०

बृहती बृहतेर्वृद्धिकर्मणः। -दे० ब्रा०, ३/११

बृहती परिबर्हणात्। -निरु०, ७/१२

बृहती मर्य्या ययेमान् लोकान् व्यापामेति तद् बृहत्या बृहत्वम्। -ता० ब्रा०, ७/४/३

✓बृह-बृद्धौ।

## बृहत्कं

बृहत्कम् भवति। सामाऽर्षेयेण प्रशस्तम्। -ता० ब्रा १२/११/१३-१४

बृहद् एव भूत्वा स्वर्गं लोकं अवहत्। तेनाब्रुवन् स्वर्गं लोकं गत्वा बृहद् वाव न इदं कम् अभूद् येन स्वर्ग लोकं व्यापामेति। तद् एव बृहत्कस्य बृहत्कत्वम्। तद् एतत् स्वर्ग्यं साम। बृहद् अस्मै कं भवति अश्नुते स्वर्गं लोकं य एवं वेद। -जै० ब्रा०, ३/७८

✓बृह-बृद्धौ।

## बृहस्पतिः

बृहस्पतिं वृषणं बर्धयन्तो नाना सन्तो बिभ्रतो ज्योतिरासा। -अथर्व०, २०/१९/१०

अथ यः सोपान आसीत् स बृहस्पतिरभवत्। यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः।। -जै० उ० ब्रा०, २/१/२/५

एष उ एव बृहस्पतिः। वाग्वै बृहती तस्या एष पतिः। तस्मादु बृहस्पति।। -बृ० उ०, १/३/२०

बार्हस्पत्यं च ब्राह्मणस्पत्यं वा। -जै० आ० ब्रा०, १/७/२

बृहस्पतिर्बृहतः पाता वा। पालयिता वा। -निरु०, १०/११

वाग्धि बृहती, तस्या एष पतिः। -छा० उ० प०, १/२/११

वाग्वै बृहती। तस्या एष पतिः। तस्मादु बृहस्पतिः। -श० ब्रा०, १४/१/१/२२

✓बृह-बृद्धौ+✓पा-पालने रक्षणे च।

## बुद्धिः

बुद्ध्या बुध्यति। -ग० प०, १

बुद्ध्या बुध्यति। -ना० प० उप०, ६/१

बुद्धि बुद्ध्या बुद्ध्यति। -ना० प० उप०, ६/१

बुद्धिश्च बोद्धव्यम्। -प्र० उप०, ४/८

बुद्धिश्च बोद्धव्यम्। -सु० उप०, ६/२

✓बुध्-अवगमने।

## बुन्दः

बुन्द इषुर्भवति। [ बिन्दो वा ] भिन्दो वा भयदो वा। भासमानो द्रवतीति वा। -निरु०, ६/३३

✓भी-भये, ✓भास-दीप्तौ।

## बुध्नः

बन्धनः। बोधनो वा। -निरु०, १२/३८

बुध्नमन्तरिक्षम्। बद्धा अस्मिन्धृता आप [ इति वा ]। इदमपीतरद् बुध्नमेतस्मादेव। बद्धा अस्मिन्धृताः प्राणा इति। योऽहिः स बुध्न्यः बुध्नमन्तरिक्षम्। तन्निवासात्।

-निरु०, १०/४४

✓बन्ध्-बन्धने।

## बुसं

बुसमित्युदकनाम। ब्रवीतेः शब्दकर्मणः, भ्रंशतेर्वा। यद् वर्षन्पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते।

-निरु०, ५/१९

✓ब्रु-कथने, ✓भ्रंशु-अवस्रंसने।

## बेकनाटः

बेकनाटाः खलु कुसीदिनो भवन्ति। द्विगुणकारिणो वा। द्विगुणदायिनो वा द्विगुणं कामयन्त इति वा। -निरु०, ६/२६

द्वि ( बेक )+✓नट-अवस्पन्दने आप्यायने च।

## बोधः

तां बोध। तया बोधयतीति वा।

-निरु०, १०/८

बोधा मे अस्य वचसो यविष्ठै, ति बौध-द्वतीभ्यामुपतिष्ठते, तस्मात् प्रजाः सुप्त्वा पुनः प्रबुध्यन्ते। -मैत्रा०, ३/२/२

✓बुध-अवगमने।

## ब्रह्म

क्षत्रं बर्धते न ब्रह्म तस्मात्तान्तवं न वसीत ब्रह्मा बर्द्धतां मा क्षत्रमिति। -गो० ब्रा०, १/२/४

तद्येन ह वा इदं विद्यमानं चाविद्यमानं चाभिनिदधाति तद् ब्रह्म।

-गो० ब्रा०, १/२/१३

यस्यैता ब्रह्ममूर्तयो बृहद्ब्रह्माणां ब्रह्म आदधानः यं ब्रह्म ब्रह्मगुप्तये परम्पराय स्वाहा।

-परम० उप०, ३/१०

एष हीदं सर्वं बिभर्ति। तस्माद् एव ब्रह्म। भर्म ह वै नामैषः। तद् ब्रह्मेति परोक्षं आचक्षते।

-जै० ब्रा०, ३/३७९

त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मतद्धि सर्वाणि नामानि बिभर्ति।

-बृ० उ०, १/६/१

अथ रूपाणां चक्षुरित्येतदेषांमुक्थमतो हि सर्वाणि रुपाण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति।

-बृ० उ०, १/६/२

अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वैः कर्मभिः सममे तदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति।

-बृ० उ०, १/६/३

ब्रह्मेदं बृंहिताकारं बृहद्बृंहदवस्थितम्।
-अन्न० उप०, २/३७
✓बृह-बृद्धौ, ✓भृञ्-भरणे।

## ब्रह्मणस्पतिः

ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा।
-निरु०, १०/२
वाग्वै ब्रह्म। तस्या एष पतिः। तस्माद् ब्रह्मणस्पतिः। -श० ब्रा०, १४/१/१/२३
बृह-बृद्धौ+✓पा-रक्षणे।

## ब्रह्मसवः

ब्रह्मसव एषः। ब्रह्मणाभिषिच्यमानोऽभिषिच्याता इति। -जै० ब्रा०, २/१९५

## ब्रह्मा

ब्रह्मैको जाते जाते विद्यां वदति। ब्रह्मा। सर्वविद्यः। सर्वं वेदितुमर्हति। ब्रह्मा परिवृह्ळः श्रुततः ब्रह्म परिवृह्ळः सर्वतः। निरु०, १/८

## ब्राह्मणाच्छंसी

यत्तस्यामेव होत्रयामिन्द्र भूतं पुनन्तः स्तुवन्तः शंसन्तोऽतिष्ठन् तद् ब्राह्मणाच्छंस्यभवत्तद् ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंसित्वम्।
-गो० ब्रा०, १/२/१९
ब्राह्मण+✓शंसु-स्तुतौ।

## भक्षः

तयोरहमनु भक्षं भक्षयामि। -यजु०, ८/३७
पुण्याँश्च भक्षान् भक्षयत्यमृतत्वं च गच्छति।
-साम०, उ०१०/७/५/६ (१३०३)
भक्षो भक्षितो भवति, यममुं देवा भक्षं भक्षयन्ति।
-शां० ब्रा०, १२/५
✓भज-सेवायां।

## भगः

भगं च रत्नं च विभजन्तमायोः।
-ऋ०, ५/४९/१
राजा चिद् यं भगं भक्षीत्याह।
-ऋ०, ७/४१/२, अथर्व० ३/१६/२
भगो भजतेः। -निरु०, १/७
स्त्री भगस्तथा स्यात् भजतेः। -निरु०, ३/१६
✓भज-सेवायां।

## भगवान्

भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्त स्याम। -अथर्व०, ३/१६/५
✓भज-सेवायां।

## भद्रं

भद्रेण वै देवा भद्रा अभवन्।
-जै० ब्रा०, २/१०३
भद्रं भगेन व्याख्यातम्। भजनीयं भूतानामभिद्रवणीयम्। भवद्रमयतीति वा भाजनवद्वा॥ -निरु०, ४/१०
भद्रे भन्दनीये। भाजनवति वा।
-निरु०, ११/१९
✓भज-सेवायां, ✓भदि-कल्याणे सुखे च।

## भन्दना

भन्दना भन्दतेः स्तुतिकर्मणः। -निरु०, ५/२
✓भदि-कल्याणे सुखे च।

## भरः

भर इति सङ्ग्राम नाम। भरतेर्वा। हरतेर्वा।
-निरु०, ४/२४
✓भृञ्-भरणे, हृ-हरणे।

## भरतः

अग्निर्वै भरतः, स वै देवेभ्यो हव्यं भरति।
-शा० ब्रा०, ३/२
प्रजापतिर्वै भरतः। स हीदं सर्वं बिभर्ति।
-श० ब्रा०, ६/८/१/१४
एष हि देवेभ्यो हव्यं भरति, तस्माद्-भरतोऽग्निरित्याहुः। एष उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्ति, तस्माद्वेवाह भरतवदिति।
-श० ब्रा०, १/५/१/८

✓डुभृञ्-धारणपोषणयोः।

**भरद्वाजः**

मनो वै भरद्वाज ऋषिः। अन्नं वाजः। यो वै मनो बिभर्त्ति सोऽन्नं वाजं भरति। तस्मान्मनो भरद्वाज ऋषि। -श० ब्रा०, ८/१/१/९

✓भृञ्-भरणे।

**भरद्वाजस्यादारसृद्**

भरद्वाजस्यादारसृद् भवति। अनेन दारेनासृम्मेति तद्दारसृतोऽदारसृत्वं विन्दते।

-ता० ब्रा०, १५/३/६-७

यद् अब्रवीद् भरद्वाजो न वै दारेऽसृन्मेति, तद् एवादारसृतोऽदारसृत्त्वम्। यद उ भरद्वाजोऽपश्यत् तस्मात् भरद्वाजस्यादारसृत् इत्याख्यायते।

-जै० ब्रा०, ३/२४८

भरद्वाजस्य+अदार+✓सृ-गतौ।

**भर्गः**

भर्गाख्यो भाभिर्गतिरस्य हीति भर्गो भर्जति वैष भर्ग इति। -मै० उ०, ५/७

✓भृजी-भर्जने।

**भर्ता**

बिभर्ति भर्ता विश्वस्योच्छिष्टो जनितुः पिता।

-अथर्व०, ११/७/१५

✓डुभृञ्-धारणपोषणयोः।

**भवः**

पर्जन्यो वै भवः। पर्जन्याद्धीदं सर्वं भवति।

-श० ब्रा०, ६/१/३/१५

✓भू-सत्तायाम्।

**भस्म**

भस्म सर्वावभक्षणात्। -बृ० जा० उप०, १/१

✓भस-भर्त्सनदीप्त्योः, ✓भक्ष-अदने।

**भागः**

भजतां भागो, मां भागो भक्त।

-मैत्रा०, १/४/६३

✓भज-सेवायां।

**भानुः**

उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः।

-ऋ०, १/४८/९

सुसंदृशा भानुना यो विभाति प्रति गावः समिधानं बुधन्त। -ऋ०, ७/९//४

अस्मे श्रेष्ठेमिर्भानुभिर्विभाह्युषो देवि प्रतिरन्ती न आयुः। -ऋ०, ७/७७/५

यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋता-वाजस्रः। -ऋ०, १०/६/२

सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी रोदसी भानुना भात्यन्तः। -ऋ०, १०/४५/४

✓भा-दीप्तौ।

**भान्तः**

वज्रो वै भान्तः। वज्र पञ्चदशः अथो चन्द्रमा वै भान्तः पञ्चदशः। स च पञ्चदशाहान्यापूर्यते, पञ्चदशा पक्षीयते। तद्यत्तमाह भान्तः इति। भाति हि चन्द्रमाः। -श० ब्रा०, ८/४/१/१०

✓भा-दीप्तौ।

**भामः**

भामो अभिभाति। -अथर्व०, ४/३२/५

✓भा-दीप्तौ।

**भामनीः**

एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद।

-छा० उप०, ४/१५/४

✓भा-दीप्तौ।

**भासं**

भासं भवति भाति तुष्टुवानः।

-ता० ब्रा०, १४/११/१२

विभाति भासा। -ऋ०, १०/३/१

स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत् स न व्यरोचत तस्यात्रिभासेन तमोऽपाहन् स व्यरोचत यद्वै तद्भा अभवत्तद्भासस्य भासत्वम्।

-ता० ब्रा०, १४/११/१५

✓भासृ-दीप्तौ।

## भसितं

भासनाद् भसितम्। -बृ० जा० उप०, १/१

✓भासृ-दीप्तौ।

## भारं

गर्भो भारम् भरत्या चिदस्या ऋतं।

-अथर्व०, ९/१०/२३

✓भृञ्-भरणे।

## भारतः

एष हि देवेभ्यो हव्यं भरति, तस्माद् भरतोऽग्निरित्याहुः। एष उ वा इमाः प्रजा प्राणो भूत्वा बिभर्त्ति, तस्माद्वेवाह भारतेति।

-श० ब्रा०, १/४/२/२

भारतेत्याहैष हि देवेभ्यो हव्यं भरति।

-तै० सं०, २/५/९/१

✓भृञ्-भरणे।

## भारद्वाजः

भरणाद्भरद्वाजः। -निरु०, ३/१७

✓भृ-भरणे।

## भारती

भारती भरत आदित्यस्तस्य भाः।

-निरु०, ८/१३

✓भा-दीप्तौ, ✓भृञ्-भरणे।

## भिषग्

भिषग् भेषजस्यासि कर्त्ता।

-अथर्व०, ५/२९/१

भेषजं भिषजो बिदुः। -अथर्व०, ८/७/२६

✓भिषज्-चिकित्सायां।

## भीम

भीमो बिभ्यत्यस्मात्। -निरु०, १/२०

✓भी-भये।

## भीमलः

भीमं बत मलमपावधिषतेति। तस्मात् भीमला धियो वा एताः। धियो वा इमा मलमपावधिषतेति। तस्मादु भीमलाः। तस्मादु गायता नाश्नीयात्। मलेन ह्येते जीवन्ति।।

-जै० उ० ब्रा०, १/१८/२/१

भीम+✓ला-आदाने।

## भीषणं

अथ कस्मादुच्यते भीषणमिति यस्माद्भीषणं यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्च न बिभेति भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चमः इति तस्मादुच्यते। भीषणमिति।

-नृ० पू० ता० उप०, २/४

✓भी-भये।

## भीष्मः

भीष्मोबिभ्यत्यस्मादेव। -निरु०, १/२०

✓भी-भये।

## भुज्युः

यज्ञो वै भुज्युः। यज्ञो हि भूतानि भुनक्ति।

-श० ब्रा०, ९/४/१/११

✓भुज-पालनाभ्यवहारयोः।

## भुरण्युः

भुरण्युरितिक्षिप्र नाम। भुरण्युः शकुनिः। भूरिमध्वानं नयति। स्वर्गस्य लोकस्यापि बोळ्हा।

तत्संपाती भुरण्युः॥ -निरु०, १२/२२

✓भुरण-धारणपोषणयोः।

## भुवः

अग्निर्वै भुवः, अग्नेर्हीदं सर्वं भवति।

-श० ब्रा०, ८/१/१/४

✓भू-सत्तायाम्।

## भूतच्छेदः

तद्यदेतान् (असुरान्) इमे देवाः सर्वेभ्यो-भूतेऽभ्योऽछादयन्तस्माद् भूतेछदस्तद् भूतेछदां भूतेच्छत्वम्। -गो० ब्रा०, २/६/१४

मायया तेषां वै देवा असुराणां भूतेच्छद्भिरेव भूतं छादायेत्वाऽर्थेनानत्यायंस्तथैवैतद् यजमाना भूतेच्छद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाऽथैनमतियन्ति॥

-ऐ० ब्रा०, ३०/१०

भूत+✓छदि-संवरणे।

## भूतवत्

देवोऽभवत्तदस्यैतद् भूतवन्नाम। इति।

-ऐ० ब्रा०, १३/९

✓भू-सत्तायां।

## भूतिः

भूतिरिति भाल्लाबिनः। प्राणं वा अनु प्रजाः पशवो भवन्ति। स य एवमेतं भूतिरित्युपास्ते। भवत्येव प्राणेन प्रजया पशुभिः॥

-जै० उ० ब्रा०, २/२/२/६

✓भू-सत्तायां।

## भूमा

भूमा वा अनः। भूमा हि वा अनस्तस्माद् यदा बहु भवति। -श० ब्रा०, १/१/२/६

✓भू-सत्तायां।

## भूमिः

भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। -यजु०, १३/१८

अभूद्वा इदमिति। तद्भूम्यै भूमित्वम्।

-तै० ब्रा०, १/१/३/६

अभूद्वाऽयं प्रतिष्ठेतितद्भूमिरभवत्।

-श० ब्रा०, ६/१/१/१५

अभूत् इव वा इदमिति तद्भूमेर्भूमित्त्वम्।

-ता० ब्रा०, २०/१४/२

इयं वै भूमिः। अस्यां वै स भवति यो भवति।

-श० ब्रा०, ७/२/१/११

यद् अभवत् तस्मात् भूः।

-जै० ब्रा०, २/१४७

तद् इदं अभवत्। अभूद् वा इदं इति। तद् भूमेः भूमित्वम्। -जै० ब्रा०, २/२४४

भूमिः भूत्वा भूतं भयं अभवत्।

-जै० ब्रा०, १/३१४

यदभवत् तद्भूमिः। -का० सं०, ८/४-५

अप्सु भूमीः शिश्यिरे भूरिभाराः सत्यं महीरधितिष्ठन्त्यापः। -जै० उ० ब्रा०, १/२/३/१०

✓भू-सत्तायां।

## भूयः

तस्मात् तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यशः। स य एतदेवं वेद॥

-जै० उ० ब्रा०, १/२/१/१२

✓भू-सत्तायां।

## भूरिः

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर।

-ऋ०, ४/३२/२०

अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि। -यजु०, ६/३

भूरीति बहुनो नामधेयम् प्रभवतीति सतः।

-निरु०, २/७

प्र+✓भू-सत्तायां।

## भूरिक्

भरणात् भूरिगुच्यते। -दे० ब्रा०, ३/२१

✓डुभृञ्-धारणपोषणयोः।

## भूरिदा

भूरिदा भूरि देहि नो मा दभ्रं भूर्या भर। भूरि घेदिन्द्र दित्ससि। -ऋ०, ४/३२/२०

✓डुभृञ्-धारणपोषणयोः+✓दा-दाने।

## भूरिदावत्तर

भूरिदावत्तरौ बहुदातृतरौ। -निरु०, ६/९

भूरि+✓दा-दाने।

## भृगुः

तस्मात् भृगुः समभवत्, तत् भृगो भृगुत्वम् भृगुरिव वै स सर्वेषु लोकेषु भाति य एवं वेद। -गो० ब्रा०, १/१/३

भृगुर्भृज्यमानो न देहे। -निरु०, ३/१७

✓भृस्ज-पाके।

## भृतिं

भृतिं न भरा मतिभिर्जुजोषते। -सा० पू०, ६/२/३/८, (५७३)

✓डुभृञ्-भरणे।

## भृमिः

भृमिर्भ्राम्यतेः।

भृम्यश्वो भृमयोदस्याश्वाः। अश्वभरणाद्वा। -निरु०, ९/२४

✓भ्रमु-चलने।

## भृष्टिः

भृष्टिर्न भ्राजते। -ऋ०, १/५६/३

✓भ्रस्ज-पाके।

## भ्राजिः

भ्राजिरसि भ्राजोऽसि, स यथा त्वं भ्राज्या भ्राजस एवमहं भ्राज्या भ्राजिषीय, तवेव मे भ्राजमानस्य भ्राजो भूयासुः। -मै० सं०, ४/९/८४

✓भ्राजृ-दीप्तौ।

## भ्राता

भ्राता भरतेर्हरतिकर्मणः। हरते भागं भर्तव्यो भवतीति वा। -निरु०, ४/२६

✓डुभृञ्-धारणपोषणयोः, भरणे च, ✓हृञ्-हरणे।

## भेकुरिः

भाकुरयो ह नामैते। भां हि नक्षत्राणि कुर्वन्ति। -श० ब्रा०, ९/४/१/९

✓भा-दीप्तौ+✓डुकृञ्-करणे।

## भैषज्यं

तद् एतया भिषज्यति भैषज्यमेवैषा। -शां० ब्रा०, १६/८

✓भिषज्-चिकित्सायां।

## भोजनं

वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत्। -व्या० स्मृ०, २/२७

✓भुज-पालनाभ्यवहारयोः।

## मखः

मख इत्येतद् यज्ञ नामधेयम्। छिद्रप्रतिषेध सामर्थ्यात्। छिद्रं खमियुक्तं तस्यमेति प्रतिषेधः। -गो० ब्रा०, २/२/५

✓मह-पूजायां, ✓मखि-गत्यर्थे।

## मखवान्

स उ ऽएव मखः। स विष्णुः। तत इन्द्रो मखवानभवत्। मखवान् ह वै। तं मघवानित्याचक्षते परोक्षम्। -श० ब्रा०, १४/१/१/१३

✓मखि-गत्यर्थे, ✓मह-पूजायां।

**मगन्दः**

मगन्दः कुसीदी। माङ्गदो मामागमिष्यतीति च ददाति। -निरु०, ६/३२

मग (मघ)+✓दा-दाने।

**मघं**

स्तोतृभ्यो मंहते मघम्। -ऋ०, १/११/३

मघमिति धननामधेयम्। मंहतेर्दानकर्मणः। -निरु०, १/७

✓मह-पूजायां।

**मघवन्नन्धिः**

मघवन्नन्धयेति। रध्यतिर्वशगमने। -निरु०, ६/३२

मघवन्+✓रध-हिंसासंराध्योः।

**मघवा**

मघवन्मघत्तये। -ऋ०, ८/२४/१०

मघैर्मघवा वृत्रहा भुवत्। -ऋ०, १०/२३/२

दाता मघानि मघवा सुराधाः। -सा० पू०, ४/१/५/४, (३३५)

✓मह-पूजायां।

**मघोनी**

मघोनी मघवती। मघमिति धननामधेयम्। मंहतेर्दानकर्मणः। -निरु०, १/७

✓मह्-पूजायां।

**मङ्गलं**

मङ्गलं गिरतेगृणात्यर्थे। गिरत्यनर्था निति वा। अङ्गलमङ्वत्। मज्जयति पापकमिति नैरुक्ताः। मां गच्छत्विति वा। -निरु०, ९/४

✓मागि-गतौ।

**मज्जा**

मज्जा मज्ज्ञा भवतु। -अथर्व०, ४/१२/३

मज्जा मज्ज्ञा सं धीयतां। -अथर्व०, ४/१२/४

✓टुमस्जो-शुद्धौ।

**मण्डः**

मण्डो मदेर्वा मुदेर्वा। निरु०, ९/५

✓मडि-भूषायां।

**मण्डूकः**

मण्डूका मज्जूका मज्जनात्। मदतेर्वा मोदतिकर्मणः। मन्दुतेर्वा तृप्तिकर्मणः। मण्डयतेरिति वैयाकरणाः। मण्डएषामोक इति वा। -निरु०, ९/५

✓मडि-भूषायां, ✓मद्-तृप्तियोगे।

**मतिः**

वाग्वै मतिः। वाचा हीदं सर्वं मनुते। -श० ब्रा०, ८/१/२/७

✓मनु-अवबोधे।

**मत्सखा**

मत्सखा मम सखा। मदनसखा। ये नः सखायस्तैः सहति वा। -निरु०, १३/४

मत् (मम)+सह+✓ख्या-प्रकथने।

**मत्सरः**

मत्सराः मादयिष्णवः। -ऋ०, १/१४/४

मत्सरः सोमः। मन्दतेस्तृप्तिकर्मणः। मत्सर इति लोभनाम। अभिमत्त एनेन धनं भवति। -निरु०, २/५

✓मदी-हर्षे।

**मत्स्या**

मत्स्या मधा उदके स्यन्दते। माद्यन्तेऽन्योन्यं भक्षणायेति वा। -निरु०, ६/२७

✓मदी-हर्षे।

**मदः**

मदा अमदन्। -ऋ०, १/५३/६

ते त्वा मदा इन्द्र मादयन्तु। -ऋ०, ७/२३/५
स त्वामदद्वृषा मदः। -ऋ०, १/८०/२
कस्त्वा सत्यो मदानां मंहिष्ठ मत्सदन्धसः। दृढा चिदारुजे वसु॥ -यजु०, ३६/५
मदा इन्द्र मादयन्तु शुष्मिणं।
-अथर्व०, २०/१२/५
✓मदी-हर्षे, ✓मद्-तृप्तियोगे।

## मधुः

मादयध्वं मरुतो मध्वो अन्धसः।
-ऋ०, १/८५/६
मध्वा मदेम सह नू समानाः। -ऋ०, ३/५८/६
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः।
-ऋ०, ८/३८/३
एतावेव वासन्तिकौ। स यद्वसन्तऽओषधयो जायन्ते, वनस्पतयः पच्यन्ते। तेन हैतो मधुश्च माधवश्च। -श० ब्रा०, ४/३/१/१४
मधु सोममित्यौपमिकं माद्यतेः इदमपीतरन्मध्वेतस्मादेव। -निरु०, ४/८
✓मदी-हर्षे।

## मधुछन्दः

मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दसि तन्मधुच्छन्दसो मधुच्छन्दस्त्वम्।
-ऐ० आ०, १/१/३
मधु+✓छदि-संवरणे, ✓छदिर्-ऊर्जने।

## मनः

मनश्च मन्तव्यम्। -प्र० उप०, ४/८
मननान्मन उच्यते। -म० उप०, ४/१२३
मनुते मनः। -अ० पू० उप०, ४/४८
मनोऽध्यात्मं मन्तव्यम्। -सु० उप०, ५/६
मनो मनोतेः। -निरु०, ४/४
यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यन्मन्वीत।
-बृहद० उप०, ४/३/२८

यन्मनसा न मनुते येनाहुर्मनो मतम्।
-केन०उप०, १/५
मनो भूत्वा सर्वं अमनुत। -जै० ब्रा०, १/३१४
✓मन-ज्ञाने, ✓मनु-अवबोधने।

## मनीषा

मनीषया मनस ईषया स्तुत्या प्रज्ञया वा।
-निरु०, ९/१०, २/२५
मनस्+✓ईष-गतिहिंसादर्शनेषु।

## मनीषी

मनीषिणो मनसा पृच्छतेदुतद्यदध्यतिष्ठद्भुवनानिधारयन्। -ऋ०, १०/८१/४
मनस्+✓ईष-गतिहिंसादर्शनेषु।

## मनुः

प्रजापति र्वै मनुः। स हीदं सर्वममनुत।
-श० ब्रा०, ६/१/१/१९
मनुर्मननात्। -निरु०, १२/३३
✓मन-ज्ञाने।

## मनुवृतः

होता मनुवृत इति शंसत्ययं वा अग्निर्होता मनुवृत्तः। अयं हि सर्वतो मनुष्यैर्वृतोऽग्निमेव तदस्मिंल्लोक आयातयति।
-ऐ० आ०, १०/२
मनु+✓वृ-वरणे।

## मनुष्यः

स (प्रजापतिः) देवान्सृष्ट्वामनस्यत् एव, तेन मनुष्यानसृजत्, तन्मनुष्याणां मनुष्यत्वं स यस्तन्मनुष्याणां मनुष्यत्वं वेद मनुस्वान् ह भवति।
-मै० सं०, ४/२/१
पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या अमन्महि। -ऋ०, १०/३५/८

मनुष्याः कस्मात्। मत्वा कर्माणि सीव्यन्ति, मनस्यमानेन सृष्टाः मनस्यतिः पुनर्मनस्वी। मनोरपत्यम्। मनुषो वा। -निरु०, ३/७

स (प्रजापतिः) पितृन्सृष्ट्वाऽमनस्यत् तदनुमनुष्यानसृजत। तन्मनुष्याणां मनुष्यत्वम्। मनस्येव भवति नैनं मनुर्जहाति। -तै० सं०, २/३/८/३

✓मन्-ज्ञाने, ✓मनु-अवबोधने।

## मनोता

तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि। -ऐ० ब्रा०, ६/१०

मनोता, तस्मिन् ह्येषां मनांस्योतानि भवन्ति। -शां० ब्रा०, १०/६

✓मन-ज्ञाने।

## मन्त्रः

मन्त्रा मननात्। -निरु०, ७/१२, ७/३१, ७/३२

✓मन-अवबोधने।

## मन्थः

स दशधाभवत् शतधा सहस्रधा यावतीयं पृथिवी तावान् अभवत्। तद् अभिसंपद्य व्यमथ्नत। स मन्थोऽभवत्। तन् मन्थस्य मन्थत्वम्। -जै० ब्रा०, ३/३५०

✓मन्थ-विलोडने।

## मन्थिता

इन्द्रो मन्थतु मन्थिता शक्रः शूरः पुरंदरः। -अथर्व०, ८/८/१

तदेनं मन्थं करोति। तेनोऽएष मन्थी। -श० ब्रा०, ४/२/१/२

✓मन्थ-विलोडने।

## मन्दिन्

मन्दि मिन्द्राय मन्दिने। -ऋ०, १/९/२

मन्दी मन्दतेः। स्तुति कर्मणः। -निरु०, ४/२४

✓मदि-स्तुतिमोदमदस्वप्नकान्तिगतिषु।

## मन्दू

मन्दू मदिष्णू युवां स्थः अपि वा मन्दुना तेनेति स्यात्। -निरु०, ४/१२

✓मदि-स्तुतिमोदमदस्वप्नकान्तिगतिषु।

## मन्द्रजिह्वं

मन्द्रजिह्वं मन्दनजिह्वं। मोदन जिह्वमिति वा। -निरु०, ६/२३

✓मदि-स्तुतिमोदमदस्वप्नगतिकान्तिषु+✓लिह्-आस्वादने।

## मन्युः

मन्युर्मन्यतेः। दीप्तिकर्मणः। क्रोधकर्मण। [वधकर्मणो] वा। -निरु०, १०/२९

✓मन-ज्ञाने।

## मन्विद्धः

अग्निर्मन्विद्ध इति शंसत्ययं वा अग्निर्मन्विद्ध इमं हि मनुष्या इन्धतेऽग्निमेव तदस्मिँल्लोक आयातयति। -ऐ० ब्रा०, १०/२

मनुर्ह्येतमग्र ऐन्ध। तस्मादाह मन्विद्ध इति। -श० ब्रा०, १/४/२/५

✓मन-ज्ञाने+✓ञिइन्धि-दीप्तौ।

## मरुतः

मरुतो मर्त्येषित। -ऋ०, १/३९/८

मरुतोमितराविणो वा। मितरोचिनो वा महदद्रवन्तीति वा। -निरु०, ११/१३

✓मृङ्-प्राणत्यागे, ✓मा-माने+✓रु-शब्दे, ✓रुच- दीप्तावभिप्रीतौ च।

## मरुद्वृधाः

मरुद्वृधाः सर्वा नद्यो मरुत एना वर्धयन्ति।
-निरु०, ९/२६

मरुत्+✓वृधु-वृद्धौ।

## मर्त्तः

मर्त्तो मर्त्तं मर्चयति द्वयेन। -ऋ०, १/१४८/५

✓मृङ्-प्राणत्यागे।

## मर्त्त्यः

मर्त्त्याः पितरः। पुरा हायुषो म्रियते।
-श० ब्रा०, २/१/४/९

✓मृङ्-प्राणत्यागे।

## मर्यः

मर्यो मनुष्यो मरणधर्मा। -निरु०, ३/१५

✓मृङ्-प्राणत्यागे।

## मर्यादा

मर्यादाभिधानं वा स्यात्। [ मर्यादा मर्यैरादीयते ] मर्यादा मर्यादिनोविभागः। -निरु०, ४/२

मर्य+✓दा-दाने।

## महः

पशवो वै महः। तस्माद्यस्यैते बहवो भवन्ति। भूयिष्ठमस्य कुरुते महीयंते।
-श० ब्रा०, ११/८/१/३

बण्महाँऽअसि सूर्य बडादित्य महाँऽअसि। महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँऽअसि।
-यजु०, ३३/३९

मह इत्यादिव्य। आदित्येन वाव स्वर्गे लोके महीयन्ते। मह इति चन्द्रमाः। चन्द्रमा वाव सर्वानि ज्योतिंषि महीयन्ते। मह इति ब्रह्म। ब्रह्मणः वाव सर्वे वेदा महीयन्ते। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणाः महीयन्ते।
-तैत्ति० उप०, १/५/१-४

✓मह-पूजायां।

## महत्

महान् कस्मात्? मनोनान्याञ्जहातीति शाकपूणिः। मंहनीयो भवतीति वा। -निरु०, ३/१३

✓मह-पूजायां।

## महती

महती महोन्माना। -अथर्व०, ५/८/९

✓मह-पूजायां।

## महर्त्विज्

अश्वस्य वा आलब्धस्य महिमोदक्रामत्। स महर्त्विजः प्राविशत्। तन्महर्त्विर्विजां महर्त्विक्त्वम्।
-तै० ब्रा०, ३/८/२/४

महा+ऋत्विक्।

## महन्या

महन्यमकरोत् तन्महन्या महान् घोष आसीत् तन्महानाम्न्यः। -ता० ब्रा०, १३/४/१

✓मह-पूजायां।

## महानाम्नी

इन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्योऽथो इमे वै लोका महानाम्न्य इमे महान्तः॥ इति। -ऐ० ब्रा०, २२/२

तानि सर्वाणि छन्दाँसि संभृत्य तैरिन्द्रो वृत्रमहन्। यन्महान्तमर्हस्तस्मान्महानाम्न्यः।
-जै० ब्रा०, ३/१११

यदब्रवीन् (प्रजापति) महद् बतासामिद-मानमभूदिति तन्महामानीनां महामानित्वम्। महामानयो ह वै नामैतास्ता महानाम्नय इति

परोक्षमाख्यायन्ते।

-जै० ब्रा०, ३/१०४

महन्यमकरोत् तन्महन्या महान् घोष आसीत् तन्महानाम्न्यः। -ता० ब्रा०, १३/४/१

सोऽब्रवीन् महद् बतासां इदं मानम् अभूद् इति। यद् अब्रवीन् महद् बतासां इदं मानं अभूद् इति तन् महामानीनां महामानित्वम्। महामानयो ह वै नामैताः। ता महानाम्न्य इति परोक्षं आख्यायन्ते। -जै० ब्रा०, ३/१०४

✓मह-पूजायां+✓णम-प्रह्वत्वे।

## महाविष्णुः

अथ कस्मादुच्यते महाविष्णुरिति यस्मात् स्वमहिम्ना सर्वाल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुव्याप्तं व्यतिषिक्तो व्याप्यते व्यापयते यस्मान्न जातः परो अन्योऽस्ति य आविवेश भुवनानि विश्वा प्रजापतिः प्रजया संविदानः त्रीषि ज्योतींषि सचते सषोडशीं तस्मादुच्यते महाविष्णुरिति।

-नृ० पू० ता० उप०, २/४

महद्+वि+✓विष्लृ-व्याप्तौ।

## महावीरः

महतो वीर्यमपत्तदिति। तन्महावीरस्य महावीरत्वम्। -तैत्ति० आ०, ५/१/५

महान्बत नो वीरोऽपादीति। तस्मान्महावीरः।

-श० ब्रा०, १४/१/१/११

महा+✓वी-गतिव्याप्तिप्रजनादिषु, ✓वीर-विक्रान्तौ।

## महावैश्वामित्रं

पाप्मानं हत्वा यदमहीयन्त तत् महावैश्वामित्रस्य महावैश्वामित्रत्त्वम्॥ -ता० ब्रा०, १३/६/१२

सोऽब्रवीत् महद् वा इदं विश्वामित्रस्याभूद् इति। तदेव महावैश्वामित्रस्य महावैश्वामित्रत्वम्। यद् उ विश्वामित्रोऽपश्यत् तस्मात् महावैश्वामित्रं इत्याख्यायते।

-जै० ब्रा०, ३/१३४

✓महीङ्-पूजायां+वैश्वामित्रम्।

## महाव्रतं

इन्द्रो वै वृत्रं हत्वा महानभवद्यन्महानभवत्तन्महाव्रतमभवत्तमहाव्रतस्य महाव्रतत्वम्।

-ऐ० आ०, १/१/१

ता यद् अब्रुवन् महते व्रतं हराम इति तन् महाव्रतस्य महाव्रतत्वम्। तद् अस्मै प्रायच्छत्। तद् अव्रतयत्। ताः प्रमोदन्त महाव्रतयतीति।

-जै० ब्रा०, २/४०९

तेनैनमभिषज्यन्। महानववर्तीति। तन्महाव्रतस्य महावृतत्वम् महद् व्रतमिति तन्महाव्रतस्य महाव्रतत्वमिति। -तै० ब्रा०, १/२/६/१

महन्मर्यां व्रतं यदिमममधिन्वीदित तन्महाव्रतस्य महावृतत्वम्। -ता० ब्रा०, ४/१०/१

प्रजापतिर्वाव महांस्तस्यैतद्व्रतमन्नमेव।

-ता० ब्रा०, ४/१०/२

महा+✓वृञ्-वरणे।

## महाव्रतीयः

महद्वाऽइदं ब्रतमभूद् येनायं समहास्तेति। तस्मान्महाव्रतीयो नाम। -श० ब्रा०, ४/६/४/२

महा+✓वृञ्-वरणे।

## महाशनः

एष उ ह वाव देवानां महाशनतमो यदग्निः। तन्न व्रत्यमददानोऽश्नीयात्। यो वै महाशने अनश्नति अश्नाति ईश्वरो हैनमभिषङ्क्तोः। पूतिमिव हाश्नीयात्। अथो ह प्रोक्तेऽशने ब्रूयात् समिन्त्स्वाग्निमिति। स यथा प्रोक्तेऽशने श्रेयाँसं परिवेष्टवै ब्रूयात् तादृक् तत्॥

-जै० उ० ब्रा०, २/५/३/१-३

महा+✓अश-भोजने।

## महिमा

महान्तमस्य महिमानमाहुरिति महान्तं ह्येतस्य महिमानमाहुः। -जै० उ० ब्रा०, ३/१/२/१६

✓मह-पूजायां।

## महिव्रतः

महिव्रतो महाव्रत इति। -निरु०, ३/१७

✓मह-पूजायां+✓वृञ्-वरणे।

## महिषः

अग्निर्वै महिषः। स हीदं जातो महान् सर्वमैष्णात्। -श० ब्रा०, ७/३/१/२३

महत्यन्तरिक्षलोक आसीना महान्त इति वा गृह्णत माध्यमिका देवगणाः। -निरु०, ७/२६

✓महीङ्-पूजायां, महिषः ✓इष-आभिक्ष्ण्ये, गतौ च।

## मही

प्रमहसा महीजजान। -ऋ०, ८/२५/३

इमां ते धियं प्र भरे महो महीयस्य स्तोत्रे धिषणा यत्त आनजे। -यजु०, ३३/२९

महान् मही अस्कभायद्। -अथर्व०, ४/१/४

✓महीङ्-पूजायां।

## महीमांसं

महीया मांसान्यस्य तानि। मांसैर्हि सह महीयते। ततो वयांस्यसृजत। तदस्य वयांस्यनुपतिष्ठन्ते। तस्मात् तानि प्रपतिष्णूनीव महीमांसानि॥ -जै० उ० ब्रा०, १/१५/३/५

✓महीङ्-पूजायां+✓मन-ज्ञाने।

## महीनांपयः

महा इति ह वा एतासामेकं नाम यद्भवाम्। तासां वा एतत्पयो भवति। तस्मादाह महीनां पयोऽसीति। -श० ब्रा०, ३/१/३/९

✓महीङ्-पूजायां+✓पा-पाने।

## महेन्द्रः

यन्महानिन्द्रोऽभवत् तन्महेन्द्रस्य महेन्द्रत्वम्। -ऐ० ब्रा०, १२/१०, तै० ब्रा०, १/६/२/४

✓महीङ्-पूजायां+✓इदि-परमैश्वर्ये।

## महेश्वरः

अथ कस्मादुच्यते महेश्वर इति। यस्मान्महत ईशः शब्दध्वन्या चात्मशक्त्या च महत् ईशते तस्मादुच्यते महेश्वर इति। -शा० उप०, ३/१

✓महीङ्-पूजायां+✓ईश-ऐश्वर्ये।

## माघः

माघे वा। मा नोऽघं भूदिति। -श० ब्रा०, १३/८/१/४

मा (नञ्)+अघ-पापं।

## मातरिश्वन्

मातरिश्वा वायुः। मातर्यन्तरिक्षे श्वसिति। मातर्याश्वनितीति वा। -निरु०, ७/२६

मातृ+✓श्वस्-प्रापणे।

## माता

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति। -ऋ०, १/३८/८

माता पृथिवी महीयम्। -अथर्व०, ९/१०/१२

मातान्तरिक्षम्। निर्मीयन्तेऽस्मिन् भूतानि। -निरु०, २/८

मातरो भासो निर्मात्र्यः। -निरु०, १२/७

✓माङ्-माने।

## मात्रा

तेनेदं सर्वं मितम्। तस्यैषा परमा मात्रा यदुद्राहुः। -श० ब्रा०, १०/२/२/६

मात्रा मानात्। -निरु०, ४/२५
✓माङ्-माने।

## मादं

ये सधमादं मदन्ति। -ऋ०, १०/१४/१०
✓मदि-हर्षे, ✓मद्-तृप्तियोगे।

## मादिलं

ततो वै तेषां मद्वान् सोमोऽभवत् सोममदस्यामाद्यन्। तदेव मादिलस्य मादिलत्वम्। -जै० ब्रा०, ३/२२२
✓मदि-हर्षे, ✓मद-तृप्तियोगे।

## मानवी

मनुर्ह्योतामग्रेऽजनयत तस्मादाह मानवी। -श० ब्रा०, १/८/१/२६
✓मनु-अवबोधने।

## मानुषः

यद् अब्रुवन् मेदं दुषत् इति तद् मादुषस्य मादुषत्वम्। मादुषं ह वै नामैतत्। तद् मानुषम् इत्याख्यायते। -जै० ब्रा०, ३/२६३
मा (नञ्-✓दुष्-वैकृत्ये), मादुष्यः (मानुषः) - ✓मन-ज्ञाने।

## माया

मायाभिरिन्द्र मायिनम्। -ऋ०, १/११/७
✓माङ्-माने।

## मायुः

गौरमीमेदनु वत्सं भिषन्तं मूर्द्धानं हिङ्ङ्कृणोन्मातवा उ।
सृक्काणं धर्ममभि वावशाना मिमाति मायुं पयते पयोभिः॥ -ऋ०, १/१६४/२८
अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता। सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत। -ऋ०, १/१६४/२९
त्रीन् धर्मानभि वावशाना मिमाति मायुं पयते पयोभिः। -अथर्व०, ९/१/८
मिमाति मायुं शब्दं करोति। -निरु०, २/९
✓डुमिञ्-प्रक्षेपणे, ✓माङ्-माने।

## मारुतं

मारुतं भवति॥८॥ मरुतो वै देवानां भूयिष्ठा भूयिष्ठा असामेति वै स रुजमारुते भूयिष्ठा एव भवन्ति। -ता० ब्रा०, १४/१२/८-९
यद् उ मरुतोऽपश्यन् तस्मात् मारुतं इत्याख्यायते। -जै० ब्रा०, ३/२३६
✓मृङ्-प्राणत्यागे, ✓मा-माने+✓रु-शब्दे।

## मार्गीयवं

देवं वा एतं मृगयुरिति वदन्त्येतेन वै स उभयेषां पशूनामाधिपत्यमाश्नुते मार्गीयवेण तुष्टुवानः। -ता० ब्रा०, १४/९/१२
यद् उ मृगयुः देवोऽपश्यत् तस्मात् मार्गीयवं इत्याख्यायते। -जै० ब्रा०, ३/२१२
✓मृज-गतिकर्मा+✓यु-जुगुप्सायां।

## मार्जालिः

मार्जल्यो मृज्यते स्वे दमूनाः। -ऋ०, ५/१/१/८
✓मृज-गतिकर्मा।

## मासः

स (अन्नमयः पुरुषः) अब्रवीद् इमा (ऋतवः) वै मे सद् अभूद् इति। त एव मासा अभवन्। -जै०ब्रा०, ३/३८०
मासा मानात् -निरु०, ४/२७
✓मसी-परिमाणे, ✓माङ्-माने।

## मासकृत्

मासकृन्मासानां चार्धमासानं च कर्त्ता भवति चन्द्रमाः। -निरु०, ५/२१
मास+✓डुकृञ्-करणे।

## मांसं

मांसं माननं वा। मानसं वा। मनोऽस्मिन्सीदतीति वा। -निरु०, ४/३

✓मन-अवबोधने, मनस्+✓षद्लृ-विशरण-गत्यवसादनेषु।

## मित्रं

प्र ये मित्रस्य वरुणस्य धाम युजन्नजना मिनन्ति मित्रम्। -ऋ०, १०/८९/८

प्र ये मित्रं प्रार्यमणं दुरेवाः प्र सङ्गिरः प्र वरुणं मिनन्ति। -ऋ०, १०/८९/९

मित्रः प्रमीतेः। त्रायते। संमिन्वानो द्रवतीति वा। मेदयतेर्वा। -निरु०, १०/२१

✓ञिमिदा-स्नेहने।

## मिथुनं

मिमीयात् दिवा पृथिव्या मिथुना। -ऋ०, १०/१०/९

मिथुनौ कस्मात्? मिनोतिः श्रयतिकर्मा। थु इति नामकरणः। थकारो वा। नयतिः परः वनिर्वा। समाश्रितावन्योन्यं नयतः। वनुतो वा। मनुष्यमिथुनावप्येतस्मादेव। मेथन्तावन्योन्यं वनुत इति वा। -निरु०, ७/२९

✓मिथृ-मेधाहिंसनयोः।

## मुक्षीजा

मुक्षीजा मोचनाच्च। शयनाच्चा ततनाच्च। -निरु०, ५/१९

✓मुच-प्रमोचनमोदनयोः, ✓जनी-प्रादुर्भावे।

## मुञ्जः

मुञ्जो विमुच्यत इषीकया। -निरु०, ९/८

✓मुच-प्रमोचनमोदनयोः।

## मुदः

ओषधयो वै मुदः। ओषधिभिर्हीदं सर्वं मोदते। -श० ब्रा०, ९/४/१/७

✓मुद-हर्षे।

## मुद्गलः

मुद्गलो मुद्गवान्। मुद्गिलो [वा]। मदनं गिलतीति वा। मदंगिलो वा। मुदंगिलो वा। -निरु०, ९/२४

✓मुद्-हर्षे+✓गल-अदने, आस्वादने, स्रवणे च।

## मुष्टिः

मुष्टिः प्रकाशनात्। मुष्टिर्मोचनाद्वा। मोषणाद्वा। मोहनाद्वा। -निरु०, ६/१

✓मुच्-मोचने, ✓मुष्-स्तेये।

## मुसलं

मुसलं मुहुः सरम्। -निरु०, ९/३५

मुहुः+✓सृ-गतौ।

## मुहुः

मुहुर्मूढ इव कालः। -निरु०, २/२५

✓मुह-वैचित्ये।

## मुहूर्त्तः

तद् यन्मुहुः त्रायन्ते तस्मान्मुहुर्ताः। -श० ब्रा०, १०/४/२/१८

मुहूर्तो मुहुर्ऋतुः। -निरु०, २/२५

मुहुः+✓ऋ-गतौ, मुहुः +✓तृ -प्लवनसंतरणयोः।

## मूरा

मूराः मूढाः। -निरु०, ६/८

✓मुह-वैचित्ये।

## मूर्धा

मूर्धा मूर्त्तमस्मिन्धीयते। -निरु०, ७/२७

मुह+✓डुधाञ्-धारणपोषणयोः।

## मूलं

मूलं मोचनाद्वा। मोषणाद्वा। मोहनाद्वा।

-निरु०, ६/३

✓मव-बन्धने,✓मुष्-स्तेये।

✓मुच-प्रमोचनमोदनयोः।

## मूलबर्हणी

मूलमेषामवृक्षामेति। तन्मूलबर्हणी।

-तै० ब्रा०, १/५/२/८

मूल+✓बृह-बृद्धौ।

## मूषिका

मूषो मूषिका इत्यर्थः। मूषिकाः पुनर्मुष्णातेः। मूषोप्येतस्मादेव॥ -निरु०, ४/५

✓मुष्-स्तेये।

## मृगः

गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयन्ते।

-ऋ०, ८/२/६

मृगो मार्ष्टेर्गतिकर्मणः।

-निरु०, १/२०, १३/३

✓मृज-गतिकर्मा।

## मृत्युः

मृत्वा पुनर्मत्युमापद्यन्ते। -तै० आ०, १/८/६

स एष एव मृत्युः य एष एतस्मिन्मण्डले पुरुषः। यश्चायं दक्षिणेऽक्षन्पुरुषः तस्य हैतस्य हृदये पादावति ह तौ। तौ हैतदाच्छिधोत्क्रामति। स यदोत्क्रामति अथ हैतत् पुरुषो म्रियते। तस्मादुहैत्प्रेतमाहुः आच्छेधस्येति।

-श० ब्रा०, १०/५/२/१३

स समुद्रादमुच्यत स मुच्युरभवत्तं वा एतं मुच्युः सन्तं मृत्युरित्याचक्षते। -गो० ब्रा०, १/१/७

मृत्यो मदेर्वा मुदेर्वा। -निरु०, ११/७

✓मृङ्-प्राणत्यागे।

## मृत्युमृत्युं

अथ कस्मादुच्यते मृत्युमृत्युमिति यस्मात् स्वमहिम्ना स्वभक्तानां स्मृत एव मृत्युमपमृत्युं च मारयति। -नृ० पू० ता० उप०, २/४

✓मृङ्-प्राणत्यागे।

## मृध्रवाच्

मृध्रवाचः मृदुवाचः। -निरु०, ६/३१

✓मृधु-उन्दने+✓वच्-परिभाषणे।

## मेघः

मेघः कस्मात्? मेहतीति सतः।

-निरु०, २/२१

✓मिह-सेचने।

## मेदः

मेदो वै पशुः। मेदो वै मेधः। तदेनं मेधमुपनयति।

-श० ब्रा०, ३/८/४/६

मेदो मेद्यतेः। -निरु०, ४/३

✓ञिमिदा-स्नेहने।

## मेधावी

मेधावी कस्मात्। मेध्या तद्वानन्भवति। मेधा मतौ धीयते। -निरु०, ३/१९

✓मिधृ-मेधाहिंसनयोः।

## मेना

मेना मानयन्त्येनाः। -निरु०, ३/२१

✓मान-पूजायां, ✓मन-ज्ञाने।

## मेनिः

मेन्या मेनिरस्य मेनयस्ते सन्तु।

-अथर्व०, ५/६/९

✓मान-पूजायां।

## मेषः

मेषो मिषतेः। -निरु०, ३/१६

✓मिष-स्पर्द्धायां, ✓मिषु-सेचने।

## मेहना

मेहना मंहनीयं धनम्। -निरु०, ४/४

✓मिह-सेचने।

## मौजवतः

मौजवतो मूजवति जातः। मूजवान्पर्वतो मुञ्जवान्। -निरु०, ९/८

✓मुच्लृ-मोक्षणे।

## मौञ्जी

मौञ्जी भवति ऊर्ग्वै मुञ्जाः ऊर्जमेवावरुन्धे इति। -तै० ब्रा०, ३/८/१

✓मुच्लृ-मोचने।

## मौनं

अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्, ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते। -छा० उप०, ८/५/२

✓मन-ज्ञाने।

## यजमानः

देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्। -ऋ०, ८/३१/१५, १६, १७, १८

यद्यजते तद्यजमानः। -श० ब्रा०, ३/२/१/१७

यो ह वै विशजम् अतियजते पुनर् ह सोऽमुस्मिन् लोके यजमान आस्ते। -जै० ब्रा०, १/२३३

✓यज-देवपूजासंगतिकरणदानेषु।

## यजिष्ठः

अग्ने यजिष्ठो अध्वरे देवान् देवयते यज। -साम० पू०, २/१/१/४

यजिष्ठस्य प्रयजतामृतावा। -तै० ब्रा०, ३/५/१३

✓यज-देवपूजासंगतिकरणदानेषु।

## यजीयस्

अग्ने यजस्व हविषा यजीयान्। -ऋ०, २/९/४

स नो यक्षद्देवताता यजीयान्। -ऋ०, १०/५३/१

तमद्य होतरिषितो यजीयान्। देवं त्वष्टारमिह यक्षि विद्वान्। -तै० ब्रा०, ३/६/९

✓यज-देवपूजासंगतिकरणदानेषु।

## यजुः

तद्यजुरित्युपासीत हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते। -कौ० ब्रा० उप०, २/६

प्राणो वै यजुः। प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते। -श० ब्रा०, १४/५/१४/२

यजुरित्येष हीदं सर्वं युनक्ति। -मु० उप०, ३/२

यजु इति एष हीदं सर्वं युनक्ति। -श० ब्रा०, १०/५/२/२०

यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते। -बृहद्० उप०, ५/१३/२

यजो ह वै नामैतद् यद्यजुरिति। -श० ब्रा०, ४/६/७/१३

यजुर्यजतेः। -निरु०, ७/१२

✓युजिर्-योगे, ✓यज-देवपूजासङ्गतिकरणदानेषु।

## यज्ञः

यज्ञं नो यक्षतामिम्। -ऋ०, १/१३/८

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। -ऋ०, १०/९०/१६

पश्यन्मन्ये मनसा चक्षसा तान्य इमं यज्ञमयजन्त पूर्वे। -ऋ०, १०/१३१/६

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे। छन्दांसि

जज्ञिरे तस्माद्यजुस्तस्मादजायत।।

-यजु०, ३१/७

दिवि धा इमं यज्ञमिमं यज्ञं दिवि धोः। स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः।। -यजु०, ३८/११

समिद्धेऽअग्नावधि मामहान उक्थपत्र ईडयो गृभीतः। तप्तं घर्म्मं परिगृह्यायजन्तोर्जायद्यज्ञमयन्त देवाः। -यजु०, १७/५५

यज्ञियो यजति यज्ञियाँ ऋतून्।

-अथर्व०, १८/१/१८

यज्ञेन यज्ञमयजन्त देवास्तः। -अथर्व०, ७/५/१

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद् ब्रह्मचर्येण ह्येवं यो ज्ञाता तं विन्दते।

-छा० उप०, ८/५/१

एष यज्ञेन यजति। -गो० ब्रा०, २/२/६

तम् एतेनैव पुनर्अयाजयत।

-जै० ब्रा०, २/८३

तस्मादेतौ यज्ञेन यजन्ते। -मैत्रा०, १/६/५७

तस्माद्यः स प्रवर्ग्येण यज्ञेन यजते।

-तै० आ०, १/५/२

तेनायजत।

-जै० ब्रा०, २/८२, २/८५, ८६, ८७, १००, १०४, १६७, १७४, १९६, २८९

तेनैनम् अयाजयत्। -जै० ब्रा०, २/१४१

न पौर्णमासेन यज्ञेन यजेत।

-गो० ब्रा०, १/३/२१

यत्रैतेन यज्ञेन यजन्ते। -तै० ब्रा०, ३/८/१३/३

यदव्यवानं यजति तेन यज्ञः क्रियतेऽनुयजति।

-मैत्रा०, १/१०/३५

यज्ञ तस्मादु नराशंसमनुयाजेषु यजति।

-मैत्रा०, १/१०/३१

यज्ञः कस्मात्। प्रख्यातं यजति कर्मेति नैरुक्ताः। याच्ञो भवतीति वा। यजुरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवः। यजूंष्येन नयन्तीति वा। -निरु०, ३/१९

यज्ञेन यजेत।

-मैत्रा०, १/४/६४, १/९/१७, जै० ब्रा०, १/२३३

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।

-का० सं०, १५/६४, मै० सं०, ४/१०/७१

यज्ञेन यज्ञमयजन्त देवाः।

-मै० सं०, ४/१४/३२

यज्ञेन यज्ञमयजन्त देवा इति।

-गो० ब्रा०, २/२/११

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्, ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।

-ऋ०, १/१६४/५०, १०/९०/१६, यजु०, ३१/१६

यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधते। -तै० स०, १/६/८/१

स यन् जायते तस्माद्यञ्जः, यञ्जो ह वै नामैतद्-यद् यज्ञ इति।

-श० ब्रा०, ३/९/४/२३

सर्वैणेव यज्ञेन यजते।

-तै० स०, २/४/११/३

स वै दक्षो नाम तद् यदनेन सोऽग्रेऽजयत, तस्माद् दाक्षायण यज्ञो नाम।

-श० ब्रा०, २/४/४/२

सुक्रतुं यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात्।

-आ० श्रौ० सू०, २/१६/१०

स्वस्तिं यजति यज्ञस्य स्वस्त्यै।

-मैत्रा०, ३/७/९-१२

✓यज-देवपूजासंगतिकरणदानेषु।

## यज्ञायज्ञीयं

यज्ञे यज्ञे नो भविष्यतीत्य् अब्रुवन्। तद् यज्ञायज्ञीयम् अभवत्। तद् यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम्। -जै० ब्रा०, १/१७०

एष ह वै यज्ञोयज्ञो यद् यज्ञायज्ञीयम्। यज्ञं यज्ञं वहतीति ह वै यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम्।
-जै० ब्रा०, १/१७३

योनिर्वै यज्ञायज्ञीयमेतस्माद्वै योनेः प्रजापति-र्यज्ञमसृजत यद्यज्ञं यज्ञमसृजत तस्माद्यज्ञायज्ञीयम्।
-ता० ब्रा०, ८/६/३

यज्ञ+अ (नञ्)+✓यज्-देवपूजादिषु।

## यज्ञियः

यज्ञियो यजतु यज्ञियाँ ऋतुन्।
-ऋ०, १०/११/१

स यज्ञियो यजति यज्ञियाँ ऋतून्।
-अथर्व०, १८/१/१८

✓यज-देवपूजादिषु।

## यण्वं

यद् आत्मन् पशून् अयच्छत् तद् यण्वस्य यण्वत्वम्। -जै० ब्रा०, ३/९१

✓इण्-गतौ।

## यमः

अग्निर्वै यमः इयं यमी। आभ्याम् हीदं सर्वं यतम्।
-श० ब्रा०, ७/२/१/१०, गो० ब्रा०, २/४/८

एष वै यमः। स एष तपति। एष हीदं सर्वं यमयति। एतेनेदं सर्वं यतम्।
-श० ब्रा०, १४/१/३/४

देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य यमत्वं ते देवा अमन्यन्त यमो वा।
-तै० सं०, २/१/४/३

एष हीदं सर्वं यमयति। एष मृत्युर् यद् यमः।
-जै० ब्रा०, १/२८

यमो यच्छतीति सतः। -निरु०, १०/१९

✓यमु-उपरमे।

## यमी

अग्निर्वै यमः इयं यमी आभ्यां हीदं सर्वं यतम्।
-श० ब्रा०, ७/२/१/१०

✓यमु-उपरमे, परिवेषणे च।

## यमुना

यमुना प्रयुवती गच्छतीति वा। प्रवियुतं गच्छतीति वा। -निरु०, ९/२६

✓इण्-गतौ, ✓यमु-उपरमे।

## यवः

अग्निर्यव इन्द्रो यवः सोमो यवः। यवयावानो देवा यावयन्त्वेनम्। -अथर्व०, ९/२/१३

तऽएतैः सर्वाः सपत्नानामोषधीरयुवत, यदयुवतः, तस्माद्यवा नाम। -श० ब्रा०, ३/६/१/९

यद् यज्ञं यवैर् अयुवत् तद् यवानां यवत्वम्।
-जै० ब्रा०, २/११७

"यवानां भागोऽस्ययवानामाधिपत्यम्" इति पूर्वपक्षा वै यवाः अपरपक्षाः अयवाः। ते हीदं सर्वं युवते चायुवते च।
-श० ब्रा०, ८/४/२/११

यवैर्वा आदित्या अङ्गिरसां यज्ञमयुवत तद् यज्ञं यवैरयुवत, तद् यवानां यवत्वम्। यवैरेव द्विषतो भ्रातृव्यस्ययज्ञं युते।
-जै० ब्रा०, २/११७

✓यु-मिश्रणामिश्रणयोः।

## यविष्ठः

यद्वै जात इदं सर्वमयुवत। तस्माद्यविष्ठः।
-श० ब्रा०, ७/५/२/३८

✓यु-मिश्रणामिश्रणयोः।

## यह्वः

यह्व इति महतो नामधेयम्। यातश्च हूतश्च भवति। -निरु०, ८/८

✓या-प्रापणे।

## याजी

याजम् यजते। -ऋ०, १/३१/१५

याज्यया यजति। अन्नं वै याज्या।

-गो० ब्रा०, २/३/२२

✓यज्-देवपूजादिषु।

## यातुविदः

यातु इति यातुविदः। एतेन हीदं सर्वं यतम्।

-श० ब्रा०, १०/५/२/२०

✓यमु-उपरमे+विद्-ज्ञाने।

## यामः

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः।

-ऋ०, १/४८/४

यामेषु यद्ध युञ्जते शुभे। -ऋ०, १/८७/३

तदप्तोर्य्याम्नोऽप्तोर्य्यामत्वम्।

-ता० ब्रा०, २०/३/५

यामं भवति। एतैन वै यमोऽनपजय्यममुष्य लोकस्याधिपत्यमश्नुते यामेन तुष्टुवानः।

-तां० ब्रा०, ११/१०/२१-२२

✓यमु-उपरमे, ✓युजिर-योगे।

## याविहोत्रं

यवा च हि वा अयवायवेतीव। अथ येनैतेषां होता भवति। तद् याविहोत्रमित्याचक्षते।

-श० ब्रा०, १/७/२/२६

यव (यावि)+✓हु-दानादानयोः।

## युक्तिः

अथातो हीनस्य युक्तिश्च विमुक्तिश्च व्यन्तरिक्षमतिरादित्य हीदं युङ्क्ते।

-गो० ब्रा०, २/६/५

तद्यच्चतुर्विंशऽहन्युज्यते सा युक्तिः।

-ऐ० ब्रा०, २९/७

✓युजिर्-योगे।

## युगः

युज्यन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे।

इन्द्रवाहा वन्वोयुजा। -ऋ०, ८/९८/९

ध्रुवा एव वः पितरो युगे युगे क्षेमकामासः सदसो न युञ्जते। -ऋ०, १०/९४/१२

सीरा युञ्जन्ति कवयो युगो वि तन्वते पृथक्।

-ऋ०, १०/१०२/४, यजु०, १२/६७

सीरा युञ्जन्ति कवयो युगो वि तन्वते पृथक्।

-मैत्रा०, २/७/१५४

✓युजिर्-योगे।

## युजः

त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे अश्वाँ अयुक्षत नभन्तामन्येके समे।

-ऋ०, ८/४१/६

युजो युज्यन्ते कर्मभिः। -यजु०, २३/३७

✓युजिर्-योगे।

## युवन्

युवा प्रयौति कर्माणि। -निरु०, ४/१९

✓यु-मिश्रणामिश्रणयोः।

## यूथः

यूथं यौतेः। समायुतं भवति। -निरु०, ४/२४

✓यु-मिश्रणामिश्रणयोः।

## यूपः

यूपेन योपयित्वा तिरोऽभवन्। अथ यदेनेना-योपयन् तस्माद् यूपो नाम।

-श० ब्रा०, १/६/२/१, ३/१/४/३, ३/२/२/२, ३/७/२/३

तं यूपेनायोपयं स्तद्यूपस्य यूपत्वं यद्यूपः।

-मैत्रा०, ३/९/४-१४

ते देवाः प्रजापतिमुपाधावन्। यूपेन प्रहरन्त्यारोपयन्त्यायोधयन्ति च। तद्यूपस्य यूपत्वम्।

-ष० ब्रा०, ५/४/११

तं वै यूपेनैवायोपयंस्तं यद्यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम्। -ऐ० ब्रा०, ६/१

तं वै यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम्.... अनेन वै देवा यज्ञमयूयुपन्निति। -ऐ० ब्रा०, ६/१

✓यु-मिश्रणामिश्रणयोः, ✓युप्-विमोहने।

## यूयुविः

आरे विश्वं पथेष्ठां द्विषो युयोतु यूयुविः।
-ऋ०, ५/५०/३

✓यु-मिश्रणामिश्रणयोः।

## योक्त्रं

समाने योक्त्रे सह वो युनज्मि।
-अथर्व०, ३/३०/६

योक्त्रमेव युते यमन्वास्ते तस्यामुष्मिल्लोके भवतीति योक्त्रेण। यद्योक्त्रम्। स योगः।
-तै० ब्रा०, ३/३/३

योक्त्राणि योजनानीति व्याख्यातम्।
-निरु०, ३/९

✓युजिर्-योगे, ✓यु-मिश्रणामिश्रणयोः।

## योगः

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। -यजु०, ११/४

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत्।
-यजु०, ११/१

योगाय ब्रह्मयोगैर्वा युनज्मि।
-अथर्व०, २०/५/१

एवं प्राणमथोकारं यस्मात् सर्वमनेरुद्या। युनक्ति युञ्जते वापि तस्माद्योग इति स्मृतः।
-मै० उप०, ६/२५

✓युजिर्-योगे, ✓युज-समाधौ, ✓युज-संयमने।

## योषा

योषा वा इयं वाक्। यदेनं न युविता।
-श० ब्रा०, ६/२/१/२२

योषा यौतेः। -निरु०, ३/१५

✓यु-मिश्रणामिश्रणयोः।

## यौधाजयं

अथ योधाजयम्। इन्द्रो वै युधाजीवन् एतत् सामापश्यत। यद् इन्द्रो युधाजीवन् एतत् सामापश्यत् तद् योधाजयस्य यौधाजयतवम्। अयुध इव द्विषन्तं भ्रातृव्यं जयति य एवं वेद।
-जै० ब्रा०, १/१२२

इन्द्रां वै युधाजित्तस्यैतद् योधाजयम्।
-ता० ब्रा०, ७/५/१४

इन्द्रो वै युधाजिन्तस्यैतद्यौधाजयं।
-ता० ब्रा०, ७/५/१४

इन्द्रो वै युधाजीवन्न् एतत् सामापश्यत्। यद् इन्द्रो युधाजीवन्न् एतत् सामापश्यत् तद् यौधजयस्य यौधाजयत्वम्। -जै० ब्रा०, १/१२२

यद् उ युधाजीवो वै वैश्वामित्रोऽपश्यत् तस्माद् व् एव यौधाजयम् इत्य् आख्यायते।
-जै० ब्रा०, १/१२२

युधा मर्य्या अजैष्मेति तस्माद्यौधाजयम्।
-ता० ब्रा०, ७/५/१५

युधा मर्य्या अजैष्मेति तस्माद्यौधाजयं।
-ता० ब्रा०, ७/५/१५

✓युध-सम्प्रहारे+✓जि-जये।

## रक्षः

यो नः कश्चिद्रिरिक्षति रक्षस्त्वेन मर्त्यः। स्वैः ष एवैरिरिषीष्टयुर्जनः॥ -ऋ०, ८/१८/ 13

तास्त्वा वधु प्रजावर्ती पत्ये रक्षन्तु रक्षसः।
-अथर्व०, १४/२/७

पत्ये रक्षन्तु रक्षसः। -अथर्व०, १४/२/७

देवान् ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्व इति। तद् यदरक्षन् तस्माद्रक्षांसि।
-श० ब्रा०, १/१/१/१६, २/१/४/१५

रक्षो रक्षितव्यमस्मात्। रक्षसि क्षणोतीति वा। रात्रौ नक्षत इति वा।
-निरु०, ४/१८

भूतप्रेतपिशाचब्रह्मराक्षसपस्मारमपतीतिश्योऽभि-रक्षणाद्रक्षति। -बृ० जा० उप०, १/१
✓रक्ष्-पालने, ✓रिष्-हिंसायां।

## रक्षोहा
रक्षोहणम् रक्षसामपहन्तारम्। -श० ब्रा०, १/६/१/११
रक्षोहा रक्षसामपहन्ता। -श० ब्रा०, १/६/१/१२-१४-१५
रक्षस्+✓हन्-हिंसागत्योः।

## रंसुः
रंसुरमणात्। -निरु०, ६/१७
✓रमु-क्रीडायां।

## रजनिः
नक्तंजातास्योषधे रामे कृष्णे असिक्नि च। इदं रजनि रजय किलासं पलितं च यत्। -अथर्व०, १/२३/१
✓रञ्ज-रागे।

## रजस्
रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते। असृगहनी रजसी उच्येते। -निरु०, ४/१९
✓रञ्ज-रागे।

## रजस्सुषीदन्
रजस्सु उदकेषु सीदन्। -निरु०, १०/४४
रजस्+✓षद्लृ-विशरणगत्यावसादनेषु।

## रजिष्ठः
रजिष्ठैर्ऋजुतमैः। रजस्वलतमैः। तपिष्ठतमैरिति वा। तस्यैषापराभवति। -निरु०, ८/१९
✓रञ्ज-रागे।

## रणः
रणाय रमणीयाय। -निरु०, १०/४७
✓रण्-शब्दार्थे।

## रत्नं
रमणीयानां धनानां दातृतमम्। -निरु०, ७/१५
✓रमु-क्रीडायां।

## रथः
अरेणारेण रथः प्रतितिष्ठन् एति। -जै० ब्रा०, १/१३५
रथो रंहतेर्गतिकर्मणः। स्थिरतेर्वा स्याद्विपरीतस्य, रममाणोऽस्मिंस्तिष्ठतीति वा। रपतेर्वा [ रसतेर्वा ] -निरु०, ९/११
✓रमु-क्रीडायां, ✓रहि-गतौ।

## रथङ्कां
रथर्यति सिद्धस्तत् प्रेप्सु रथङ्का मयत इति वा। -निरु०, ६/२८
✓रमु-क्रीडायां।

## रथ्यः
रथ्या अश्वा रथस्य वोढारः। -निरु०, १०/३
✓रमु-क्रीडायां।

## रथन्तरं
तेऽब्रुवन् अतारिष्म या इमान् रथान् इति। तद् एव रथन्तरस्य रथन्तरत्वम्। -जै० ब्रा०, १/१३५
रथम्मर्य्याः क्षेप्लातारीदिति तद्रथन्तरस्य रथन्तरत्वम्। -तां० ब्रा०, ७/६/४
रथं+✓तृ-प्लवनसंतरणयोः।

## रम्
प्राणो वै रम्। प्राणे हीमानि सर्वाणि भूतानि रतानि। -श० ब्रा०, १४, ५, १३, ३

प्राणो वै रं। प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद।
-वृ० उप०, ५/११/१

प्राणो वै 'रम्' प्राणे हीमानि सर्वाणि भूतानिरमन्ते। -बृहद० उप०, ५/१२/१

✓रमु-क्रीडायां।

## रम्णातिः

रम्णातिः संयमनकर्मा। विसर्जन कर्मा वा।
-निरु०, १०/९

✓रमु-क्रीडायां।

## रम्भः

रम्भः पिनाकमिति दण्डस्य। रम्भः आरभन्त एनम्। -निरु०, ३/२१

✓रभ्-राभस्ये।

## रयिः

देवास्मे रयिं रासि वीरवन्तम्।
-ऋ०, २/११/१३

इह प्रजामिह रयिं रराणा। इह श्रवो वीरवत्तक्षता नः। -ऋ०, ४/३६/९

सुवीरं रयिं गृणते रिरीहि। -ऋ०, ६/६५/६

ऊर्जां पते रयिं रास्व सुवीर्यम्।
-ऋ०, ८/२३/१२

रयिरिति धननाम। रातेर्दानकर्मणः।
-निरु०, ४/१७

✓रा-दाने।

## रयिष्ठं

सोऽब्रवीद् अस्थाद् वा इयं मयि रयिर् इति। तद् एव रयिष्ठस्य रयिष्ठत्वम्।
-जै० ब्रा०, ३/२३०

✓रा-दाने।

## रराणः

रराणो रातिरभ्यस्तः। -निरु०, २/१२

✓रा-दाने।

## रश्मिः

रश्मिर्यमनात्। -निरु०, २/१५

✓अशूङ्-व्याप्तौ।

## रसा

रसा नदी रसतेः शब्द कर्मणः।
-निरु०, ११/२५

✓रस-आस्वादनस्नेहनयोः शब्दे च।

## राका

राते राका। -तै० ब्रा०, १/७/२/१

राका रातेर्दानकर्मणः। -निरु०, ११/३०

✓रा-दाने।

## राजा

वि राजति वशा हि सत्या वरुणस्य राज्ञः।
-अथर्व०, १/१०/१

यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति।
-श० ब्रा०, ९/४/१/१

राजा राजतेः। -निरु०, २/३

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाति। -तै० स०, २/४/१४/४

✓राजृ-दीप्तौ।

## राजन्यः

सोऽरज्यत ततो राजन्योऽजायत।
-अथर्व०, १५/८/१

✓राजृ-दीप्तौ।

## राजसूयः

अथैष राजसूयः। वरुणो वा अकामयत सर्वेषां देवानां राज्याय सूयेयेति। स एतं यज्ञं अपश्यत्। तमाहरत्। तेनायजत। ततो वै सर्वेषां देवानां

राज्यायासूयत। -जै० ब्रा०, २/१९६

✓राज+✓षुञ्-अभिषवे।

## राड्

विशां पतिरेकराट् त्वं वि राज।

-अथर्व०, ३/४/१

प्रजापतिर्विराजति विराडिन्द्रोऽभवद् वशी।

-अथर्व०, ११/५/१६

राड् राजतेः। -निरु०, १२/४६

✓राजृ-दीप्तौ।

## रात्रिः

रात्रिरात्रिमरिष्यन्तस्तरेम तन्वा वयम्।
गम्भीरमप्लवा इव न तरेयुररातयः।

-अथर्व०, १९/५०/३

रात्रं वा अस्मा अभूद् इति सो एवं रात्रिरभवत्।

-जै० ब्रा०, ३/३५६

यद् अरात्सम इति ता रात्रयोः।

-जै० ब्रा०, ३/३८०

रात्रिः कस्मात्। प्र रमयति भूतानि नक्तञ्चारीणि। उपरमयतीतराणि ध्रुवीकरोति। रातेर्वा स्याद्दानकर्मणः। प्रदीयन्तेऽस्यामवश्यायाः।

-निरु०, २/१८

✓रा-दाने, ✓तृ-प्लवनसंतरणयोः, ✓रमु-क्रीडायाम्।

## राधः

राध इति धननाम। राध्नवन्त्यनेन।

-निरु०, ४/४

✓राध-संसिद्धौ।

## रारन्धिः

प्रवर्द्धय च न आयूरन्धय च नः सर्य्यस्य सन्दर्शनाय रध्यतिर्वश गमनेऽपि दृश्यते।

-निरु०, १०/४०

✓रध-हिंसासंराध्योः।

## रावा

एतद्धयेष द्वयं रासते आहुतीश्च दक्षिणाश्च। तस्मादाह रावासीति। -श० ब्रा०, ३/९/४/४

✓रा-दाने।

## राष्ट्रभृतः

तद् यद्राजानो राष्ट्राणि विभ्रति, राजान उ एते देवाः। तस्मादेता राष्ट्रभृतः।

-श० ब्रा०, ९/४/१/१

✓राजृ-दीप्तौ+✓भृञ्-भरणे।

## रासभः

अथ यदरसदिव स रासभोऽभवत्।

-श० ब्रा०, ६/१/१/१, ६/३/१/२८

✓रा-दाने।

## रास्पिनः

रास्पिनो रास्पी। रपतेवा। रसतेर्वा।

-निरु०, ६/२१

✓रस-आस्वादनस्नेहनयोः शब्दे च।

## रिशादसः

रेशयदारिणः। -निरु०, ६/१४

✓रिश्-हिंसायां+✓दसु-उपक्षये+✓अद्-भक्षणे।

## रुक्मः

प्रत्नवद्रोचयन्रुचः। -ऋ०, ९/४९/५

तत्ते रुक्मो न रोचत स्वधावः।

-ऋ०, ४/१०/६

श्रिये रुक्यो न रोचते उपाके।

-ऋ०, ४/१०/५

असौ वाऽआदित्य एष रुक्मः। एष हीमा सर्वाः प्रजा अतिरोचते। रोचो ह वै तं रुक्म इत्याचक्षते परोक्षम्। -श० ब्रा०, ७/४/१/१०

एष हीमाः सर्वाः प्रजा अतिरोचते। रोचो ह वै तं रुक्म इत्याचक्षते। -श० ब्रा०, ७/४/१/१०

✓रुच-दीप्तावभिप्रीतौ च।

## रुचिः

रोचन्ते रोचना दिवि। -ऋ०, १/६/१

रुचिरसि रोचोऽसि। स यथा त्वं रुच्या रोचोऽस्येवाहं पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय। -अथर्व०, १७/१/२१

स यथा त्वं रुच्या रोचस एवमहं रुच्या रोचिषीय तेवेव मे रोचमानस्य रोचो भूयासु। -मै० सं०, ४/९/८४

रोचन्ते रोचना दिवि। -अथर्व०, २०/२६/४, यजु०, २३/५

रोचनो ह नामैष लोकः यत्रैष एतत्तपति। -श० ब्रा०, ७/१/१/२४

रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्ये वास्मै रोचयति इति। -तैत्ति० आ०, २/९/४/२

✓रुच-दीप्तावभिप्रीतौ च।

## रुजाना

रुजाना नद्यो भवन्ति। रुजन्ति कूलानि। -निरु०, ६/४

✓रुजो-भङ्गे।

## रुद्रः

अग्निर्वै रुद्रः। यदरोदीत् तस्माद्रुदः। -श० ब्रा०, ६/१/३/१०

अग्निर्वै रुरो रुद्रोग्निः। -ता० ब्रा०, १२/४/२४

अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमास्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः। -अ० शि० उप०, ४, बटु० उप० १

अथ रोदयन्ति। तद्यद्रोदयन्ति। तस्माद्रुदा इति। -श० ब्रा० १४ ब ३/९/५

कतमे रुद्रा इति? दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्यर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुदा इति। -वृहद्० उप०, ३/९/४

तद् यद्रुदितात्समभवन् तस्माद्रुदाः। -श० ब्रा०, ९/१/१/६

तद्रुद्राणां। प्राणा वै रुद्राः। प्राणा हीदं सर्वं रोदयन्ति। स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्। स ब्रूयात् प्राणा रुद्राः। -जै० उ० ब्रा०, ४/२/६

ते यदाऽस्मान्मर्त्याच्छरीशदुत्क्रामन्ति। अथ रोदयन्ति। तद्यद्रोदयन्ति तस्माद्रुद्रा इति। -श० ब्रा०, ११/६/३/७

यदरोदीत् तद्रुद्रस्य रुद्रत्वम्। -तै० सं०, १/५/१/१

रुद्रो रोतीति सतः। रोरूयमाणो द्रवतीति वा। रोदयतेर्वा। यदरुदत्तद्रुद्रस्य रुद्रत्वम्। इति काठकम्। -का० सं०, २५/१

ते यदोत्क्रामन्तो यन्त्य् अथ रोदयन्ति। तस्माद् रुद्रा इति। -जै० ब्रा०, २/७७

यदरोदीत्तद्रुद्रस्य रुद्रत्वम्। इति हारिद्रविकम्। -तै० सं०, १/५/१/१, श० ब्रा०, १०/१/१/६,

रुद्रो रौतीति सतः। रोरूयमाणो द्रवतीति वा। रोदयतेर्वा। यदरुदत्तद्रुदस्य रुद्रत्वमिति काठकम्। यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्। निरु०, १०/५

हरश्चात्मानमित्यवैति स्म न वै मत्परं किञ्चिद्विश्वस्यादिरहं हर इति गर्वं दधौ यावत्तावद्व्याप्तं व्योम गजवक्त्रैर्मह-च्छब्दैर्हरं हर्तुमुद्युक्तैः। हरो वै विलोक्य रुदति स्म। रोदनाद्रुद्रसंज्ञः। -ग० ता० उप०, ४

✓रुदिर्-अश्रुविमोचने, ✓रु-शब्दे +✓द्रु-गतौ।

## रुशत्

रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। -निरु०, २/२०, ६/१३

✓रुच-दीप्तौ।

## रूपं

ककुभं रूपं वृषभस्य रोचते बृहत्।
-यजु०, ८/४९

रूपं रोचतेः। -निरु०, २/३, ३/१३

✓रु-शब्दे।

## रेक्णः

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति। -यजु०, २५/२५

रेक्ण इति धननाम, रिच्यते प्रयतः।
-निरु०, ३/२

✓रिच्-विरेचने।

## रेतःसिचौ

इमौ ह्येव लोकौ रेतः सिञ्चतः तस्मादिमौ लोकौ रेतःसिचौ।
-श० ब्रा०, ७/४/२/२२

✓रि-गतौ+✓षिच-क्षरणे।

## रेतोधा

प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय।
-यजु०, ८/१०

रेत एव तद्दधाति इति। सोम्यर्चाऽभिषिञ्चति। रेतोधा ह्येषा। रेतः सोमः। रेत एवास्मिन्धाति, इति। -तै० ब्रा०, २/७/४/१

रेतोधा रेत एव तेन दधाति।
-का० सं०, ११/२-४

वाजी रेतोधा रेतो दधातु। -यजु०, २३/२०

वृषा वा एष रेतोधा यदभीवर्त्तः प्रगाथेषु रेतो दधदेति यदितः समानं साम भवत्यन्योऽन्यः प्रगाथो रेत एव तद्दधति यत्परस्तात् समानः प्रगाथो भवत्यन्यदन्यत् साम रेत एव तद्धितं प्रजनयन्ति। -ता० ब्रा०, ४/३/८

वृषा वामेश्वो रेतोधा रेतो दधातु।
-मै० सं०, ३/१२/३२

सोमो वै रेतोधा रेतोऽस्मिन् दधाति।
-मै० सं०, ४/७/१५

रेतस्+✓डुधाञ्-धारणपोषणयोः।

## रेवती

रेवद्वा एतद्रैवत्यं यद्वारवन्तीयमास्य रेवान् रैवत्यो जायते। -ता० ब्रा०, १३/१०/६

अन्नाद्यम् एव रेवतीभिः प्रदीयते।
-जै० ब्रा०, २/२

अपां वा एष रसोयद्रेवत्यो रेवतीनां रसोयद्वारयन्तीयं सरसा एव तद्रेवतीः प्रयुङ्क्ते यद्वारवन्तीयेन पृष्ठेन स्तुवते।
-ता० ब्रा०, १३/१०/५

रेवती भवति ययान्नाद्यं प्रदीयते।
-जै० ब्रा०, २/१

रेवत्यामरवन्त। -तै० ब्रा०, १/५/२/८

रेवत्सनिभ्योरेवतीव्युच्छतु। -ऋ०, १०/३५/४

✓रु-रोवति रेवती वा, ✓रेवृङ्-प्लवगतौ।

## रेषन्

न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति। -ऋ०, १/१४९/५

✓रिष-हिंसार्थे।

## रैभी

रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन्, तथैवैतद्यजमाना रेभन्त एव स्वर्ग लोकं यन्ति।
-गो० ब्रा०, २/६/१२

✓रेभृ-शब्दे।

## रोदसी

आ द्यां रोहन्ति रोदसी। -अथर्व०, ४/१४/४

तद्वा इदमायस्सलिलमासीत्। सोऽरोदात्प्रजापतिः। सकस्मा अज्ञि। तद्यथा प्रपतिष्ठाया इति। यदपस्ववापद्यत्। सा पृथिव्यभवत्। यद्व्यमुष्ट तदन्तरिक्षमभवत्। यदूर्ध्वमुदमृष्ट सा द्यौरभवत्।

यदरोदीत् तदनयो रोदस्त्वम्।

-तै० ब्रा०, २/२/५/३

न जातमष्ट रोदसी इति। न ह्येतं जातं च रोदन्ति। इमे ह वाव रोदसी।

-जै० उ० ब्रा०, १/१०/२/२

यदरोदीत् ( प्रजापतिः ) तदनयो रोदस्त्वम्।

-तै० ब्रा०, २/२/९/६

रोदसी रुद्रस्य पत्नी।

-निरु०, ११/४९, १२/४६

रोदसी रोधसी द्यावापृथिव्यौ। विरोधनात्।

-निरु०, ६/१

✓रुधिर्-आवरणे, ✓रुदिर्-अश्रुविमोचने।

## रोधः

रोधः कूलं निरुणाद्धि स्रोतः। -निरु०, ६/१

✓रुधिर्-आवरणे।

## रोहिणकं

यत् कामम् आरोहत् तद् रौहिणकस्य रौहिणकत्वम्। -जै० ब्रा०, २/१४

✓रुह-बीजजन्मनि, प्रादुर्भावे च।

## रोहिणी

रोहण्यसि रोहण्यस्थ्नश्छिन्नस्य रोहयेदमरुन्धति॥

-अथर्व०, ४/१२/१

अनेनामु लोकं समारोक्ष्याम्।

-श० ब्रा०, २/१/२/१३

ततो वै सर्वान्रोहानरोहन् तद् रोहिण्यै रोहिणित्वम्।

-तै० ब्रा०, १/१/२/२

रोहित्या रोहिणी। -ऐ० ब्रा०, १३/९

सा ( विराट् ) तत उर्ध्वारोहत्। सा रोहिण्यभवत्। तद्रोहिण्याः रोहिणीत्वम्।

-तै० ब्रा०, १/१/१०/६

अग्निश्च ह वा आदित्यश्च रोहिणौ। एताभ्याम् हि देवताभ्यां यजमाना स्वर्गं लोकं रोहन्ति।

-श० ब्रा०, १४/२/१/२

✓रुह-बीजजन्मनि प्रादुर्भावे च।

## रोहितं

रुहो रुरोह रोहित आ रुरोह।

-अथर्व०, १३/१/४

रोहितं देवा यन्ति सुमनस्यमानाः स मा रोहैः सामित्यै रोहयतु। -अथर्व०, १३/१/१३

रोहितं वै नामैतच्छन्दः, यत् पारुच्छेपम्। एतेन ह वा इन्द्रः सप्तलोकानारोहत्।

-गो० ब्रा०, २/६/१०

रोहं रोहं रोहित आरुरोह।

-तै० ब्रा०, २/५/२/१

✓रुह्-बीजजन्मनि, प्रादुर्भावे च।

## रोहितकूलीयं

यद् उ कूले रोहिताभ्याम् उद्जयत्। तस्माद् रोहित कूलीये इत्य् आख्यायते।

-जै० ब्रा०, ३/१८३

रोहितकूलीयं भवत्याजिजित्यायै। एतैन वै विश्वामित्रो रोहिताभ्यां रोहितकूलआजिमज यत्।

-ता० ब्रा०, १४/३/११-१२

रोहित+✓कूल-आवरणे।

## रौहिणकं

यद् आरोहंस् तस्मात् रौहिणकानि।

-जै० ब्रा०, २/६१

✓रुह्-बीजजन्मनि, प्रादुर्भावे च।

## रौरवं

अग्निर्वैरूरस्तस्यैतद्रौरवम्।

-ता० ब्रा०, ७/५/१०

अग्निः एव रौरवं प्रावृहत। तेऽभितप्यमाना अरवन्त। यद् अभितप्यमाना अरवन्त तद् रौरवस्य

रौरवत्वम्। -जै० ब्रा०, ३/१८४

असुरा वै देवान् पर्य्ययतन्त ततएतावग्नीरूरो वशिवञ्चौ स्तोभावपश्यन्ताभ्यामेनान् प्रत्यौषत्ते प्रत्युष्यमाणा अरवन्त यदरवन्त तस्माद्रौरवम्। -ता० ब्रा०, ७/५/११

तासु रौरवम्। अग्निर्वै रूरुः एतद् सामापश्यत्। तद् अग्नी रूरुः एतत् सामापश्यत् तद् रौरवस्य रौरवत्त्वम्। -जै० ब्रा०, १/१२२

रोरवेणैषां खमाणानाम् स्वम् आददत्। -जै०, ब्रा०, १/१२३

विश्वञ्चौ स्तोभावपश्यत्ताभ्यामेनान् प्रत्यौषते प्रत्युष्यमाणा अरवन्त यदरवन्त तस्माद्रौरवम्। -ता० ब्रा०, ७/५/११

✓रु-शब्दे।

## लक्ष्मी

लक्ष्मीर्लाभाद्वा। लक्षमाणाद्वा। लप्स्यनाद्वा। लाञ्छनाद्वा। लषतेर्वा स्यात्प्रेप्सा कर्मणः। लग्यतेर्वा स्यादाश्लेषकर्मणः। लज्जतेर्वा स्यादाश्लाघाकर्मणः। -निरु०, ४/१०

✓लभष्-प्राप्तौ, ✓लक्ष-दर्शनाङ्कनयोः, ✓लष-कान्तौ, ✓लाछि-लक्षणे, ✓लग-सङ्गे, ✓लज-भर्जने, ✓लस्ज-व्रीडायां।

## लाङ्गूलं

लाङ्गूलं लगतेः। लङ्गते। लम्वतेर्वा। -निरु०, ६/२६

✓लगि-गत्यर्थे।

## लाजा

लाजा लाजतेः। -निरु०, ६/९

✓लाज-भर्त्सने भर्जने च।

## लोधं

लोधं लुब्धम्। -निरु०, ४/१४

✓लुभ-विमोहने गार्ध्ये च।

## लोमन्

लुनातेर्वा। लीयतेर्वा। -निरु०, ३/५

✓लुञ्-छेदने, ✓लीङ्-श्लेषणे।

## वक्षः

वक्षो भासोऽध्यूढ़म्। इदमपीतरद्वक्ष एतस्मा-देवाध्यूढं काये। -निरु०, ४/१६

✓वक्ष-रोषणे, ✓वह-प्रापणे।

## वज्रः

यद् उ वज्र आंगिरसो ऽपश्यत् तस्माद् वज्रम् इत्य आख्यायते। -जै० ब्रा०, ३/१५

वज्रः कस्मात्? वर्जयतीति सतः। -निरु०, ३/११

✓वज-गतौ, ✓वृजी-वर्जने।

## वज्रिन्

व्रजे वज्रिन्। -ऋ०, ८/५९/६

✓वज-गतौ, ✓वृजी-वर्जने।

## वनं

नवग्वा वना वनन्ति धृषता रुजन्तः। -ऋ०, ६/६/३

वनं वनोतेः। वनानीति वा। वधेनेति वा। वनानां वनन कर्मणांमादित्य रश्मीनां वनानां वनन कर्मणामिन्द्रियाणाम्। -निरु०, ८/३

✓वन-शब्दे, ✓वन-सम्भक्तौ, ✓वनु-याचने।

## वनर्गुः

वनर्गू वनगामिनौ। -निरु०, ३/१४

वन+✓गम्-गतौ।

## वनस्पतिः

वनस्पत इत्येनगाह। एष हि वनानां पाता वा पालयिता वा। -निरु०, ८/३

वन+✓पा-रक्षणे।

## वन्दारु:

वन्दारुस्ते तन्वं वन्दे अग्ने।
-ऋ०, १/१४७/२

वन्दारुष्टे तन्वं वन्दे अग्ने।
यजु०, १२/४२, -श० ब्रा०, ६/८/२१/१०

✓वदि-अभिवादनस्तुत्यो:।

## वपां

तां यद् अवपन् तद् वपायै वपात्वम्। यद् वो एनां तद् अजुहवुः तद् एनां अवयन्। तस्मात् उ ह वप्तव्यं एव। -जै० ब्रा०, २/२६१

✓डुवप्-बीजसन्ताने।

## वप्तृन्

वप्तेव श्मश्रु वपसि प्र भूम।
-ऋ०, १०/१४२/४

वप्ता वपसि केशश्मश्रु। -अथर्व०, ८/२१/७

✓डुवप्-बीजसन्ताने।

## वम्री

वम्रयो: वमनात्। -निरु०, ३/२०

✓डुवम्-उद्गिरणे।

## वया:

वया: शाखा वेते:। वातायना भवन्ति।
-निरु०, १/४

✓वय-गतौ, ✓वेञ्-तन्तुसन्ताने, ✓वी-गतिव्याप्तिप्रजनादिषु।

## वयुनं

वयुनं वेते:। कान्तिर्वा। प्रज्ञा वा।।
-निरु०, ५/१४

✓वी-गतिव्याप्तिप्रजनादिषु।

## वयुनावित्

वयुनाविद् इति एष हीदं वयुनमविन्दत्। एक इत् इति एको ह्येष इदं सर्वं वयुनमविन्दत्।
-श० ब्रा०, ६/३/१/१६

वयुना+✓विद्-ज्ञाने।

## वय:

वयो वर्धन्ति वृषभस्य शुष्मिण:।
-अथर्व०, २०/१७/३

✓वय-गतौ।

## वर:

भद्रं वै वरं वृणते भद्रं युञ्जन्ति दक्षिणम्।
-ऋ०, १०/१६४/२

वरं ते वृणावहा इति वृणाथामिति तावेतमेव वरमवृणातां श्वः सुत्यायां पशुं स एनयोरेषोऽच्युतो वरवृतो ह्येनयोस्तस्मात्तस्याशितव्यं चैव लीप्सितव्यं च।
-ऐ० ब्रा०, ८/४

वरं वृणीत।
-बृ० उ०, १/३/२८, मै० सं ४/४/८

वरं वृणीष्वेवति वृणा इति स वरम्।
-गो० ब्रा०, १/१/२३

वरोऽतिवरेण्यो नैनं वरो हिनस्ति य एवं विद्वान् वरं वृणीते। -का० सं०, २४/१

वरो वरयितव्यो भवति। -निरु०, १/७

✓वृञ्-वरणे।

## वरण:

अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वः श्वः। -अथर्व०, १०/३/२

अयं त्वा सर्वस्मात् पापाद् वरणो वारयिष्यते।
-अथर्व०, १०/३/४

वरणो वारयाता अयं देवो वनस्पति:। यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन्।
-अथर्व०, १०/३/५

परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते। -अथर्व०, १०/३/६

मृत्योरोजीयसो वधात् वरणो वारायिष्यते।
-अथर्व०, १०/३/७

वारणं पश्चात्। अधं मे वायाता।
-श० ब्रा०, १३/८/४/१

✓वृञ्-वरणे।

## वरणा

जन्मान्तर कृतान् सर्वान् वारयतीति तेन वरपा भवतीति। -रा० ता० उ०, २/१

सर्वानिन्द्रियकृतान्दोषान् वारयतीति तेन वरपा भवति।
-जा० उप०, २/२, श्रीरा० ता० उप०, २/१

✓वृञ्-वरणे।

## वरसद्

प्राणोऽग्निः तमेतदाह। वरसद् इति सर्वेषु ह्येष वरेषु सत्रः। -श० ब्रा०, ६/७/३/११

वरसदित्येष वै वरसद्वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति। इति। -ऐ० ब्रा०, १८/६

वर+✓षद्लृ-विशरणगत्यवसादनेषु।

## वराहः

वराहो मेघो भवति। वराहारः। वरमाहारमाहर्षि इति च ब्राह्मणम्। अयमपीतरो वराह एतस्मादेव। बृहति मूलानि। वरं वरं मूलं बृहतीति वा।
-निरु०, ५/४

वर+आ+✓हृञ्-हरणे, वर+आ+✓हन्-हिंसने।

## वरिवः

आ वोऽर्वाची सुमतिर्ववृत्यादं होश्चिद्या वरिवो वित्तरासत्। -यजु०, ३३/६८

✓वृञ्-वरणे आवरणे च।

## वरीयः

वरीयो वरतरम्। उरुतरं वा। -निरु०, ८/९

✓वृञ्-वरणं।

## वरुणः

वाम नो अस्त्वर्यमन्वामं वरुण शंस्यम्। वामं ह्यावृणीमहे। -ऋ०, ८/८३/४

उरोर्वरीयो वरुणस्ते कृणोतु।
-साम० उत्त०, ९/३/८/१

यच्चवृत्वाऽतिष्ठस्तद्वरणोऽभवत् तं वा एतं वरणं सन्तं वरुण इत्याचक्षते। -गो० ब्रा०, १/१/७

वरुणो वृणोतीति सतः। -निरु०, १०/३

✓वृञ्-वरणे।

## वरुणप्रघासः

ता अस्य प्रजाः सृष्टा वरुणस्य यवान् जक्षुः। वरुण्यो ह वा अग्रे यवः। तद्यन्नेव वरुणस्य यवान् प्रादन् तस्माद् वरुण प्रघासा नाम।
-श० ब्रा०, २/५/२/१, १/५/१/११

यदादित्यो वरुणं राजानं वरुणप्रघासैरयजत तद् वरुण प्रधासानां वरुणप्रघासत्वम्।
-तै० ब्रा०, १/४/१०/६

वरुण+प्र+✓घस्लृ-अदने।

## वरुणसाम

यद् उ वरुणो राजापश्यत् तस्मात् वरुणसामेत्य् आख्यायते। -जै० ब्रा०, ३/१५२

वरुण साम भवति। एतेन वै वरुणो राज्य-माधिपत्यमगच्छद्राज्यमाधिपत्य गच्छति।
-ता० ब्रा०, १३/९/२२-२३

वरुण+✓षोऽन्तःकर्माणि।

## वरूत्री

अहोरात्राणि वै वरुत्रयः। अहोरात्रैः हीदं सर्वं वृतम्। -श० ब्रा०, ६/५/४/६

✓वृञ्-वरणे।

## वर्णः

वर्णो वृणोतेः। -निरु०, २/३

✓वृञ्-वरणे।

## वर्तनी

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता।
-ऋ०, १०/१७२/४

सं वर्तयति वर्तनिं सुजातता।
-सा० पू०, ५/२/२/५, ४५१

अथ वर्तन्यौ बृहद्रथन्तरे। एताभ्याम् ह वा एष एतन् वर्तते। -जै० ब्रा०, २/६१

✓वृतु-वर्तने।

## वर्धन्

सवर्धिता वर्धनः पूयमानः। -ऋ०, ९/९७/३९

✓वृधु-वृद्धौ।

## वर्पः

वर्प इति रूपनाम वृणोतीति सतः।
-निरु०, ५/८

✓वृञ्-वरणे।

## वर्षा

अवर्षीर्वर्षमुदु षु गृभाय। -ऋ०, ५/८३/१०

यदा प्राणो अभ्यवर्षीद् वर्षेण पृथिवीम् महीम्।
-अथर्व०, ११/४/१७

वर्षाद्विवर्षाः। -श० ब्रा०, २/२/३/७

वर्षा वर्षत्यासु पर्जन्यः। -निरु०, ४/२७

✓वृषु-सेचने।

## वर्षवृद्धं

वर्षमु ह्येवैता वर्द्धयति।
-श० ब्रा०, १/१/४/१९

वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवाः। वर्षमु ह्येवैतान् वर्द्धयति।
-श० ब्रा०, १/१/४/२०

वर्ष+✓वृधु-वृद्धौ।

## वलः

वलो वृणोतेः। -निरु०, ६/२

✓वृञ्-वरणे।

## वव्रिः

वव्रिरिति रूपनाम। वृणोतीति सतः।
-निरु०, २/९

✓वृञ्-वरणे।

## वंशः

वंशो वनशयो भवति। वननाच्छ्रूयत इति वा।
-निरु०, ५/५

वन+✓शीङ्-शयने, ✓वन-शब्दे संभक्तौ च।

## वशी

स एष वशी दीप्ताग्र उद्गीथो यत्प्राणः। एष हीदं सर्वं वशे कुरुते। वशी भवति। वशे स्वान् कुरुते। य एवं वेद।
-जै० उ० ब्रा०, २/२/२/१

✓वश-कान्तौ।

## वसतीवरी

एते वै वसतां वरम्। तस्माद्वसतीवर्यो नाम। वसतां ह वै वरम् भवति।
-श० ब्रा०, ३/९/२/१६

✓वस-आच्छादने+✓वृञ्-वरणे।

## वसातिः

वासात्यो अन्य उच्यते। वसातयो रातयो वसन्ते स्मा इतरेतरा तयोः, वक्तेर्वा, वहतेर्वा।
-निरु०, १२/२

✓वस्-निवासे।

## वसिष्ठः

यद्वै नु श्रेष्ठः तेन वसिष्ठः। अथो यद्व स्तृतमो वसति तेनोऽएव वसिष्ठः।
-श० ब्रा०, ८/१/१/६

✓वस्-निवासे।

## वसिष्ठस्य जनित्रं

वसिष्ठस्य जनित्रं प्रजाकामाय ब्रह्मसाम कुर्य्यात्।। वसिष्ठो वा एतत्पुत्रहतः सामापश्यत्स प्रजया पशुभिः प्राजायत तदेतत्साम भवति प्रजात्यै।
-ता० ब्रा०, ८/२/३-४

वसिष्ठस्य जनित्र भवतो वसिष्ठो वा एते पुत्र इतः सामनी अपश्यत् स प्रजया पशुभिः प्राजायत यदेते सामनी भवतः प्रजात्यै।
-ता० ब्रा०, १९/३/८

यद उ वसिष्ठो अपश्यत् तस्माद् वसिष्ठस्य जनित्रे इत्य आख्यायेते।
-जै० ब्रा०, १/१५०

वसिष्ठ+✓जनि-प्रादुर्भावे।

## वसिष्ठस्य पिप्पलिः

यद् उ वसिष्ठोऽपश्यत् तस्माद् वसिष्ठस्य पिप्लीत्य् आख्यायते। -जै० ब्रा०, ३/१४९

वसिष्ठस्य+✓पीङ्-पाने।

## वसिष्ठस्य प्रियं

वसिष्ठस्य प्रियं भवति। एतेन वै वसिष्ठ इन्द्रस्य प्रेमाणमगच्छत् प्रेमाणन्देवतानाङ्गच्छति वासिष्ठेन तुष्टुवानः स्तोमः।
-ता० ब्रा०, १२/१२/९-१०

वसिष्ठस्य+✓प्रीञ्-तर्पणे कान्तौ च।

## वसिष्ठस्य प्लवं

ततो वै सः (वसिष्ठः) स्वस्तीमान् लोकान् सर्वान् समप्लवत। तद् व एव प्लवस्य प्लवत्वम्। .......यद् उ वसिष्ठोऽपश्यत् तस्मात् वसिष्ठस्य प्लवं इत्याख्यायते। -जै० ब्रा०, ३/१९५

वसिष्ठस्य+✓प्लुङ्-गतौ।

## वसिष्ठयज्ञः

एष वै वशिष्ठः। एतमेव तदन्वाचक्षते। स एतेन यज्ञेनेजे। दाक्षायणयज्ञं उतैनमेके वशिष्ठयज्ञ इत्याचक्षते। -श० ब्रा०, २/४/४/२

वसिष्ठ+यज्ञः।

## वसिष्ठस्य संसर्पः

अथैष वसिष्ठस्य संसर्पः। वसिष्ठो वा अकामयत् सम् इमान लोकान् सर्पेरूम् इति। स एतं चतूरात्रं यज्ञं अपश्यत्। तं आहरत्। तेनाजयत। ततो वै स इमान् लोकान् समसर्पत्। यत् इमान् लोकान् स सर्पयत् तत् सर्पस्य सर्पत्वम्।
-जै० ब्रा०, २/२८९

वसिष्ठस्य+सं+✓सृ-गतौ।

## वसुः

ते हि वस्वो वसवानाः। -ऋ०, १/९०/२

वसवानवसुः सन्। -ऋ०, १०/२२/१५

वसोवर्सुत्वा कारवोनेहाविश्रं विवेष्टिद्रविणमुपक्षु।
-ऋ०, १०/६०/११२

वसूनामूर्जं पुष्टं वस्वावेशयन्ती।
-अथर्व०, ७/७९/३

एते वै वसवः। एते हीदं सर्वं वासयन्ते।
-श० ब्रा०, १४/२/१/२०

एतेषु हीदं सर्वं वसु हितम्। एते हीदं सर्वं वासयन्ते। तद्यदिदं सर्वं वासयन्ते। तस्माद्वसव इति। -श० ब्रा० १४ ब/३/९/४

एते हीदं सर्वं वासयन्ते। यदिदं सर्वं वासयन्ते, तस्माद्वसव इति। -श० ब्रा०, ११/६/३/६

कतमे वसव इति। अग्निः च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः। एतेषु हीदं सर्वं वसु हितं इति। तस्मात् वसव इति।
-जै० ब्रा०, २/७७

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चेते वसवः एतेषु हीदं सर्वं हितमिति तस्मात् वसव इति। -बृहद० उप०, ३/९/३

तद् वसूनाम्। प्राणो वै वसवः। प्राणा हीदं सर्वं

वस्वाददते। स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत् स ब्रूयात् प्राणा वै वसवः।
-जै० उ० ब्रा०, ४/२/३

प्राणा वा वसव एते हीदं सर्वं वासयन्ति।
-छा० उप०, ३/१६/१

स वै देवानां वसुः। वीरो ह्येषाम् ते देवा अब्रुवन् अमा वै नोऽद्य वसुर्वसति, यो नः प्रावात्सीदति। -श० ब्रा०, १/६/४/२-३

वसवो यद् विवसते सर्वम्। वसव आदित्यरश्मयो विवासनात्। -निरु०, १२/४१

✓वसु-निवासे, आच्छादने च।

## वसूयुः

वसूयवो वसुकामाः। -निरु०, ६/६

वसु+✓यु-मिश्रणामिश्रणयोः।

## वसोर्धारा

तद् यदेतस्मै वसव एतां धारां प्रागृह्णन् तस्मादेनां वसोधाऽरेत्यान्वचक्षते।
-श० ब्रा०, ९/३/२/१

तद् यदेषा वसुमयी धारा तस्मादेनां वसोधरित्याचक्षते।
-श० ब्रा०, ९/३/२/४

वसोः+✓धृञ्-धारणे।

## वस्त्रं

वस्त्रेणेव वासया मन्मना शुचिम्।
-ऋ०, १/१४०/१

युवं वस्त्राणि वीवसा वसाथे।
-ऋ०, १/१५२/१

वस्त्रं वस्तेः। -निरु०, ४/२४

✓वस्-आच्छादने।

## वह्निः

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः।
-ऋ०, १/१४/६

अभि वह्निरमर्त्यः सप्त पश्यति वावहि।
-ऋ०, ९/९/६

वह्निवदेतत्सूक्तं वहति ह वै वह्निर्धुरः।
-ऐ० ब्रा०, २९/२

वह्निः वोढारः। -निरु०, ८/३

वह्निरसि हव्यवाहनः। -ता० ब्रा०, १/४/५

✓वह-प्रापणे।

## वाः

यदवृणोत् तस्माद्वाः। -श० ब्रा०, ६/१/१/९

✓वृञ्-वरणे।

## वाक्

अवोचाम रहूगणा अग्नये मधुमद्वचः।
-ऋ०, १/७८/५

वचः घृतात्स्वादीयोमधुनश्चवोचत।
-ऋ०, ८/२४/२०

वदन् वाक्। -वृहद् उप०, १/४/७

वाक् च वक्तव्यम्।
-सु० उप०, ६/२, प्र० उप०, ४/८

वागध्यात्मं वक्तव्यम्।
-सु०उप०, ५/१०

वाक् कस्मात्? वचेः। -निरु०, २/२३

वाचं वदत वद्भ्यः। -निरु०, ९/९

✓वच्-परिभाषणे।

## वाचंयमः

वाचं यच्छति। स वाचंयम आस्ते आस्मयात्। तद्यद्वाचं यच्छति। -श० ब्रा०, ३/२/२/१

वाचं+✓यमु-उपरमे।

## वाजजित्

ते वाजजिगीवा विश्वधनानीत्य् एवासुराणां यद् धनं ये पशवो यद् अन्नाद्यम् आसीत् तद् अवृञ्जत। तद् एव वाजजितो वाजजित्त्वम्।
-जै० ब्रा०, ३/२९९

ते वजिजिगीवेत्य् एवान्नाद्यम् असुराणाम् अवृञ्जत तद् एव वाजजितौ वाजजित्वम्।
-जै० ब्रा०, ३/१५१

बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्म।
-मैत्रा०, १/११/७

वाजजिद् भवति। सर्वस्याप्त्यै जित्यै सर्वं वा एते वाजं जयन्ति ये षष्ठमहरागच्छन्ति।
-तां० ब्रा०, १३/९/२०, १५/११/११

✓वज-गतौ+✓जि-जये।

## वाजदावर्यः

ता अब्रुवन् वाजं वै नोऽन्नद्यं प्रादाद् इति तद्एव वाजदावरीणां वाजदावरीत्वम्।
-जै० ब्रा०, ३/१४७

वाज+✓अद्-भक्षणे+✓वृ-संवरणे।

## वाजपेयः

अन्नं वाऽएष उज्जयति यो वाजपेयेन यजते। अन्नपेयं ह वै नामैतद् यद्वाजपेयम्।
-श० ब्रा०, ५/१/३/३

त वा एतं वाजपेय इत्याहुः। वाजाप्यो वा एषः। वाज ह्येतेन देवा ऐप्सन्, इति।
-तै० ब्रा०, १/३/२/३

प्रजापतिरकामयत वाजमाप्नुयान् स्वर्गं लोकमिति स एतं वाजपेयमपश्यद्वाजपेयो वा एष वाजमेवैतेन स्वर्गं लोकमाप्नोति।
-ता० ब्रा०, १८/७/१

स एतं वाजपेयं अपश्यत्। वाजपेयो वा एवः, य एष तपति, वाजमेतेन यजमानः स्वर्गं लोकमाप्नोति। -गो० ब्रा०, २/५/८

वाज+✓पा रक्षणे, पाने वा, ✓आप्लृ-व्याप्तौ।

## वाजसनिः

वाजस्य सनिता ऊद्ध्र्वो वाऽएष तिष्ठन् वाजमन्नं सनोति। -श० ब्रा०, ६/४/३/१०

वाज+सनि > ✓षण-सम्भक्तौ।

## वाजस्पत्यं

वाजपस्त्यं वाजपतनम्। -निरु०, ५/१५

वाज+✓पत-गतौ।

## वाजी

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। धनानमिन्द्र सातये। -ऋ०, १/४/९

प्रावो वाजेषु वाजिनम्। -ऋ०, १/४/१

जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वाते। तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव समने च पारयिष्णुः। वाजिनो वाजजितो वाजं सरिष्यन्तो बृहस्पतेर्भागमवजिघ्रत॥ -यजु०, ९/९

यत्सद्यो वाजान्त्समजयत् तस्माद्वाजी नाम। इति।
-तै० ब्रा०, ३/९/२१/२

वाजी ददातु वाजिनम्। -सा० पू०, ३/१/१/६

वाजी वेजनवान्। -निरु २/२८, १०/३१

✓वज-गतौ।

## वाणी

वाचो वा वदनात्। -निरु०, ६/२

✓वच्-परिभाषणे।

## वातः

उत स्म ते वनस्पते वातो वि वात्यग्रमित्।
-ऋ०, १/२८/६

आ वात वाहि भेषजं वि वात वाहि यद्रपः।
-ऋ०, १०/१३७/३

दक्षं ते अन्य आवातु परान्यो वातु यद्रपः।
-ऋ०, १०/१३७/२

न्यग्वातोऽव वाति न्यक्तपति सूर्यः।
नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः।
-ऋ०, १०/६०/११

वात आवातु भेषजं शंभु मयोभु नो हृदे। प्रण आयूंषि तारिषत्। -ऋ०, १/१८६/१

वात आवातु भेषजं शंभु मयोभु नो हृदे। प्रण आयूँषि तारिषत्। -ऋ०, १०/१८६/१

इषिरो अभिवातु वातः। -ऋ०, ७/३५/४

वातः वि वाति। -ऋ०, १/२८/६

इषिरो अभि वातु वातः। -अथर्व०, १९/१०/४

वाता उप वान्तु शग्माः। -अथर्व०, १८/२/२१

वाता वान्तु दिशोदिशः। -अथर्व०, ४/१५/८

वातो वाति। -अथर्व०, ६/९१/२

वातो वातु। -अथर्व०, ७/६९/१

अथ यदास्य विवाता वाता वायन्ते। -ष० ब्रा०, ६/८/२

अथो यद् इदं सर्वं वाति तस्मात् वातः। -जै० ब्रा०, २/५६

आदस्य वातो अनुवाति। -मै०, २/८/३२

अध स्मा ते वनस्पते वातो विवात्यग्रमित्। -मैत्रा०, २/७/२२७

प्र वाता वान्ति। -मै० सं०, ४/१२/१३७

वात आ वातु भेषजम्। -सा० पू०, २/२/४/१०

वाता। वातीति सतः। -निरु०, १०/३४

स यत्पुरस्तात् वाति प्राण एव भूत्वा पुरस्तात् वाति। तस्मात् पुरस्ताद् वान्तम्। -तै० ब्रा०, २/३/९/४-५

✓वा-गतिगन्धनयोः।

## वाताप्यं

वाताप्यं उदकं भवति। वात एतदाप्यायति। -निरु०, ६/२८

वात+✓आप्लृ-व्याप्तौ।

## वात्सं

यद् उ वत्सः काण्वोऽपश्यत् तस्माद् वात्सम् इत्य् आख्यायते। -जै० ब्रा०, ३/१९८

वात्सेन वत्सो (अग्निः) व्यैत। -ता० ब्रा०, १४/६/६

✓वद-परिभाषणे।

## वात्सप्रं

यद् उ वत्सप्रीर् भालन्दनोऽपश्यत् तस्माद् वात्सप्रम् इत्य् आख्यायते। -जै० ब्रा०, ३/८१

वत्सप्रीर्भालन्दनः श्रद्धान्नविन्दत स तपोऽतप्यत स एतद् वात्सप्रमपश्यत्। -तां० ब्रा०, १२/११/२५

वात्स+✓प्रा-प्रपूरणे।

## वाभ्रवं

गतनिधनं वाभ्रवं भवति गत्यै। बभ्रुर्वा एतेन कौम्भ्योऽञ्जसा स्वर्गं लोकं अपश्यत्। -तां० ब्रा०, १५/३/१२-१३

✓वा-गतिगन्धनयोः +✓भू-सत्तायाम्।

## वामः

वामस्य वननीयस्य। -निरु०, ४/२६

वामं वननीयं। -निरु०, ६/३१

✓टुवम्-उद्गिरणे।

## वामदेव्यं

अपो वा ऋत्वयमार्च्छत्तासां वायुः पृष्ठे व्यवर्त्तत ततो वसु वामं समभवत्तस्मिन् मित्रावरुणौ पर्य्यपश्यतां तावब्रूतां वाम मर्य्या इदं देवेष्वाजनीति तस्मात् वामदेव्यम्। -ता० ब्रा०, ७/८/१

यद् (देवाः) अब्रुवन्न् इयद् वावेदम् असिदं वाव नो देवानाम् वामम् इति वामदेवस्य तद् वामदेव्यत्वम्। -जै० ब्रा०, १/१४४

✓वा-गतिगन्धनयोः+✓दिवु-क्रीडाविजिगीषादिषु।

## वामनी

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति। सर्वाणि वामानि नयति य एवं वेद।

-छा० उप०, ४/१५/३

वाम+✓णीञ्-प्रापणे।

## वामभृत्

प्राणा वै वामम्। यद्धि किं च प्राणि। इयं तत्सर्वं बिभर्ति। तेनेयं वामभृत्।

-श० ब्रा०, ७/४/२/३५

वाम+✓भृञ्-भरणे।

## वायुः

अथो यदिदं सर्वं यूते तस्मात्वायुः।

-जै० ब्रा०, २/५६

यद्ध वै वायुः पराङेव पवेत क्षीयेत। स पुरस्ताद् वाति। स दक्षिणतः। स पश्चात्। स उत्तरतः। स उपरिष्टात्। स सर्वा दिशोऽनुसंवाति। तदेतद् आहुरिदानीं वा अयमितोऽवासीत्। अथेत्थाद् वातीति। स यद्रेष्माणमजमानो निवेष्टमानो वाति। क्षयादेव बिभ्यद्।

-जै० उ० ब्रा०, १/१/२/५-६

वायुं तर्ह्यनूद्वाति। तस्मादेनमुदवासीदित्याहुः। वायुं ह्यनूद्वाति। -श० ब्रा०, १०/३/३/८

वायुः प्रथमागामी भवति। वायुर्वातेः। वेतेर्वा स्याद्गति कर्मणः। एतेरिति स्थौलाष्ठीविः। अनर्थको वकारः। -निरु०, १०/१

✓वा-गतिगन्धनयोः, ✓वा-गतिगन्धनयोः +✓यु-मिश्रणामिश्रणयोः।

## वारवन्तीयं

तन् नो वारवन्तीयेन वारितम् अन्तत उपतिष्ठाता इति। -जै० ब्रा०, २/४१३

तं वारवन्तीयेनावारयत। तद्वारवन्तीयत्वम्।

-तै० ब्रा०, १/१/८/३

तान् स वैष्णवीषु वारवन्तीयेनैवावारयत। यद् अवारयत तद् वारवन्तीयस्य वारवन्तीयत्वम्।

-जै० ब्रा०, २/११२, ३/१५५

प्रजापतिः पशूनसृजत... ताननग्निष्टोमेन नाप्नोत्. ... तान्विष्णु रेकविंशेन स्तोमेनाप्नोत्। वारवन्तीयेनावारयत।।

-तै० ब्रा०, २/७/१४/१, २

यद् अवारयत् तद् वारवन्तीयस्य वारवन्तीयत्वम्।

-जै० ब्रा०, २/४३, २/११२, १/१७२

यदवारयन्। तद्वारवन्तीयस्य वारवन्तीयत्वम्।

-तै० ब्रा०, १/५/१२/१

यदवारयन्त तस्माद्वारवन्तीयम्।

-ता० ब्रा०, ५/३/९

यदनेन कर्मणा वारुत्स्महि तन्नो वारवन्तीयेन वारितम्। -जै० ब्रा०, २/१४५

वारवन्तीयमग्निष्टोमास कार्य्यं यज्ञस्यैव छिद्रं वारयते। -तां० ब्रा०, ९/६/११

वारवन्तीयं पशुकामः कुर्वीत। प्रजापतिः पशून् असृजत। तेऽस्मात् सृष्टा अपाक्रामन्। तान् वारवन्तीयेनैवावारयत। यद् अवारयत तद् वारवन्तीययस्य वारवन्तीयत्वम्। तद् यद् वारवन्तीयं अग्निष्टोमसाम भवति।

-जै० ब्रा०, १/१७२

वारवन्तीयेन वारितम् अन्ततः उपतिष्ठाता इति।

-जै० ब्रा०, २/१४५

वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वम्। -तै० स०, ५/५/८/१

वारवन्तीयेनावारयन्। -गो० ब्रा०, २/५/९

✓वृञ्-वरणे।

## वारिः

अपकामं स्यन्दमाना अवीवरत वो हि कम्। इन्द्रो वः शक्तिभिर्देवीस्तस्माद् वर्नाम वो हितम्।

-अथर्व०, १३/१३/३

वारि वारयति। -निरु०, ९/२

✓ वृञ्-आवरणे।

## वारिदं

वारिदं वारयातै वरणावत्यामधि। तत्रामृतस्यासिक्तं तेना ते वारये विषम्।

-अथर्व०, ४/७/१

वारि+✓दा-दाने।

## वार्त्रघ्नः

वीर्येणेन्द्रो वृत्रमहन् स एष वार्त्रघ्नः।

-का० सं०, २४/१६-१७

वार्त्रघ्नं वै पौर्णमासम्। इन्द्रो ह्येतेन वृत्रमहन्। अथैतदेव वृत्रहत्यं, यदामावास्यम्। वृत्रं ह्यस्मा एतज्जहनुष आप्यायनम कुर्वन्।

-श० ब्रा०, १/६/४१/२

✓वृतु-वर्त्तने+✓हन्-हिंसागत्योः।

## वार्यं

तद्देवस्य सवितुर्वार्यं वृणीमहे असुरस्य प्रचेतसः।

-ऋ०, ४/५३/१

तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्।

-ऋ०, ८/१५/१३

वार्यं वृणोतेः। अथापि वरतमम्।

-निरु०, ५/१

✓वृञ्-वरणे।

## वावशानः

वावशानो वष्टेर्वा। वाश्यतेवा। -निरु०, ५/१

✓वश्-कान्तौ।

## वाशी

वाशीति वाङ्नाम। वाश्यत इति सत्याः।

-निरु०, ४/१६

✓वाशृ-शब्दे।

## वासः

वासो वायोऽवीनामा वासांसि मर्मजत्।

-ऋ०, १०/२६/६

✓वस्-आच्छादने।

## वासरं

वासराणि वेसराणि विवासनानि गमनानीति वा।

-निरु०, ४/७

✓वस्-आच्छादने।

## वासिष्ठस्य निह्वः

तेनायिही आयिही इत्य् एव प्रजां पशून् न्यह्वयत। तद् व एव निह्वत्वम् प्रजां पशून् निह्वयते य एवं वेद। तद् उ स्तोभानुतुन्नं भवति। अतुतुन्नाद् वै प्रजाः पशवः प्रजायन्ते। पशवश् छन्दो माः। तेन वै रूपसमृद्धम्। यद उ वसिष्ठोऽपश्यत् तस्माद् वासिष्ठस्य निह्व 'इत्य्' आख्यायते।

-जै० ब्रा०, ३/२६८

वासिष्ठस्य+नि+✓ह्वे-स्पर्द्धाशब्दयोः।

## वासिष्ठं

यद् उ वसिष्ठोऽपश्यत् तस्माद् वासिष्ठम् इत्य् आख्यायते। -जै० ब्रा०, ३/२६

वसिष्ठो वा एतेन वैऽवः स्तुत्वाञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै।

-ता० ब्रा०, ११/८/१४

✓वस्-आच्छादने, निवासे च।

## वास्तुः

वास्तुर्वसतेर्निवासकर्मणः। -निरु०, १०/१६

✓वस-निवासे।

## वाहिष्ठः

आ वो वाहिष्ठो वहतु स्तवध्यै रथः।

-ऋ०, ७/३७/१

वाहिष्ठः वोढृतमो हवानाम्।

-निरु०, ५/१

✓वह-प्रापणे।

## विः

त्वं ताँ अग्न उभयन्वि विद्वान् वेषि प्रपित्वे मनुषो यजत्र। -ऋ०, १/१८९/७

नि बाधते अमतिर्नग्नता जसुर्वेर्न वेवीयते मतिः।

-ऋ०, १०/३३/२

विरिति शकुनिनाम। वेतेर्गतिकर्मणः।।

-निरु०, २/६

वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि। -बृहद० उप०, ५/१२/१

✓वी-गतिव्याप्तिप्रजनकान्त्यसनखादनेषु।

## विकटः

विकटो विक्रान्तगतिरित्यौपमन्यवः। कुटतेर्वा स्यात् विपरीतस्य विकुटितो भवति।

-निरु०, ६/३०

वि+✓कृती-छेदने।

## विक्षिणत्कः

एते वै तं विक्षिणन्ति यं विचिक्षीषन्ति।

-श० ब्रा०, ९/१/१/२३

वि+✓क्षणु-हिंसायाम्।

## विघनः

इन्द्रोऽकामयत पाप्मानं भ्रातृव्यं विहम्यामिति स एतं विघनमपश्यत्तेन पाप्मानं भ्रातृव्यं व्यहन्।

-तां० ब्रा०, १९/१८/२

एतं विघनं प्रायच्छत्तेन सर्वामृधो व्यहत यद्व्यहत तद्विघनस्य विघनत्वम्। -तां० ब्रा०, १९/१९/१

तेनैवाऽऽसां तं संस्तम्भं व्यहन्। यद्व्यहन्। तद्विघनस्य विघनत्वम्, इति।

-तै० ब्रा०, २/७/१८

यद् व्यहत, तद् विघनस्य विघनत्वम्।

-जै० ब्रा०, २/१४

वि+✓हन्-हिंसागत्योः।

## विचक्षणवतीं

विचक्षणवतीं वाचं वदेत्। इति।। चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति। इति।। एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः। इति।। तस्मादाचक्षणामाहुरद्रामिति स यद्यदर्श-मित्याहाथास्य श्रद्दधाति यद्यु वै स्वयं पश्यति न बहुनां चनान्येषां श्रद्दधाति। इति।। तस्माद् विचुक्षणवतीमेव वाचं वदेत् सत्योत्तरा हैवास्य वागुदिता भवति। इति।। -ऐ० ब्रा०, १/६

वि+✓चक्षिङ्-व्यक्तायां वाचि, दर्शनेऽपि।

## विचिन्वत्कः

एते हीदं सर्वं विचिन्वन्ति।

-श० ब्रा०, ९/१/१/२३

वि+✓चिञ्-चयने।

## विजामातृ

विजामातुः। असुसमाप्राज्जामातुः। विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिमाचक्षते। असु समापृ इव वरोऽभिप्रेतः। -निरु०, ६/९

वि+जा+✓माङ्-माने।

## वितरं

[ वितरं ] विकीर्णतरमिति वा विस्तीर्णतरमिति वा। -निरु०, ८/९

वि+✓तृ -प्लवनसन्तरणयोः।

## वितस्ता

वितस्ता विदग्धा विवृद्धा महाकूला।

-निरु०, ९/२६

वि+✓ताप्-सन्तापे।

## विदथं

वयं त इन्द्र विश्वह प्रियासः सुवीरासो विदथमा वदेम। -ऋ०, २/१२/१५

इन्द्र यच्चित्रं श्रवस्या अनुद्यून्बृहद्वदेम विदथे सुवीराः। -ऋ०, २/१४/१२

विदथानि वेदनानि। -निरु०, ६/७

✓विद्-ज्ञाने।

## विदानः

नि होता होतृषदने विदानः इति अग्निर्वै होता। कृष्णाजिनं होतृषदनम् विदान इति-विद्वानित्येतत्। त्वेषो दीदिवान्। -श० ब्रा०, ६/४/२/७

✓विद्-ज्ञाने, सत्तायाम्, विचारणे, लाभे।

## विदृतिः

स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत। स षा विदृतिर्नाम द्वास्तदेतन्नान्दनम्। -ऐ० उप०, २/२/१२

वि+✓दृ-विदारणे।

## विद्युत्

स हि द्युता विद्युता वेति साम पृथुं योनिमसुरत्वा ससाद। - ऋ०, १०/९९/२

अथ कस्मादुच्यते वैद्युतः। यस्मादुच्यारितमात्र एव सर्वं शरीरं विद्योतयति। -मैत्रा० उप०, ७/११

अथ कस्मादुच्यते वैद्युतं। यस्मादुच्चार्यमाण एवाव्यक्ते महति तमसि द्योतयति। तस्मादुच्यते वैद्युतम्। -अ० शि० उप०, ४, वटु० उप० १

एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योतते। -कौ० ब्रा० उप०, २/१२

तस्यैष आदेशो यदेत द्विद्युतो व्यद्युतक्षा। -के० उप०, ४/४

तान् (देवान् प्रजापतिः) व्यद्यत् (पाप्मनः सकाशात् वियोजितवान्) तद्व्यद्यत् तस्माद्विद्युत्। -तै० ब्रा०, ३/१०/९/१

प्रजापतिर्देवानसृजत। ते पाप्मना सन्दिता अजायन्त। तान्व्यद्यत्। यद् व्यद्यत्। तस्माद्विद्युत्। -तै० ब्रा०, ३/१०/९/१

विद्युत ब्रह्मेत्यादुर्विदानाद् विद्युत्। -बृहद० उप०, ५/७/१

विद्युद्वै विद्युत्य वृष्टिमनुप्रविशतिं साऽन्तर्धीयन्ते तां न निर्जानन्ति, इति। -ऐ० ब्रा०, ४०/५

स तपोऽतप्यत। तत् तप्यमानं अद्योतत। वीव वा इदं अद्युतद् इति। सैषा विद्युत् अभवत् एषोऽर्चिरेतज्ज्योतिः। विद्युत् भूत्वातप्यत्। ततः स्तनयित्नुरजायत। तस्मात् यदा विद्योततेऽथ स्तनयति। -जै० ब्रा०, ३/३८०

वि+✓द्युत्-दीप्तौ, वि+✓दो-अवखण्डने।

## विद्या

विद्यां चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते। -यजु०, ४०/१४

✓विद्-ज्ञाने।

## विधर्त्ता

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धत्ता च विधर्त्ता च विधारय॥ -यजु०, १७/८२

धर्ता च विधर्ता च विधारये। -मै० सं०, २/११/१

विधर्त्ता विधारयिता। -निरु०, १०/१४

वि+✓धृञ्-धारणे।

## विधर्म्मन्

विधर्म्म भवति धर्म्मस्य विधृत्यै। -ता० ब्रा०, १५/५/३१

विधर्मणा विधर्मापाघ्नत। -जै० ब्रा०, २/१०३

विधर्त्ता विधारयिता। -ऋ०, १२/१४

वि+✓धृञ्-धारणपोषणयोः।

## विधवा

युवं विधन्तं विधवामुरुष्यथः। -ऋ०, १०/४०/८

विधवा विधातृका भवति। विधवनाद्वा। विधावनाद्वेति चर्मशिराः। अपि वा धव इति मनुष्यनाम। तद्वियोगाद्विधवा। -निरु०, ३/१४

वि+✓डुधाञ्-धारणपोषणयोः, वि+✓धूञ्-कम्पने, वि+✓धावु-गतिशुद्धयोः।

## विधाः
आपो वै विधाः। अद्भिर्हीदं सर्वं विहितम्।
-श० ब्रा०, ८/२/२/८

विधामनुविधीयते। -मैत्रा०, ३/२/१२

वि+✓डुधाञ्-धारणपोषणयोः।

## विधुः
विधु विधमनशीलम्। -निरु १४/१८

वि+✓धूञ्-कम्पने।

## विधृती
क्षत्रस्य चैव विशश्च विधृत्यै। तस्मात्तिरश्ची निदधाति। तस्माद्धेव विधृती नाम।
-श० ब्रा०, १/१३/४/१०

धृती स्थो विधृती स्वधृती प्राणान्मयि धारयतम्। पशून्मयि धारयतम्। इति॥
-तै० ब्रा०, ३/७/६

वि+✓धृञ्-धारणपोषणयोः।

## विनुत्तिः
यद् व्यनुदन्त तद् विनुत्तेर् विनुत्तित्वम्।
-जै० ब्रा०, २/१०४

वि+✓णुद्-प्रेरणे।

## विपाट्
विपाड् विपाडनाद्वा। विपाशनाद्वा। विप्रापणाद्वा। पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः। तस्माद्विपाडुच्यते। पूर्वमासीदुरुञ्जिरा।
-निरु०, ९/२६

वि+✓पट्-गतौ, वि+✓पश्-बाधनस्पर्शनयोः।

## विपृक्
विपृचौ स्थो वि मा पाप्मना पृङ्क्तम्॥
-यजु०, ९/४

वि+✓पृची-सम्पर्के।

## विप्रः
तन्त्वा विप्रा विपन्यवो जागृवांसः समिन्धते।
-ऋ०, ३/११/९

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः॥
-यजु०, ३७/२

विप्रा विप्रस्य बृहतो विपश्चितः।
-मै० सं०, ४/९/१

वेपिष्ठो अङ्गिरसां यद्ध विप्रः।
-ऋ०, ६/११/३

विप्राणां व्यापनकर्मणामिन्द्रियाणाम्।
-निरु०, १४/१३

वि+✓प्रा-पूरणे, ✓डुवप्-बीजसन्ताने छेदने च।

## विप्रानुमदितः
एते वै विप्राः यदृषयः। एते ह्येतमन्वमदन्। तस्मादाह विप्रानुमदित इति।
-श० ब्रा०, १/४/२/७

विप+अनु +✓मदि-स्तुतिमोहमदस्वप्नकांतिगतिषु।

## विभीदकः
विभीदको विभेदनात्। -निरु०, ९/८

वि+✓भिदिर्-विदारणे।

## विमुक्तिः
युक्तिश्च विमुक्तिश्च... एवेदिन्द्रमिति विमुञ्चति। नूनं सा त इत्यहीनं युङ्क्ते। नू ष्टुत इति विमुञ्चति। -गो० ब्रा०, २/६/५

विमुक्तिम् अनु विमुच्यन्ते।
-जै० ब्रा०, २/३७३

वि+✓मृच्लृ-मोचने।

## विमदः
विमदेन वै देवा असुरान् विमदन्। तद् यद् विमदः। -शां० ब्रा०, २२/६

वि-✓मदी-हर्षे।

## वियातः

वियात इत्येतद् वियातयत इति वा। वियातयेति वा। -निरु०, ३/१०

वि+✓या-प्रापणे।

## वियुता

वियुते द्यावापृथिव्यौ। वियवनात्। -निरु०, ४/२५

वि+✓यु-मिश्रणामिश्रणयोः।

## विराट्

प्रजापतिर्वि राजति विराडिन्द्रोऽभवद् वशी। -अथर्व०, ११/५/१६

ततो वै ते (देवाः) विराजम् अन्नाद्यम् अवारुन्धत्। -जै० ब्रा०, २/८५

तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराटत्वम् इति। -ऐ० ब्रा०, १/६

दशाऽक्षरा विराट्। विराडेषा चितिः। सर्व उपदधाति। यो वाऽएकस्यां दिशि विराजति न वै स विराजति। यो वाव सर्वासु दिक्षु विराजति य एव विराजति। -श० ब्रा०, ८/५/१/५

विराट् विरमणाद्विराजनाद्विराधनाद्वा। -दे० ब्रा०, ३/१२

विराट्विराजनाद्वा। विराधनाद्वा विप्रापणाद्वा। विराजनात्संम्पूर्णाक्षरा। विराधनादूनाक्षरा। विप्रापणादधिकाक्षरा। पिपीलिकमध्ये त्यौपमिकम्। -निरु०, ७/१३

वि✓राजृ-दीप्तौ, वि ✓रमु-क्रीडायाम्, वि ✓राध-संसिद्धौ।

## विरिष्टं

यज्ञस्य विरिष्टमनु यजमानो विरिष्यते, यजमानस्य विरिष्टमन्वृत्विजो विरिष्यन्त्र ऋत्विजां विरिष्टमनु दक्षिणा विरिष्यन्ते दक्षिणानां विरिष्टमनु यजमानः पुत्र पशुभिर्विरिष्यते, पुत्र पशूनां विरिष्टमनु यजमानः स्वर्गेण लोकेन विरिष्यते स्वर्गस्य लोकस्य विरिष्टमनु तस्यार्द्धस्य योगक्षेमो विरिष्यते। -गो० ब्रा०, १/१/१३

संवत्सरविरिष्टं तद् यत्र यज्ञो विरिष्यते। -गो० ब्रा०, २/२/५

वि✓इष-गतौ।

## विरूपः

विरूपो नानारूपः। -निरु०, ३/१७

वि+✓रूप-रूपक्रियायां।

## विलम्बसौपर्णं

विलम्बसौपर्णं भवति। आत्मा वा एष सौपर्णानां यदष्टयेऽहनि पक्षावेतावभितो भवति ये सप्तमनवययोर्वाव वा अन्तरात्मा पक्षौ लम्बते यदन्तरात्मा पक्षौ विलम्बते तस्माद् विलम्ब-सौपर्णम्। -तां० ब्रा०, १४/९/२०

## विवक्षसः

ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साभ्यासात्। -निरु०, ३/१३

✓वच-परिभाषणे ✓वह-प्रापणे।

## विवर्तः

सम्वत्सराद्धि सर्वाणि भूतानि विवर्तन्ते। -श० ब्रा०, ८/४/१/२५

वि+✓वृतु-वर्तने।

## विवस्वत् (विवस्वान्)

वावसाना विवस्वति सोमस्य पीत्या गिरा। -ऋ०, १/४६/१३

धिया संवसानां विवस्वतः। -ऋ०, ९/२६/४

असौ वा आदित्यो विवस्वान्, एष ह्यहोरात्रे विवस्ते। तमेष वस्ते सर्वतो ह्येनेन परिवृतः। -श० ब्रा०, १०/५/२/४

विवस्वान्विवासनवान्। -निरु०, ७/२६

वि+✓वस्-आच्छादने, निवासे।

## विवाहः

विवाहे वहतौ च यत्। -अथर्व०, १४/२/६६

तौ संयन्तावेतं देव विवाह व्यवहेताम्।

-ऐ० ब्रा०, १९/५

वि+✓वह्-प्रापणे।

## विंशतिः

यदविशत् तस्माद्विंशति।

-श० ब्रा०, ७/५/२/४४

विंशतिर्द्विदशतः। -निरु०, ३/१०

द्वः+दशत्, विंशति ✓विश-प्रवेशने।

## विशः

यज्ञो वै विशः। यज्ञे हि सर्वाणि भूतानि विष्टानि।

-श० ब्रा०, ८/७/३/२१

✓विश्-प्रवेशने।

## विशालं

तेऽब्रुवन् स्वर्गं लोकंगत्वा विशालं वाव नो भूत्वेदं साम स्वर्गं लोकम् अवाक्षीत् इति। तद् एव विशालस्य विशालत्वम्।

-जै० ब्रा०, ३/२१९

✓विश-प्रवेशने।

## विशोविशीयं

तद् यद् एनं विशोविशो व्यवहरन्ति तद् विशोविशीयस्य विशोविशीयत्वम्।

-जै० ब्रा०, १/१७२

विशोविशीयेन विशो विशो राजानोऽभवत्।

-जै० ब्रा०, २/१०३

विशोविशोऽतिथिरभवत् विशोविश आतिथ्यमाश्नुत विशोविशोऽतिथिर्भवति विशोविश आतिथ्यमश्नुते विशोविशीयेन तुष्टुवानः। -ता० ब्रा०, १४/११/३७

✓विश्-प्रवेशने।

## विश्चकद्राकर्षः

विश्चकद्राकर्षः। वीति चकद्र इति श्वगतौ भाष्यते। द्रातीति गतिकुत्सना। कद्रातीति द्रातिकुत्सना। चकद्राति कद्रातीति सतोऽनर्थकोऽभ्यासः। तदस्मिन्नस्तीति विश्चकद्रः। -निरु०, २/३

वि+✓द्रा-कुत्सायांगतौ+आ+✓कर्ष-विलेखने।

## विश्वकर्मा

प्रजापतिर्वै विश्वकर्मा। स हीदं सर्वमकरोत्।

-श० ब्रा०, ९/४/१/१२

वाग्वै विश्वकर्मर्षिः। वाचा हीदं सर्वं कृतम्। तस्माद्वाग्विश्वकर्मर्षिः।

-श० ब्रा०, ८/१/२/९

विश्वकर्मा सर्वस्य कर्त्ता। -नि०, १०/२५

विश्व+✓डुकृञ्-करणे।

## विश्वजित्

इन्द्रो विश्वजित्, इन्द्रो हीदं सर्वं विश्वमजयत्।

-शां० ब्रा०, २४/१

ततो वा इदमिन्द्रो विश्वमजयत् यद्विश्वमजयत्तस्मात् विश्वजित्।

-ता० ब्रा०, १६/४/५

प्रजापतिर्विश्वजित्; तत् सर्वेण सर्वमाप्नोति य एवं वेद। -शां० ब्रा०, २५/१२

विश्वजिता विश्वमजयन्।

-ता० ब्रा०, २२/८/४

इन्द्रः विश्वम्, अजयत्। इन्द्रो वै विश्वजित्।

-जै० ब्रा०, २/१८०

सर्व उद्यजत्; तस्माद् विश्वजित्।

-शां० ब्रा०, २५/१३

सर्वमेषः। विश्वजिति सर्वपृष्ठे ग्रहीतव्यः। सर्वं वै विश्वजित् सर्वपृष्ठः।

-श० ब्रा०, ४/६/१/१५

सा योऽन्यत्र विश्वजितः सर्वं ददाति। विश्वजितिच्चेत्, सर्वमेव सर्वमुचेद्, विश्वजिदेव। -शां० ब्रा०, २५/४

तद् वा इदं बहु विश्वरूपं विश्वजिति क्रियते। -शां० ब्रा०, २५/११

✓विश्-प्रवेशने+✓जि-जये।

## विश्वपतिः

सर्वस्य पातारं वा पालयितारं वा विश्पतिं। निरु०, ४/२६

सर्वपती इव राजानौ। -निरु०, ५/२५

सर्वस्य पाता वा पालयिता वा। -निरु०, १२/२९

विश्व+✓पा-पालने रक्षणे च।

## विश्वतूः

त्वमिन्द्र प्रतूत्तिष्वभि विश्वोऽअसि स्पृधः। अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य्य तरुष्यतः॥ -यजु०, ३३/६६

विश्व✓तूरी-गतित्वरणहिंसनयोः।

## विश्वं

निविशन्ते सुक्ते चाधि विश्वे। -ऋ०, १/१६४/२२

वसोर्वसुत्वा कारवोऽनेहा विश्वं विवेष्टि दक्षिणमुपक्षु। -ऋ०, १०/६१/१२

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे। -ऋ०, १०/११४/४

य आविवेश भुवनानि विश्वा। -यजु०, ८/३६

✓विश्-प्रवेशने

## विश्वम्भरः

एष हीदं सर्वं बिभर्त्ति। -श० ब्रा०, ६/४/२/१

विश्वम्भरः विश्वेन मा भरसा पाहि स्वाहा। -अथर्व०, २/१६/५

एष हीदं सर्वं बिभर्त्ति। -श० ब्रा०, ६/४/२/१

विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी वैश्वानरं बिभ्रती भूमि। -अथर्व०, १२/१/६

विश्वं+✓भृञ्-भरणे।

## विश्वरूपा

विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः। -अथर्व०, १/३४/४

## विश्वव्यचाः

असौ वाऽआदित्यो विश्वव्यचाः। यदा ह्येवैष उदेति अथेदं सर्वं व्यचो भवति। -श० ब्रा०, ८/१/२/१

एष हीदं सर्वं व्यचः करोति। -श० ब्रा०, ९/४/१/१०

विश्व+वि+✓अञ्चु-गतिपूजनयोः।

## विश्वसृजः

एतेन वै विश्वसृजइदं विश्वमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृज। -ता० ब्रा०, २५/२८/२

विश्वसृज एतेन वै विश्वमिदमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृजः। -नृ० पू० ता० उप०, १/७

विश्व+✓सृज-विसर्गे।

## विश्वामित्रं

तदु वैश्वामित्रं, विश्वस्य ह वै मित्रं विश्वामित्र आस। विश्वं हास्मै मित्रं भवति य एवं वेद। इति॥ -ऐ० ब्रा०, २९/५

तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस। -ऐ० आ०, १/२/२

तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तद्यदस्येदं

विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तमिति। -ऐ० आ०, २/२/१

तस्येदं विश्वं मित्रमासीद् यदिदं किंच तद्यदस्येदं विश्वंमित्रमासीद् यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षते। -ऐ० आ०, २/२/२

विश्वं+✓ञिमिदा-स्नेहने।

## विश्वेदेवाः

अथ यद् दशरात्रमुपयन्ति विश्वानेव तद् देवान् देवतां यजन्ते विश्वेदेवा देवता भवन्ति। -गो० ब्रा०, २/४/१०

विश्वेदेवाः सर्वे देवाः। -निरु०, १२/३९

विश्व+✓दिवु-क्रीडाविजिगीषादिषु।

## विषं

विषमित्युदकनाम। विष्णोतेः। विपूर्वस्य स्नातेः शुद्ध्यर्थस्य विपूर्वस्य वा सचतेः। -निरु०, १२/२६

✓विष्लृ-व्याप्तौ।

## विषुवान्

तद् यद् उभयेषां विषुवति तस्माद् विषुवान् सः। -जै० ब्रा०, २/५

✓विष्लृ-व्याप्तौ।

## विष्णुः

विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः। -यजु०, ८/५५

अथ यद्विषितो भवति तद्विष्णुर्भवति। विष्णुर्विशतेर्वा। व्यश्नोतेर्वा। -निरु०, १२/१८

✓विष्लृ-व्याप्तौ।

## विष्णुक्रमाः

एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त। यद्विष्णुर्भूत्वाऽक्रमन्त तस्माद् विष्णुक्रमाः। -श० ब्रा०, ६/७/२/१०

विष्णुः+✓क्रमु-पादविक्षेपे।

## विस्रुहः

विस्रुह आपो भवन्ति। विस्रवणात्। -निरु०, ६/३

वि+✓स्रु-गतौ।

## वीङ्कं

तं एतेन साम्नाप्सु व्यैङ्कयताम्। -तां० ब्रा०, १४/६/१०

वि+✓अङ्क-पदेलक्षणे च।

## वीळिता

वीळयति व्रीळयतिश्च संस्तम्भकर्माणौ। -निरु०, ५/१६

वि-✓ईड्-स्तुतौ।

## वीड्वी

मा भेर्मा संविक्थाऽऊर्जं धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जं दधानाम्। -यजु०, ६/३५

वि✓ईड-स्तुतौ।

## वीरः

अथ कस्मादुच्यते वीरमिति यस्मात्स्वमहिम्ना सर्वाँल्लोकान्सर्वान्देवान्सर्वानात्थन सर्वाणि भूतानि विरमति विरामयत्यजस्रं सृजति विसृजति वासपति यतो वीरः कर्मण्यः सुदृक्षो युक्तग्रावा जायते देवकामस्तस्मादुच्यते वीरमिति। -नृ० पू० ता० उप०, २/४

वीरमित्याह वीरो वा एष वीयवत्वात्। -अ० उप०, २

वीरैर्वीरान् वनुयामा त्वोताः। -ऋ०, १/७३/९

वीरो वीरयत्यमित्रान्। वेतेर्वा स्याद्गतिकर्मणः वीरयतेर्वा। -निरु०, १/७

✓अज्-गतिक्षेपणयोः, ✓वी-गतिव्याप्तिप्रजनादिषु, ✓वीर-विक्रान्तौ।

## वीरुत्

जनिष्ट योषा पतयत्कनीनको वि चारुहन्वीरुधो दंसना अनु। -ऋ०, १०/४०/९

वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूनष्वन्तः। -ऋ०, १/६७/५

वीरुधो दंसु रोहति। -ऋ०, १/१४१/४

वीरुध ओषधयो भवन्ति। विरोहणात्। -निरु०, ६/३

वि+✓रुह-बीजजन्मनि प्रादुर्भावे च, वि+✓रुधिर -आवरणे।

## वृकः

वृकश्चन्द्रमा भवति। विवृतज्योतिष्को वा। विकृतज्योतिष्को वा। विक्रान्त ज्योतिष्को वा। -निरु०, ५/२०

आदित्योऽपि वृक उच्यते। यदा वृङ्क्ते। -निरु०, ५/२०

श्वापि वृक उच्यते। विकर्तनात्। -निरु०, ५/२०

वृको लाङ्गलं भवति। विकर्त्तनात्। -निरु०, ६/२६

✓वृक्-आदाने, ✓वृञ्-वरणे, वि+✓कृती-छेदने, ✓क्रमु-पादविक्षेपे।

## वृक्षः

तष्टेव वृक्षं वनिनो नि वृश्चसि परश्चेव नि वृश्चसि। -ऋ०, १/१३७/४

वृश्चामि तं कुलिशेनेव वृक्षम्। -अथर्व० २/१२/३

वृक्षो व्रश्चनात्। वृत्वा क्षां तिष्ठतीति वा। -निरु०, २/६

वृक्षो वृश्चनात्। -निरु०, १२/२९

✓व्रश्चू-छेदने।

## वृत्रः

अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद्ववार। -ऋ०, १/३२/११

अध्वर्यवो यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम्। -ऋ०, २/१४/२

वृत्रं जघन्वाँ अवृणीत सोमम्। -ऋ०, ३/३६/८

युष्मा इन्द्रो अवृणीत वृत्रमतूर्य्ये यूयमिन्द्रमवृणीत वृत्रतूर्य्ये प्रोक्षितास्थ। -यजु०, १/१३

तं यत् प्रावर्त्तयत् स एव वृत्रोऽभवत्। -जै० ब्रा०, २/१५५

यदिमाँल्लोकान् वृणोत् तद् वृत्रस्य वृत्रत्वम्। -तै० सं०, २/४/१२/२

स यद् वर्त्तमानः समभवत् तस्माद् वृत्रः। -श० ब्रा०, १/१/३/४

वृत्रो वृणोतेर्वा, वर्ततेर्वा वर्धतेर्वा। यद्वृणोत्तद् वृत्रत्वमिति विज्ञायते। यदवर्तत तद् वृत्रस्य वृत्रत्वामिति विज्ञायते। यदवर्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते। -निरु०, २/१७

✓वृ-संवरणे, ✓वृतु-वर्तने।

## वृत्रहा

शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा। -ऋ०, ८/२४/२

वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा॥ -यजु०, ३३/९६, सा० पू०, ३/२/२/५, (२५७)

वृत्राणि वृत्रहं जहि। -अथर्व०, २०/५/३

वृत्र+✓हन्-हिंसायाम्।

## वृद्धिः

वृद्धायुमनु वृद्धयः। -ऋ०, १/१०/१२

✓वृधु-वृद्धौ।

## वृन्दं

वृन्दं बुन्देन व्याख्यातम्। वृन्दारकश्च। -निरु०, ६/३४

✓बुन्दिर्-निशामने, ✓वृङ्-संभक्तौ+✓दा-दाने।

## वृषन्

वृषा दधन्वे वृषणं नदीष्वा तुभ्यं स्थातर्हरीणाम्।
-ऋ०, ८/३३/१२

वृष्ण्यावृषन्। -ऋ०, ८/५९/६

वृषणस्ते अभीशवोवृषाकशाहेरण्ययी। वृषारथो मघवन्वृषणा हरी वृषात्वं शतक्रतो॥
-ऋ०, ८/३३/११

स वृषा वृषभो भुवत्। -सा० पू०, २/१/३/५

✓वृषु-सेचने, ✓वृष-शक्तिबन्धने।

## वृषभः

उभे वृषा वृषत्वा वृषभो न्यृञ्जते।
-ऋ०, १/५४/२

यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः। -ऋ०, ९/१०८/२

तत् वर्षकर्मा वर्षणात् वृषभः।
-निरु०, ९/२२

✓वृषु-सेचने, ✓वृष्-शक्तिबन्धने।

## वृषलः

वृषलो वृषशीलो भवति। वृषाशीलो वा।
-निरु०, ३/१६

✓वृषु-सेचने।

## वृषा

वृष्णस्ते वृष्ण्यं शं वो वृषा वनं वृषा मदः। सत्य वृषन् वृषेदसि। -ऋ०, ९/६४/२

वृषा वर्षिता। -निरु०, ३/१६

✓वृषु-सेचने।

## वृषाकपिः

आदित्यो वै वृषाकपिः तद्यत् कम्पयमानो रेतो वर्षति, तस्माद् वृषाकपि, तद् वृषाकपेर्वृषाकपित्वम् वृषाकपिरिव वै सर्वेषु लोकेषु भाति। -गो० ब्रा०, २/६/१२

अथ यद् रश्मिभिरभिप्रकम्पयन्नेति तद् वृषाकपिर्भवति। वृषाकम्पनः।
-निरु०, १२/२७

वृष+✓कपि-चलने।

## वृष्णः

वृष्णस्ते वृष्ण्यं शंवो वृषा वनं वृषा मदः।
-ऋ०, ९/६४/२

इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम्। -अथर्व०, ७/५८/२

✓वृषु-सेचने, ✓वृष्-शक्तिबन्धने।

## वृष्टिः

उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः। -ऋ०, ५/५५/५

तमवृश्चत् यद्वृश्चत् तस्मादृवृष्टिः।
-तै० ब्रा०, ३१/१०/९/१

पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभीरिति।
-तै० आ०, १/९/५

वर्षन्ति वृष्टयः। -तै० ब्रा०, ३/१२/७/४

वृष्टिर्वैवृष्टवा चन्द्रमसमनुप्रविशति।
-ऐ० ब्रा०, ८/२८, ४०/५

ततो वृष्टिर् अजायत्। तस्माद् यदा स्तनयत्य अथ वर्षति। -जै० ब्रा०, ३/३८०

✓वृषु-सेचने, ✓वृश्चु-छेदने।

## वेतसः

वेत्तु सः। वेत्तुसो ह वै तं वेतस इत्याचक्षते।
-श० ब्रा०, ९/१/२/२२

✓वी-गतिव्याप्तिप्रजननकान्त्यसनस्वादनेषु।

## वेदः

वेदोऽसि येन त्वं देव वेद देवेभ्य वेदोऽभवस्तेन मह्य वेदो भूयाः। -यजु०, २/२१

अयं वेदः पृथिवीमन्वविन्दत्।
-तै० ब्रा०, ३/७/६/१३

तद्वित्तं वेद्यमसुराणामविन्दत तदेकं वेद्यै वेदित्वं।
-तै० स०, ६/२/४/३

य एवं वेद विन्दते। -तै० सं०, ६/३/१/२

वेदेन वेदिं विविदुः। -का० सं०, ३१/४३

वेदेन वेदिं विविदुः पृथिवी।
-मा० श्रौ० सू०, १/२/४/५

वेदेन वै देवा असुराणां वितं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्। -तै० सं०, १/७/४/६

वेदोसि वेद येन त्वं देव वेद देवेभ्यो वेदोऽभवः।
-काण्व सं०, १/३५

स या जायमानो वाचं अवदत् स एव त्रयो वेदोऽभवत्। -जै० ब्रा०, ३/३८

✓विद्-ज्ञाने, लाभे, विचारणे, सत्तायां च।

## वेनः

सुधीतयो वेनन्तिवेनाः पतयन्त्यादिशः।
-ऋ०, १०/६४/२

असावादित्यो वेनः। यद्वै प्रजिजनिषमाणोऽवेनत् तस्मा द्वेनः। -श० ब्रा०, ७/४/१/१४

वेनोस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चोऽन्ये तस्मा द्वेनः। -ऐ० ब्रा०, १/२०, ३/३०

वेनो वेनतेः कान्तिकर्मणः। -निरु १०/३८२

✓वी - गतिव्याप्तिप्रजनकान्त्यादिषु,
✓वेनृ-गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु।

## वेदिः

तद्देवा वेद्याविन्दन्त, ते द्वेद्या वेदित्व
-मैत्रा०, ३/८/११

तद्वै देवा इह मामविन्दन्त, तद्वेद्या वेदित्वं, सर्वा वा इयं पृथिवी वेदि। -मैत्रा०, ३/८/११

तं वेद्यामन्वविन्दन्यद्वेद्यामन्वविन्दस्तद्वैर्वेदित्वम्। इति। -ऐ० ब्रा०, ११/९

तेनेमां सर्वां पृथिवीं समविन्दन्त। तद् यदेनेनेमां सर्वां समविन्दन्त, तस्माद्वेदिर्नाम।
-श० ब्रा०, १/२/५/७

यन्नेवात्र विष्णुमन्वविन्दन् तस्माद्वेदिर्नाम।
-श० ब्रा०, १/२/५/१०

सा वा इमां त्रिः समन्तं पर्यैन्तद्वै देवा इमामविन्दन्त, तद्वेद्या वेदित्वं।
-मैत्रा०, ३/८/११

✓विद्-ज्ञाने, ✓विद्लृ-लाभे।

## वेषः

वेषाय वामिति, वेवेष्टीव हि यज्ञम्।
-श० ब्रा०, १/१/२/१

✓विष्लृ-व्याप्तौ।

## वैखानसः

तद् इन्द्रो ह वै विखानाः। स यद् इन्द्र एतद् सामापश्यत्। तस्माद् वैखानसम् इत्य् आख्यायते।
-जै० ब्रा०, ३/१९०

विखननाद् वैखानसः। -निरु०, ३/१७

वि+✓खनु-अवदारणे।

## वैणवं

यद् वेणुर् विश्वामित्रोऽपश्यत् तस्माद् वैणवम् इत्य् आख्यायते। -जै० ब्रा०, १/२२०

✓वेणृ-गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु।

## वैतसः

वैतसो वितस्तं भवति। -निरु०, ३/२१

वि+✓तसु-उपक्षये।

## वैतहव्यं

यद् उ वीतहव्य आश्रायसो ऽपश्यत् तस्माद् ओकोनिधनं वैतहव्यम् इत्य् आख्यायते।
-जै० ब्रा०, १/२१४

वीतहव्यः श्रायसो ज्योतिरद्ध एतत्सामापश्यत् सोऽवगच्छत प्रत्यतिष्ठद्।

-तां० ब्रा०, ९/१/१

वीत+✓हु-दानदानयोः।

## वैदन्वतं

वैदन्वतानि भवसि। विदन्वान्वै भार्गव इन्द्रस्य प्रत्यहं तंशुगार्थत् स तपोऽतप्यत स एतानि वैदन्वतान्यपश्यत्तैः शुचमद्याहत्।

-तां० ब्रा०, १३/११/९-१०

यद् उ विदन्वान् भार्गवोऽ पश्यत् तस्माद् वैदन्वतानीत्य् आख्यायन्ते।

-जै० ब्रा०, ३/१६०

✓विद्-ज्ञाने।

## वैयश्वं

यद् उ व्यश्वोऽपश्यत्, तस्मात् वैयश्वम् इत्य् आख्यायते। -जै० ब्रा०, ३/२२१

वि+✓अशूङ्-व्याप्तौसंघाते च।

## वैरूपं

देवा वै तृतीयेनाह्ना स्वर्गलोकमायंस्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाभवन्तद्वैरूपस्य वैरुपत्वम्। -ऐ० ब्रा०, २१/१

यद् उ विरूप आङ्गिरसोऽपश्यत् तस्माद् वैरूपम् इत्य् आख्यायते।

-जै० ब्रा०, ३/२०९

वि+✓रुच-दीप्तावभिप्रीतौ च।

## वैश्वकर्म

विश्वं वा एतत् कर्म कृतम्, सर्वं जितं देवानामासीत् साकमेधैरीजानानां विजिग्यानानाम्। विश्वम्वेवैतस्यैतत् कर्मकृतम् सर्वं जितं भवति-साकमेधैरीजानस्य विजिग्यानस्य। तस्माद्वैश्वकर्मण एककपालः पुरोडाशो भवति। -श० ब्रा०, २/५/४/१०

अथोयद् एव प्रजा वृत्रात् पाप्मनो मुमुचाना विश्वं कर्मोपाक्रमन्त तस्माद् वैश्वकर्मणि।

-जै० ब्रा०, २/२३३

विश्व+✓डुकृञ्-करणे।

## वैश्वदेवं

अथ यदेनमेकं सन्तं बहुधा विहरन्ति, तदस्य वैश्वदेवम्। -ऐ० ब्रा०, ११/४

ततो विश्वेदेवा अमृतत्वमपाजयन्, तस्माद्वैश्वदेवम्। -श० ब्रा०, ३/६/१/२८

यदस्मिन् पूर्वेद्युर्विश्वेदेवा वसतीवरीषूपवसन्ति तेन वैश्वदेवम्। -श० ब्रा०, ३/६/१/२६

यद् विश्वे देवाः समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वम्। -तै० ब्रा०, १/४/१०/५

विश्वो देवस्येति वैश्वदेवम्।

-श० ब्रा०, ३/१/४/१९

वैश्वदेवी एतस्मान्मिथुना द्विश्वमसंमितमनु प्रजायते तस्माद्वैश्वदेवी।

-श० ब्रा०, ५/१/१/१६

विश्व+✓दिवु-क्रीडाविजिगीषादिषु।

## वैश्वानरः

यद् विश्वं भूतम् अवारयत् तद् वैश्वानरयोर् वैश्वानरत्वम्। -जै० ब्रा०, ३/८

वैश्वानरः कस्मात्? विश्वान्नरान्नयति। विश्व एनं नरा नयन्तीति वा। अपि वा विश्वानर एव स्यात्। प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः।

-निरु०, ७/२१

विश्व+✓नृ-नये, ✓णीञ्-प्रापणे।

## वैश्वमनः

यद् उ विश्वमना अपश्यत् तस्माद् वैश्वमनसम् इत्य् आख्यायते। -जै० ब्रा०, ३/२६७

विश्व+✓मन-ज्ञाने।

## वैश्वामित्रं

यद् उ विश्वामित्रोऽपश्यत् तस्माद्वैश्वामित्र-मित्याचक्षते। -जै० ब्रा०, ३/२३९

विश्व+✓ञिमिदा-स्नेहने।

## वैष्टम्भं

अहर्वा एतदल्वीयत तद्देवा वैष्टम्भैर्व्यष्टनुभवं स्त द्वैष्टम्भस्य वैष्टम्भत्वम्।

-ता० ब्रा०, १३/३/१०

तद्देवा वैष्टम्भैर्व्यष्टम्नुवं तद्वैष्टम्भस्य वैष्टम्भत्वम्।

-तां, १२/३/१०

तासु वैष्टम्भम्। वैष्टम्भेन वै देवा असुरान् एभ्यो लोकेभ्यो निष्टभ्य स्व आयतने सत्रम् आसत। वैष्टम्भनैव द्विषन्तं भ्रातृव्यम् एभ्यो लोकेभ्यो निष्टभ्य स्व आयतने सत्रम् आस्ते य एवं वेद। नैष्टम्भम ह वै नामैतत्। तद् वैष्टम्भम् इत्य् आख्यायते। -जै० ब्रा०, ३/५०

वि+✓ष्टभि-प्रतिबन्धे।

## वैसर्जनं

स यदिदं सर्वं विसृजते। तस्माद्वैसर्जनानि।

-श० ब्रा०, ३/६/३/२

वि+✓सृज-विसर्गे।

## व्यक्तिषक्तं

स यदुत्तरस्य सवनस्य तत् पूर्वं करोति, यत्पूर्वस्य तदुत्तमम् तद्व्यतिषजति। तस्मादिमानि पर्वाणि व्यतिषक्तानि। -श० ब्रा०, ४/२/३/६

वि+✓अञ्जू-व्यक्तिम्रक्षणकान्तिगतिषु+✓षञ्ज-संगे।

## व्यष्टिः

इमां व्यष्टिं व्यश्नुते। -श० ब्रा०, १०/२/४/८

वि+✓अशूङ्-व्याप्तौ, संघाते च।

## व्याघ्रः

व्याघ्रो व्याघ्राणाद्, व्यादाय हन्तीति वा।

-निरु०, ३/१८

वि+आ+✓घ्रा-गन्धोपादाने, वि+आ+✓हन्-हिंसागत्योः।

## व्यानः

अथ येनैताः शिरा अनुव्याप्ता एष वाव स व्यानः। -मै० उप०, २/६

व्यानः सर्वेषु चाङ्गेषु सदा व्यावृत्य तिष्ठति।

-अ० ना० उप०, ३५

वि+✓अन्-प्राणने।

## व्योमा

ततो वै ते व्योमासन् व्योमानं लोकम् अगच्छन्।

-जै० ब्रा०, २/८८

✓व्यय-गतौ, वि+✓यु-मिश्रणामिश्रणयोः।

## व्योमसद्

व्योमसदित्येष वै व्योमसद्व्योम वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति। इति।

-ऐ० ब्रा०, १८/६

व्योम+✓षद्लृ-विशरणगत्यावसादनेषु।

## व्रजः

व्रजो व्रजत्यन्तरिक्षे। -निरु०, ६/२

✓व्रज-गतौ।

## व्रतं

प्रातरशनं व्रतं व्रतयति। -मैत्रा०, ३/६/६

व्रतमिति कर्मनाम वृणोतीति सतः। इदमपीतरत् व्रतमेतस्मादेव निवृत्तिकर्म वारयतीति सतः। अन्नमपि व्रतमुच्यते यदावृणोति शरीरम्।

-निरु०, २/१३

✓वृञ्-वरणे।

## व्रततिः

व्रततिर्वरणाच्च। शयनाच्च। ततनाच्च।
-निरु०, ६/२८

✓वृञ्-वरणे।

## व्रन्दिन्

व्रन्दी व्रन्दतेमृदुभावकर्मणः। -निरु०, ८/१५

✓व्रन्दी-मृदुभावे।

## शकटं

शकटं शकृदितं भवति। शनकैस्तकतीति वा। शब्देन तकतीति वा। -निरु०, ६/२२

✓शक्लृ-शक्तौ, श (शनैः)+✓तक-हसने।

## शकुनिः

शकुनि शक्नोत्युन्नेतुमात्मानम्। शक्नोति नदितुमिति वा। शक्नोति तकितुमिति वा। सर्वतः शङ्करोऽस्त्विति वा। शक्नोतेर्वा।
-निरु०, ९/३

✓शक्लृ-शक्तौ, ✓शक्लृ-शक्तौ+✓णीञ्-प्रापणे।

## शक्रः

स शक्र उत न शकदिन्द्रो वसु दयमानः।
-ऋ०, १/१०/६

स नः शक्रश्चिदाशकद् दानवाँ अन्तरा भरः।
ऋ०, ८/३२/१२

✓शक्लृ-शक्तौ।

## शक्वरी

इमान्वै लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किञ्च यदिमाँल्लोकान्प्रजापतिः सृष्ट्वेद सर्वमशक्नोद्यदिदं किं च तच्छक्वर्योऽभवं स्तच्छक्वरीणां शक्वरीत्वम्।
-ऐ० ब्रा २२/२

एतेन शक्नुहि इति तच्छक्वरीणां शक्वरीत्वम्।
-ता० ब्रा०, १३/४/१

तद्यदद्य स्तुत्वाश्वोऽशक्नुवंस्त च्छक्वरीणां शक्वरीत्वम्। -जै० ब्रा०, ३/१०४

सा (वाक्) पञ्चमहः प्राप्य शक्वरी भवति यथा प्रशिष्टः शक्नोति। -जै० ब्रा०, २/१

✓शक्लृ-शक्तौ।

## शक्वर्यः

यदिमांल्लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किञ्च तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वम्। -ऐ० ब्रा०, ५/७

यदशक्नोत् तस्माच्छक्वर्यः।
-जै० ब्रा०, ३/१११

एताभिर्वा इन्द्रो वृत्रमशकद्धन्तुम्, तद् यदाभिर्वृत्रमशकद्धन्तुं तस्माच्छक्वर्यः।
-शां० ब्रा०, २३/२

शक्वर्य ऋचः। शक्नोतेः। -निरु०, १/८

✓शक्लृ-शक्तौ।

## शतं

शतं दशदशतः। -निरु०, ३/१०

## शतभिषक्

क्षत्रस्य राजा वरुणोऽधिराजः, नक्षत्राणां शतभिषग्वसिष्ठः। तौ देवेभ्यः कृणुतो दीर्घमायुः शतं सहस्रा भेषजानि धत्त।।
-तै० ब्रा०, ३/१/२/७

यच्छतमभिषज्यन्, तच्छतभिषक्।
-तै० ब्रा०, १/५/२/८-९

शत+✓भिषज्-चिकित्सायां।

## शतसनिः

शतसनिः स्या इति। तथेति। तस्मादुत गाथया। तस्मादुत कुम्ब्यया। तस्मादुत नाराशंस्या। तस्मादुत रैभ्या शतं सुनोति।
-जै० उ० ब्रा०, १/१६/१/४-७

शतं+✓षुञ्-अभिषवे।

## शदः

ततो वै सोऽवशत्यैव सर्वं पाप्मानं स्वर्गं लोकं अभ्य् उदक्रामत्। स एषोऽपहतपाप्मा तपति। अवशात्य हैव सर्वं पाप्मानं स्वर्गं लोकं अभ्य् उत्क्रामति य एवं वेद। यद् व एवैषैकैका स्तोत्र्यावशीयते तस्मात् शदः।

-जै० ब्रा०, २/८२

✓शद्लृ-शातने।

## शन्तनुः

शं तनो अस्तु इति वा, शं अस्मै तन्वा अस्त्विति वा। -निरु०, २/१२

शं+✓तनु-विस्तारे।

## शपथः

कृत्याः सन्तु कृत्याकृते शपथः शपथीयते।

-अथर्व०, ५/१४/५

✓शप-आक्रोशे।

## शमिता

ऋतवस्त ऋतुथा पर्व शमितारो विशासतु। संवत्सरस्य तेजसा शमीभिः शम्यन्तु त्वा॥

-यजु०, २३/४०

✓शमु-उपशमने।

## शमियत्री

पृथिवी वा अन्नानां शमयित्री तयैवैतच्छमयाञ्चकार। -गो० ब्रा०, २/१/२, २, १, २

✓शमु-उपशमे।

## शमी

शमी शशमानस्य शक्तिः। -ऋ०, ४/२२/८

सऽइदं देवेभ्यो हविः शमीष्व, सुशमि शमीष्व।

-यजु०, १/१५

तद्यदेतं शम्याऽशमयन्। तस्माच्छमी।

-श० ब्रा०, ९/२/३/३७

तमशमयत्, तं शम्याः शमीत्वं।

-मैत्रा०, १/६/४१

नाभौ सादयामीति पृथिवी वान्नानां शमयित्री तयैवैनच्छ मयाञ्चकार। -गो० ब्रा०, २/१/२

शमीं शान्त्यै ह शम्यहम्।-तै० ब्रा०, १/२/१/७

प्रजापतिरग्निमसृजत। सोऽबिभेत्प्र मा धक्ष्यतीति। तं शम्याऽशमयत्। तच्छम्यै शमित्वम्। तच्छमीमयः संभारो भवति शान्त्या अप्रदाहाय इति।

-तै० ब्रा०, २/१/३/११-१२

प्रजापतिरग्निमसृजत। सोऽबिभेत् प्रमा धक्ष्यतीति तं शम्याऽशमयत्। तच्छम्यै शमित्वम्।

-तै० ब्रा०, १/१/२/११-१२

वनस्पतीन्वा उग्रो देव उदौषत्, तं शम्या अध्यशमयंस्तच्शम्याः शमीत्वं यत् शमीशाखया-वत्सानपाकरोति शान्त्यै।

-मै० सं०, ४/१/१

✓शमु-उपशमने।

## शम्बः

शम्ब इति वज्र नाम। शमयतेर्वा शातयतेर्वा।

-निरु०, ५/२४

✓शमु-उपशमे।

## शंयुः

शंयुः सुखंयुः। -निरु०, ४/२१

शमन च रोगाणां यावनं च भयानाम्। अथापि शंयुर्बार्हस्पत्यं उच्यते। -निरु०, ४/२१

✓शमु-उपशमे+✓यु-मिश्रणामिश्रणे।

## शंसं

पङ्क्ति शंसं शंसति। -शां० ब्रा०, २५/१३

✓शंसु-स्तुतौ।

## शम्भुः

शंभुः सुखभूः। -निरु०, ५/३

शं+✓भू-सत्तायां।

## शरः

येऽन्तः शर अशीर्यन्त ते शरा अभवन् तच्छराणां शमूत्वम्। -ऋ०, ६/१/३/५

यत्र प्राहरत्तच्छकलोऽशीर्यत। स पतित्वा शरोऽभवत्। तस्माच्छरो नाम यदशीर्यत। -श० ब्रा०, १/२/४/१

शरः शृणातेः। -निरु०, ५/५

✓शृ - हिंसायां।

## शरत्

इमा ओषधयो ग्रीष्महेमन्ताभ्याम् नित्यक्ता भवन्ति, ता वर्षा वर्द्धन्ते, ताः शरदि वर्हिषो रूपं प्रस्तीर्णाः शेरे तस्मात् शरद्बर्हिः। -श० ब्रा०, १/५/३/१२

शरच्छृता अस्यामोषधयो भवन्ति। शीर्णा आप इति वा। -निरु०, ४/२५

✓शृ-हिंसायां।

## शरारुः

संशिशरिषुः। -निरु०, ६/३१

✓शृ-हिंसायां।

## शरीरं

अथ यत्सर्वस्मिन्नश्रयन्त तस्मादु शरीरम्। -श० ब्रा०, ६/१/१/४

तदशीर्यताशारीतीं तच्छरीरमभवत्तच्छरीरस्य शरीरत्वम्। -ऐ० आ०, २/१/४

शरीरं शृणातेः। शम्नातेर्वा। -निरु०, ३/५, २/१६

✓शृ-हिंसायां।

## शर्करा

तां दिशोऽनुवातः समवहत्। तां शर्कराभिरदृंहत्। शं वै नोऽभूदिति। तच्छर्कराणां शर्करत्वम्। -तै० ब्रा०, १/१/३/७

शं+✓डुकृञ्-करणे।

## शर्याः

शर्या अंगुलयोः भवन्ति। सृजन्ति कर्माणि शर्या इषवः शरमय्यः। -निरु०, ५/५

✓शृ-हिंसायां।

## शल्मलिः

शल्मलिः सुशरो भवति। शरवान्वा। -निरु०, १२/८

✓शृ-हिंसायां।

## शर्वरी

शर्वरी वै नाम रात्रिः। ते देवा अब्रुवन् अपि वै नश् शर्वर्यां अभूदिति। तद् एवापिशर्वराणां अपिशर्वरत्वम्। अपि ह वा अस्य शर्वर्यां भवति य एवं वेद। -जै० ब्रा०, १/२०९

✓शृ-हिंसायां।

## शशः

एष वै शशो य एषोऽन्तश् चन्द्रमसि। एष हीदं सर्वं शास्ति। -जै० ब्रा०, १/२८

एष वै शशो य एषोभ्य चन्द्रमस्येष हीदं सर्वं शास्ति।

शशस्य कर्षूशयस्य व्रतम्। -जै० आ० ब्रा०, ५/२/३

✓शश-हिंसायां प्लुतगतौ च।

## शशमानः

शशमानः शंसमानः। -निरु०, ६/८

✓शश-हिंसायां प्लुतगतौ च।

## शस्त्रं

तच्छयति यथाऽयं पुरुषः शितः। तद् यदेनच्छयति तस्माच्छस्रं नाम। -श० ब्रा०, ४/३/२/३

ताञ्छस्त्रै प्रशास्ति। तच्छस्त्राणां शस्त्रत्वम्। -जै० ब्रा०, २/२४

✓शश्-हिंसायां प्लुतगतौ च।

## शाकलं

एतेन वै शकलः पञ्चमेऽहनि प्रत्यतिष्ठत्प्रतितिष्ठति शाकलेन तुष्टुवानः।

-ता० ब्रा०, १३/३/१०

तद् एवैतेन हिंकारेण शमयन्ति, यद् उ शकलोऽपश्यत् तस्मात् शाकलं इत्याख्यायते।

-जै० ब्रा०, ३/९३

✓शक्लृ-शक्तौ।

## शाक्त्यं

शाक्त्येन वै शाक्त्याः पशून् अवारुन्धत। तत् शाक्त्यस्य शाक्त्यत्वम्। य उ शाक्त्या अपश्यन् स् तस्मात् शाक्त्यं इत्यात्याख्यायते।

-जै० ब्रा०, १/२१५

✓शक्लृ-शक्तौ।

## शाखा

शाखाः खशयाः। शक्नोतेर्वा। -निरु०, १/४

शाखाः शक्नोतेः। -निरु०, ६/३२

✓शाख-व्याप्तौ, ✓शक्लृ-शक्तौ, ख+✓शीङ्-शयने।

## शान्तदेवत्वं

तद् यदेतं देवमेतेनाशमयन्। तस्माच्छान्तदेवत्यम्। शान्तदेवत्यं ह वै तच्छतरुद्रियम् इत्याचक्षते।

-श० ब्रा०, ९/१/१/२

✓शमु-उपशमे +✓दिवु-क्रीडा विजिगीषान्यवहार द्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु।

## शान्तिः

शान्तिरापः, तदद्भिः शान्त्या शमयति।

-श० ब्रा०, १/२/२/११

अथो शमयन्त्येवैनमेतया शान्तिर्हिवायुः।

-ता० ब्रा०, ४/६/९

✓शमु-उपशमे।

## शम्मदं

तेऽब्रुवन् शं वै न इमे लोका अभादिषुर् इति। तद् एव शाम्मदस्य शाम्मदत्वम्। शं अस्मा इमे लोका मदन्ति अभ्य् एनं इमे लोका आवर्त्तन्ते।

-जै० ब्रा०, ३/१६४

शं+✓मदी-हर्षे।

## शार्करं

यद् उ शर्करस् शिंशुमारोऽपश्यत् तस्माच्छार्करम् इत्याख्यायते। -जै० ब्रा०, ३/१९४

✓शृ-हिंसायां।

## शाशदानः

शाशदानः शाशाद्यमानः। -निरु०, ६/१६

✓शद्लृ-शातने।

## शिक्यं

ऋतवः शिक्यम्। ऋतुभिर्हि संवत्सरः शक्नोति स्थातुम्। यच्छक्नोति तस्माच्छिक्यम्।

-श० ब्रा०, ६/७/१/१८

दिशः शिक्यम्। दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुम्। यच्छक्नुवन्ति तस्माच्छिक्यम्।

-श० ब्रा०, ६/७/१/१६

प्राणाः शिक्यम्। प्राणैर्ह्ययमात्मा शक्नोति स्थातुम्। यच्छक्नोति, तस्माच्छिक्यम्।

-श० ब्रा०, ६/७/१/२०

✓शक्लृ-शक्तौ।

## शिपिविष्टः

शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यव।

-निरु०, ५/७

किं ते विष्णोऽप्रख्यातमेतम् भवति, अप्रख्यायनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरस्मिः। अपि वा

प्रशंसानामैवाभिप्रेतं स्यात्। किं ते विष्णो प्रख्यातमेतद् भवति प्रख्यायनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः। शिपयोऽत्र रश्मय उच्यन्ते। तैराविष्टो भवति।

-निरु०, ५/८

✓शिप्-गमनार्थे+✓विश्-प्रवेशने, ✓विष्लृ-व्याप्तौ।

## शिमी

शिमीति कर्मनाम। शमयतेर्वा। शक्नोतेर्वा।

-निरु०, ५/१२

✓शमु-उपशमे, ✓शक्लृ-शक्तौ।

## शिरः

तस्मिन्नेतस्मिन्त्सर्वे देवाः श्रिताः। अत्र हि सर्वेभ्यो देवेभ्यो जुह्वति। तस्माद्वेवैतच्छिरः।

-श० ब्रा०, ६/१/१/७

यच्छ्रियं समुदौहन् तस्माच्छिरः। तस्मिन्नेतस्मिन्प्राणा अश्रयन्त। तस्माद्वेवैतच्छिरः।

-श० ब्रा०, ६/१/१/४

शिरो वै यज्ञस्योत्तर आधारः। श्रीर्वै शिरः। श्रीर्हि वै शिरस्तस्माद् योऽर्द्धस्य श्रेष्ठो भवति असावमुष्यार्द्धस्य शिर इत्याहुः।

-श० ब्रा०, १/४/५/५

श्रयंतेऽस्मिन्छ्रयो य एवमेतच्छिरसः शिरस्त्वतम्।

-ऐ० उप०, १/४

शिर आदित्यो भवति। यदनुशेते सर्वाणि भूतानि। मध्ये चैषां तिष्ठति। इदमपीतरच्छिर एतस्मादेव। समाश्रितान्येतदिन्द्रियाणि भवन्ति।

-निरु०, ४/१३

✓श्रिञ्-सेवायां।

## शिरिम्बठः

शिरिम्बिठो मेघः। शीर्यते बिठे। [ बिठमन्तरिक्षं ] बिठं बीरिटेन व्याख्यातम्। -निरु०, ६/३०

✓शृ-हिंसायां।

## शिशिरं

शिशिरं शृणातेः शम्नातेर्वा।

-निरु०, १/१०

✓शश-प्लुतगतौ।

## शिशुः

शिशुः शंसनीयो भवति। शिशीतेर्वा स्यात् दानकर्मणः। चिरलब्धो गर्भो भवति।

-निरु०, १०/३९

✓शश्-प्लुतगतौ।

## शिश्नं

शिश्नं श्नथतेः। -निरु०, ४/१९

✓श्नथ्-वधकर्मा।

## शीरं

अनुशायिनमिति वा। आशिनमिति वा।

-निरु०, ४/१४

✓शीङ्-शयने।

## शुक्रं

शुक्रः शुशुक्वाँ उषो न जारः।

-ऋ०, १/६९/१

शुक्रं शोचतेर्ज्वलतिकर्मणः। -निरु०, ८/११

✓शुच-दीप्तौ।

## शुक्लं

अथ कस्मादुच्यते शुक्लं। यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम्।

-अ० शि० उप०, ४, वटु० उप० १

शु+✓क्लदि-आह्वाने, ✓ईशुचिर्-पूतीभावे।

## शुचिः

विरोचतामरुषो भानुना शुचिः शुक्रं शुशुचीत सत्पतिः। -ऋ०, १०/४३/९

शुचिः शोचतेः। ज्वलतिकर्मणः। अयमपीतरः

शुचिरेतस्मादेव। निःषिक्तमस्मात्पापकमिति नैरुक्ताः। -निरु०, ६/१

✓ईशुचिर्-पूतीभावे।

## शुतुद्री

शुतुद्री शुद्राविणी। क्षिप्रद्राविणी। आशु तुन्नेव द्रवतीति वा। -निरु०, ९/२६

शु+✓तुद्-व्यथने, शत+✓द्रु-गतौ।

## शुद्धाशुद्धीयं

इन्द्रोयतीन् मालावृकेयेभ्यः प्रायच्छत्तमश्लीला-वागभ्यवदत्सोऽशुद्धोऽमन्यत स एतंच्छुद्धा-शुद्धयमपश्यत्तेनाशुध्यच्छुध्यति शुद्धाशुद्धीयेन तुष्टुवानः। -ता० ब्रा०, १४/११/१८

सः एते शुद्धाशुद्धीये अपश्यत्ताभ्यामशुध्यत्। -ता० ब्रा०, १९/४/७

स ( इन्द्रः ) एतच्छुद्धाशुद्धीयमपश्यत्तेनाऽशुध्यत्। -ता० ब्रा०, १४/१४/२९

स ( इन्द्रः ) एते शुद्धाशुद्धीयेऽपश्यत्ताभ्या-मशुध्यत्। -ता० ब्रा०, २९/४/७

✓शुध-शौचे।

## शुनस्कणस्तोमः

स एष शुनस्कर्णस्तोम एतेन वै शुनस्कर्णो वाष्किहोऽयजत तस्माच्छुनस्कर्णस्तोम इत्याख्यायते। -ता० ब्रा०, १७/१२/६

शुनः+✓कण-गतौ+✓ष्टु-स्तुतौ।

## शुनासीरः

शुनासीरः। शुनो वायुः। शु एत्यन्तरिक्षे। सीर आदित्यः सरणात्। -निरु०, ९/४०

शुन+✓सृ-गतौ।

## शुनासीर्यः

या वै देवानां श्रीरासीत् साकमेधैरीजानानां विजिग्यानाम् तच्छुनम्। अथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरम्। साया चैवदेवानांश्रीरासीत् साकमेधैरीजानानाम् बिजिग्यानाम्, य उ च संवत्सरस्य प्रजितस्य रस आसीत तमे वैतदुभयं परिगृह्यात्मन् कुरुते। तस्माच्छुनासीर्येण यजते। -श० ब्रा०, २/६/३/२

शुनः+✓सृ-गतौ।

## शुन्धनी

ता नः शुन्धन्तु शुन्धनीः, इति। -तै० ब्रा०, ३/७/१२

✓शुन्ध-शुद्धौ।

## शुन्ध्युः

शुन्ध्युरादित्यो भवति। शोधनात्। शकुनिरपि शुन्ध्युरुच्यते शोधनादेव। उदकचरो भवति। आपोऽपि शुन्ध्युरुच्यते। शोधनादेव। -निरु०, ४/१६

शु+✓रुधिर-आवरणे।

## शुरुधः

शुरुधः आपो भवन्ति। शुचं संरुन्धन्ति। -निरु०, ६/१६

✓शुचिर्-दीप्तौ+✓रुध्-अवरोधने च।

## शुष्णं

इन्द्रो यः शुष्णमशुषं न्यावृणम्। -ऋ०, १/१०१/२

शुष्णस्यादित्यस्य [ च ] शोषयितृ। -निरु०, ५/१६

✓शुष-शोषणे।

## शुष्मं

इयं शुष्मेभिः शोषणैः। शुष्ममिति बलनाम। शोषयतीति सतः। -निरु०, २/२३

✓शुष-शोषणे।

## शूरः

शूरः शवतेर्गतिकर्मणः। -निरु०, ४/१३

✓शु-गतौ, ✓शूर-विक्रान्तौ।

## शूर्पं

शूर्पं स्यतेः शूर्पमशनपवनम्। शृणातेर्वा।

-निरु०, ६/९

✓शृ-हिंसायां।

## शृङ्गं

प्र ते श्रृणामि शृङ्गे याभ्यां वितुदायसि।

अथर्व०, २/३२/६

शृङ्गं श्रयतेर्वा। शृणातेर्वा। शम्नातेर्वा। शरणायोद्गतमिति वा। शिरसो निर्गतमिति वा।

-निरु०, २/७

✓शृ-हिंसायां।

## शृतं

अथ यदेनं शृतेनैवाश्रयन् तस्माच्छ्रतम्।

-श० ब्रा०, १/६/४/८

शृतं कुरुतेत्यब्रवीत् तदस्मै शृतम कुवन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छ्रतस्य श्रृतत्वम्।

-तै० सं०, २/५/३/३

✓श्रा-पाके।

## शेपः

शेपः शयतेः स्पृशतिकर्मणः। -निरु०, ३/२१

✓स्पश्-बाधनस्पर्शयोः, ✓शप्-आक्रोशे।

## शेषः

शेष इत्यपत्यनाम। शिष्यते प्रयतः।

-निरु०, ३/२

✓शिष-असर्वोपयोगी।

## शैशवं

तासु शैशवं। शान्तिः वै शैशवं। यत् शैशवेन स्तुवन्ति शान्त्या एव। अथो आहुः शैशवेन वा इन्द्रो वृत्रं पर्याकारं शक्वरीभिर् अहन्न् इति। तद् व एव शैशवस्य शैशवत्त्वम्।

-जै० ब्रा०, ३/१०२

शैशवं भवति। शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्।

-तां० ब्रा०, १३/३/२३-२४

✓शश्-प्लुतगतौ।

## शोचिष्

आ जनाय द्रुह्वणे पार्थिवानि दिव्यानि दीपयोऽन्तरिक्षा। तपा वृषन्विश्वतः शोचिषा तान्ब्रह्मद्विषे शोचय क्षामपश्च।

-ऋ०, ६/२२/८, अथर्व०, २०/३६/८

अजस्रेण शोचिषा शोशुचच्छुचे।

-ऋ०, ६/४८/३

अग्ने यत्ते शोचिस्तेन तं प्रति शोच।

-अथर्व०, २/१९/४

✓शुच-शोके।

## शौक्तं

तासु शौक्तम्। आङ्गिरसो वै तपस् तेपाना अशोचन्। तेऽकामयन्ताप शुचं हनीमहीति। त एतत् सामापश्यत्। तेनास्तुवत। तेन शुचं अपाघ्नत। तद् यत् शुचम् अपाघ्नत तत् शौक्तस्य शौक्तत्वम्। -जै० ब्रा०, ३/५३

शुक्तिर्वा एतेनाऽङ्गिरसोञ्जसा स्वर्गं लोकमपश्यत्। -ता० ब्रा०, १२/५/१६

✓शक्लृ-शक्तौ।

## शौचं

चित्त शुद्धिकरं शौच वासनात्रयनाशनं ज्ञानवैराग्यमृत्तोयैः क्षालनादशौचमुच्यते।

-मै० उप०, २/९

✓शुचि-दीप्तौ, ✓शुचिर्-पूतीभावे।

## शौचिष्कशः

शोचन्तीव हि एतस्य केशाः समिद्धस्य।

-श० ब्रा०, १/४/१/३८

शौचिष्+✓कश-गतिशासनयोः।

## श्नौष्ठं

श्नौष्ठं भवति। श्नुष्टिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत्।

-श० ब्रा०, १३/११/२२-२३

श्नौष्टानि त्रीणि। श्नुष्टेर्वाङ्गरिसस्य

-आ० ब्रा०, ५/७/७

✓ष्णौ-वेष्टने।

## श्मः

श्मः शरीरम्। -निरु०, ३/५

✓शृ-हिंसायां।

## श्मशा

श्मशा शु अश्नुत इति वा। श्माश्नुत इति वा।

-निरु०, ५/१२

✓अशूङ्-व्याप्तौ संघाते च।

## श्मशानं

अथास्मै श्मशान कुर्वति। गृहान्वा प्रज्ञानं वा। यो वै कश्च म्रियते। सशवः। तस्मादेतदन्नं करोति। तस्मात् शवान्नम्। शवान्नम् ह वै तत् श्मशानमित्याचक्षते। ततो श्मशान उ हैव नाम पितृणां अत्तारं ते ह अमुष्मिन् लोकेऽकृतश्मशान्नस्य साधुकृत्यामुपदंभयन्ति। तेभ्य एतदन्नं करोति। तस्मात् श्मशान्नम्। श्मशान्नं ह वै तत् श्मशानमित्या चक्षते।

-श० ब्रा०, १३/८/१/१

श्मशानं श्मशयनम्। -निरु०, ३/५

श्म+✓शीङ्-स्वप्ने।

## श्यामं

श्यामं श्यायतेः। -निरु०, ४/३

✓श्यैङ्-गतौ।

## श्यावाश्वं

यद् शावाश्च आर्चनानसोऽपश्यत् तस्मात् श्यावाश्वं ह्याख्यायते। -जै० ब्रा०, १/१६४

यदु शावाश्च आर्चनानसोऽपश्यत् तस्माच्छया-वाश्वमित्याख्याते। -जै० ब्रा०, २/५४

श्याव+✓अशूङ्-व्याप्तौ।

## श्येनः

सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत् तेन् सा श्येनः सोमभृतः।

-श० ब्रा०, ३/४/१/१२

श्येनोऽसीति सोमं वा एतदा हैष ह वा अग्निर्भूत्वा ऽमिंल्लोके संश्याययति। तद् यत्संश्याययति तस्माच्छ्येनस्य श्येनत्वम्।

-गो० ब्रा०, १/५/१२

तेऽब्रुवन् स्वर्गं लोकं गत्वा श्येनो वाव नो भूत्वेदं साम स्वर्गं लोक अवाक्षीद् इति। तदेव श्येनस्य श्येनत्वम्। तत् एतत् स्वर्ग्यं साम। अश्नुते स्वर्गं लोकं य एवं वेद। इन्द्रो वा एतेन साम्ना श्येनो भूत्वा असुरान् अपावपत्। तद् एव श्येनस्य श्येनत्वम्। -जै० ब्रा०, ३/१५८

श्येन आत्मा भवति। श्यायतेर्ज्ञानकर्मणः।

-निरु०, १३/२६

श्येन आदित्यो भवति। श्यायतेर्गतिकर्मणः।

-निरु०, १३/२६

श्येनः शंसनीयं गच्छति। -निरु०, ४/२४

श्येनः शंसनीयं गच्छतीति। -निरु०, ११/१

✓श्यैङ्-गतौ।

## श्यैतं

यच्छेत्या अभवंस्तस्माछेयतम्।

-तां० ब्रा०, ७/१०/१३

श्यैतेन श्येती अकुरुत। तच्छ्यैतस्य श्यैतत्वम्।

-तै० सं०, ५/५/८/१

श्यैतेन श्यती अकुरुत। तच्छ्यैतस्य श्यैतत्वम्।

-तै० ब्रा०, १/१/८/३

सोऽब्रवीत् श्येती वा इमान् पशुन् अकृषीति। तद् एव श्यैतस्य श्यैतत्वम्।

-जै० ब्रा०, १/१४८

✓श्यैङ्-गतौ।

## श्रद्धा

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि। श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥

-ऋ०, १०/१५२/५

अथ खलु श्रद्धैव सकृदिष्टस्याक्षितिः। स यः श्रद्दधानो यजते। तस्येष्टं न क्षीयते।

-शां० ब्रा०, ७/४

यदा वै श्रद्दधात्यथ मनुते। नाश्रद्दधन् मनुते। श्रद्दधदेव मनुते। श्रद्धात्वेव विजिज्ञासित व्येति। श्रद्धां भगवो विजिज्ञास इति।

-छा० उ०, ७/१९/१

श्रद्धा श्रद्धानात्। -निरु०, ९/३०

श्रद्धे श्रद्धापयेह मा। -तै० ब्रा०, २/८/८/८

श्रत्+✓डुधाञ्-धारणपोषणयोः।

## श्रद्धानीयः

सोऽकामयत श्रन् मे दधीरन् स्याम इति। ततो वै तस्मै श्रद्दधत्, श्रद्धानीयोऽभवत्। श्रद्धानीयो भवति य एवं वेद। स वा एष कृतस्तोमः। श्रद्धा वै कृतम्। यद् ध वा इदं कृतेन जित्त्वा हरन्ति, श्रद्धया हैव तद् धरन्ति।

-जै० ब्रा०, २/२९०

श्रत्+✓डुधाञ्-धारणपोषणयोः।

## श्रवः

धूमो वाऽअस्य श्रवो वयः। स ह्येनममुष्मिल्लोके श्रावयति। -श० ब्रा०, ७/३/१/२९

संश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति वार्याणां सामानि चत्वारि सांशानानि वा।

-जै० आ० ब्रा०, ३/३/६

श्रव इत्यन्ननाम। श्रूयत इति सतः।

-निरु०, १०/३

✓श्रु-श्रवणे।

## श्रान्तः

तदभ्यश्राम्यदभ्यतपत् समतपत्, तस्य श्रान्तस्य तप्तस्य सन्तप्तस्य ललाटे स्नेहो यदार्द्रमाजायत्।

-गो० ब्रा०, १/१/१

तास्तत्रैवाभ्यश्राम्यदभ्यतपत्, समतपत् ताः श्रान्तास्तप्ताः, सन्ताप्ताः सार्द्धमेव रेतसा।

-गो० ब्रा०, १/१/३

✓श्रमु-तपसि खेदे च।

## श्रायत्

समाश्रिताः सूर्यमुपतिष्ठन्ते। -निरु०, ६/८

✓श्रिञ्-सेवायां।

## श्रायन्तीयं

तस्या वाचोऽवपादादबिभयुः। तमेतेषु सप्तसुच्छन्दः स्वश्रयन्। यदश्रयन्। तच्छ्रायन्तीयस्य श्रायन्तीयत्वम्। इति।

-तै० ब्रा०, १/५/१२

प्रजापतिरुषसमध्यैत् स्वां दुहितरं तस्य रेतः परापतत् तदस्यांन्यषिच्यत तदश्रीणादिदं मे मादुषदिति तत्सदकरोत्पशूनेव। यच्छ्रायन्तीयं ब्रह्मसाम भवति श्रीणाति चैवैनं सच्च करोति।

-ता० ब्रा०, ८/२/१०-११

श्रायन्तीयं ब्रह्मसाम भवत्येतद्देवाऽस्मिम्छ्रीणाति।

-ता० ब्रा०, १८/५/१९

स एतच्छ्रायन्तीयमपश्येनाऽऽत्मानं समश्रीणात्।

-ता० ब्रा०, १८/११/१

श्रायन्तीयं ब्रह्मसाम। सम् एवैनत् तच्छ्रीणन्ति।

-जै० ब्रा०, १/३५२

मरुतो यं श्रायन्तीयेनैनद् अश्रीणंस्, तच्छ्रायन्तीयस्य श्रीयन्तीयत्वम्।

-जै० ब्रा०, २/२०१

✓श्रिभ्-सेवायां, ✓श्रु-श्रवणे।

**श्रुधिः**

श्रुधि श्रुत्कर्ण। -ऋ०, १/४४/१३

आश्रुत्कर्ण श्रुधी। -ऋ०, १/१०/९

✓श्रु-श्रवणे।

**श्रुधीयं**

तस्मै वै मे श्रद्धां कुरुतेति। तस्मै श्रोधियेत्य् एव श्रद्धां अकुर्वन्। -जै० ब्रा०, ३/२७४

✓श्रु-श्रवणे।

**श्रुष्टिः**

श्रुष्टीति क्षिप्रनाम। आशु अष्टीति।

-निरु०, ६/१२

✓श्रु-श्रवणे+✓अशूङ्-व्याप्तौ।

**श्रीः**

अथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियः।

-श० ब्रा०, ६/१/१/४

श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद् योऽर्द्धस्य श्रेष्ठो भवति। -श० ब्रा०, १/४/५/५

✓श्रिञ्-सेवायां।

**श्रेणिः**

[ श्रेणिश इति ] श्रेणिः श्रयतेः। समाश्रिता भवति।

-निरु०, ४/१३

✓श्रिञ्-सेवायां।

**श्रेयः**

श्रेयसा ( देवाः ) श्रियम् अगच्छन्।

-जै० ब्रा०, २/१०३

✓श्रिञ्-सेवायां।

**श्रोणः**

प्रान्धं श्रोणं श्रवयन्तसास्युक्थ्यः।

-ऋ०, २/१३/१२

शृण्वन्ति श्रोणाममृतस्य गोपाम्। पुण्यामस्या उपशृणोमि वाचम्। -तै० ब्रा०, १३/१/२/५

त्रेधा विष्णुरुरुगायो विचक्रमे महीं दिवं पृथिवीमन्तरिक्षम्। तच्छ्रोणैति श्रव इच्छमाना पुण्यं श्लोकं यजमानाय कृण्वती इति।

-तै० ब्रा०, ३/१/२/५-६

यदश्लोणत् तच्छ्रोणा।

-तै० ब्रा०, १/५/२/८-९

शृणवन्ति श्रोणामभृतस्य गोपां... महीं देवीं विष्णुपत्नीमर्ज्याम्।

-तै० ब्रा०, ३/१/२/५-६

✓श्रु-श्रवणे, ✓श्रोणृ-वर्णगत्योः।

**श्रोणिः**

श्रोणिः श्रोणतेर्गतिचलाकर्मणः। श्रोणिश्चलतीव गच्छतः। -निरु०, ४/३

✓श्रोणृ-वर्णगत्योः।

**श्रोत्रं**

शृण्वन् श्रोत्रम्। -बृहद० उप०, १/४/७

श्रोत्रं च श्रोतव्यम्। -प्र० उप०, ४/८

श्रोत्रं भूत्वा सर्वं अशृणोत्।

-जै० ब्रा०, १/३१४

श्रोत्रं सर्वं शृणोत्यपि। -पा० ब्र० उप०, ९

श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः श्रोत्रे य श्रोतव्ये।

-सु० उप०, ५/२

श्रोत्रं वै ब्रह्म श्रोत्रेण हि ब्रह्म शृणोति।

-ऐ० ब्रा० १०/८

श्रोत्रं वै ब्रह्म, श्रोत्रेण हि ब्रह्म शृणोति।

-ऐ० ब्रा०, २/४०

श्रोत्रं वै विश्वामित्र ऋषिः। यदेनेन सर्वतः श्रृणोति। -श० ब्रा०, ८/१/२/६

श्रोत्रेण भद्रमुत शृण्वति सत्यम्। श्रोत्रेण वाचं बहुधोद्ममानाम्। श्रोत्रेण मोदश्च महश्च श्रूयते। श्रोत्रेण सर्वा दिश आ शृणोति, इति। -तै० ब्रा०, २/५/२/३

✓श्रु-श्रवणे।

## श्रोत्रपाः

श्रोत्रपाः श्रोत्रं मे पातु। -मैत्रा०, १/३/३०

श्रोत्र+✓पा-रक्षणे, ✓पा-पाने।

## श्रौतकक्षं

यद् उ श्रुतकक्षः काक्षीवतोऽपश्यत् तस्माच्छ्रौतकक्षं इत्याख्यायते। -जै० ब्रा०, १/२१७

यद् उ श्रुत्कक्षः काक्षीवतोऽपश्यन् तस्माच्छ्रौतकक्षंमित्याख्यायते। -जै० ब्रा०, १०

श्रौत+✓कस-हिंसागतिशासनेषु।

## श्रौषड्

ओं श्रावय, अस्तु श्रौषड्।

✓श्रु-श्रवणे।

## श्लाघ्नीयः

अथाद्भिः श्लाघ्यमानो न स्नायत् तेन तां श्लाघामवरुन्धे, याऽस्याप्सु भवति स हस्नातः श्लाघनीयोऽन्येभ्यः श्लाघ्याते। -गो० ब्रा०, १/२/२

✓श्लाघृ-कथने।

## श्लोकः

इमा विश्वा जातान्याश्रावयति श्लोकेन। -ऋ०, ८/८२/९

श्लोकः श्रृणोतेः। -निरु०, ९/९

✓श्लोकृ-संघाते, ✓श्रु-श्रवणे।

## श्वघ्निन्

श्वघ्नी कितवो भवति। स्वं हन्ति। स्वं पुनराश्रितं भवति। -निरु०, ५/२२

श्व+✓हन्-हिंसागत्योः।

## श्वन्

श्वा शुयायी। शवते स्याद्गतिकर्मणः। श्वसितेर्वा। -निरु०, ३/१८

✓टुओश्वि-गतिवृद्धयोः, ✓शव-गतिकर्मा ✓श्वस्-प्रापणे।

## श्वः

श्वः, उपाशंसनीयः काल। -निरु०, १/७

✓शंसु-स्तुतौ।

## श्वात्रः

श्वात्रमिति शिप्रनाम। आशु अतनं भवति। -निरु०, ५/३

शु+✓अत-सातत्यगमने।

## श्वेत्या

श्वेत्या श्वेततेः। -निरु०, २/२०

✓श्विता-वर्णे।

## षट्

षट् पुनः सहतेः। -निरु०, ४/२७

✓षह-मषणे।

## षड्ढोता

तस्मै षष्टं हूतः प्रत्यश्रणोत्। स षडदूतोऽभवत् षड्दूतो ह वै नामैषः ते वा एते षड्दूतं सन्तंषड्ढोतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः। -तै० ब्रा०, २/३/११/२-३१

षट्+✓हू-दानादानयोः।

## षोडशी

अथो षोडशं वा एतत् स्तोत्रम्, षोडशं शस्त्रं, तस्मात् 'षोडशी' इत्याख्यायते।

-शां० ब्रा०, १७/१

किं षोडिशिनः षोडिशित्वं? षोडशस्तोत्राणि षोडशशस्त्राणि षोडशभिरक्षरैरादत्ते।

-गो० ब्रा०, २/४/१९

तदाहुः किं षोडषिन षोडशित्वमिति षोडशः स्तोत्राणां षोडशः शस्त्राणां षोडशभिरक्षरैरादत्ते शोषशभिः प्राणौति षोडशपदां निविदं दधाति तत्षोडशिनः षोडशित्वम्।इति।।

-ऐ० ब्रा०, १६/१

तानि यत् षोडशषोडश समयद्यन्त तत् षोडशिनष् षोडशित्वम्। -जै० ब्रा०, १/१९३

## सक्तुः

सक्तुः सचतेः। दुर्धावो भवति। कसतेर्वा स्याद्विपरीतस्य विकसितो भवति।

-निरु०, ४/१०

✓षच्-समवाये।

## सक्थिः

सक्थि सचतेः। आसक्तोऽस्मिन् कायः।

-निरु०, ९/२०

✓षञ्च-संगे।

## सखा

सखा कस्मात्। सख्यतेः। -निरु०, १३/२३

स (समानं)+✓ख्या-कथने।

## सङ्कः

सङ्काः सचतेः। संपूर्वाद्वा किरते।

-निरु०, ९/१४

सं+✓डुकृञ्-करणे।

## सङ्कृतिः

तद्देवा देवस्थाने तिष्ठन्तः संकृतिना समस्कुर्वन् तत् संकृतेः संकृतित्वम्।

-ता० ब्रा०, १५/३/२९

संकृति भवति स ॐस्कृत्यै अहर्व्वा एतदब्लीयत तद्देवा देवस्थाने तिष्ठन्तः संकृतिना समस्कुर्व ॐस्तत् संकृते संकृतित्वम्।

-ता० ब्रा०, १५/३/२९

संकृतिना वै देवाः प्रजाः पशून् श्रियं अन्नाद्यं समकुर्वत। तत् संकृतिनस् संकृतित्वम्।

-जै० ब्रा०, ३/२५३

सं+✓डुकृञ्-करणे।

## सङ्गिरः

यद् गिरामि सं गिरामि समुद्र इव संगिरः। प्राणानमुष्य संगीर्य सं गिरामो अमुं वयम्।।

-अथर्व०, ६/१३५/३

सम्+✓गृ-निगरणे शब्दे च।

## सङ्ग्रामः

संग्रामः कस्मात्। संग्रमनाद्वा। संगरणाद्वा। संगतौ ग्रामाविति वा। -निरु०, ३/९

सं+✓गम्-गमने, सं+✓गृ-शब्दे निगरणे, सं+✓ग्राम-चामन्त्राणे।

## संध्या

तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे संध्यामुपास्ते। सज्जोतिष्या ज्योतिषो दर्शनात्। सोऽस्याः कालः। सा संध्या। तत् संध्यायाः संध्यात्वम्।

-ष० ब्रा०, ५/५/४

सम् ✓ध्यै-चिन्तने।

## संपिबः

यत् पिबामि सं पिबामि समुद्र इव संपिबः। प्राणानमुष्य संपाय सं पिबामो अमुं वयम्।।

-अथर्व०, ६/१३५/२

सं+✓पा-पाने।

## संभूतिः

प्राणं वा अनु प्रजाः पशवस्संभवन्ति।

-जै० उ०, ८/२/४/५

संभूतिरिति सात्ययज्ञयः। प्राणं वा अनु प्रजाः पशवः संभवन्ति। स य एवमेतं संभूतिरित्युपास्ते। समेव प्राण्योन प्रजया पशुभिर्भवति॥

-जै० उ० ब्रा०, २/२/२/४

सं+✓भू-सत्तायां।

## संभार

यत्संभारान्संभरति यदेवात्राग्नेर्व्यक्तं तत्संभरति।

-मैत्रा०, ३/८/१५

सं+✓भृ-भरणे।

## संयद्वसुः

यज्ञं हि संयन्ति इतीदं वस्विति।

-श० ब्रा०, ८/६/१/१९

सम्+✓इण् ( गतौ )+वसुः।

## संयद्वामः

एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामन्यभि संयन्ति सर्वाणि वामानि नयति य एवं वेद।

-छा० उ०, ४/१५/१

सं+✓यमु-उपरमे+✓टुवम-उद्गिरणे।

## संयान्यः

ता हैता एव संयान्यः। एतद्वै देवा विश्वज्योतिर्भिरेवेमांल्लोकान्त्समयुः। इतश्चोर्ध्वान् अमुतश्चार्वाचः। तभैवैतद्यजमानो विश्वज्योतिभिरेवेमांल्लोकान्त्संयाति।

-श० ब्रा०, ८/७/१/२३

सम्+✓इण्-गतौ, सम्+✓या-प्रापणे।

## संवत्सरः

सर्वं वा अत्सारिषं य इमा देवता असृक्षीति स सर्वत्सरोऽभवत्। सर्वत्सरो ह वै नामैतद्यत्संवत्सर इति।

-श० ब्रा०, ११/१/६/१२

सर्वं वै संवत्सरः। सर्वमेव तद्देवा असुराणां समवृञ्जत, सर्वस्मात्सपत्नानसुरान् निरभाजन् सर्वभ्वेवैष एतत्सपत्नानां संवृङ्क्ते, सर्वस्मात्सपत्नान्निर्भजति य एवमेतद्वेद।

-श० ब्रा०, १/७/२/२४

आदित्य एव संवत् चन्द्रमा सरः। तमेव सरति तं पौर्णमास्यामाप्नोति। -जै० ब्रा०, २/६०

तद् आहुः किं संवत् किं सरं.....। स ब्रूयात् त्रय्य एव विद्या संवत्। अहोरात्रे एवं सरः, इत्याधिदैवतम्। अथाध्यात्मम्। अन्नम् एव संवत्। वाक् एव सरः। -जै० ब्रा०, २/२९

संवत्सरः संवसन्तेऽस्मिन्भूतानि। -निरु०, ४/२७

सं+✓वृजी-वर्जने, सं+✓वस्-निवासे।

## संवत्सरायनं

यद् आहुः किं संवत् किं सरं किमयनम् इति। स ब्रूयात् त्रय्य एव विद्या संवत्। तां हि सर्वे देवाः संवान्ताः। अहोरात्रे एव सरः। ते हीदं सर्वं सरतः। आदित्य एवायनं। आदित्य एवायनम्। स हि एषु लोकेषु एति। अन्नं एव संवत्। तद् धीतं, सर्वं एवान्तम्। वाग् एव सरः। वाचा हि पुरुषः सरति। प्राण अयनम्। स हि अस्मिन् सर्वस्मिन् एति। -जै० ब्रा०, २/२९

संवत्सर+✓इण-गतौ, ✓या-प्रापणे।

## संश्यानं

अथ कस्मात् संश्यानानि नाम, एतैर्वै सामभिर्देवा इन्द्रमिन्द्रयेण वीर्येण समश्यन्, तथैवै तद्यजमाना एतैरेव सामभिरिन्द्रयेणैव वीर्येण संश्यन्ति।

-गो० ब्रा०, २/५/७

सं+✓शो-तनूकरणे।

## संसर्पः

अथैष वसिष्ठस्य संसर्पः। वसिष्ठो वा अकामयत सम् इमान् लोकान् सर्पेयम् इति। ततो वै स इमान् लोकान् समसर्पत् यद् इमान् लोकान् समसर्पत् तत् संसर्पस्य संसर्पत्वम्। सम् इमान् लोकान् सर्पति य एवं वेद।

-जै० ब्रा०, २/२८९

सं+✓सृप्लु-गतौ।

## संसृपः

त एतास् संसृप इष्टीर् अपश्यन्। ताभिः एनद् अनु समसर्पन्। यद् अनु समसर्पः। तत् संसृपां संसृप्त्वम्। -जै० ब्रा०, २/२०१

तद् यदेनमेताभिर्देवताभिरनुसमसर्पत् तस्मात्संसृपो नाम। -श० ब्रा०, ५/४/५/३

तत्संसृद्भिरनुसमसर्पत्। तत्संसृपां संसृप्त्वम्।

-तै० ब्रा०, १/८/१/१

सम्+✓सृप्लृ-गतौ।

## संस्रावः

ये नदीनां संस्रवन्त्युत्सासः सदभक्षिताः। तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रासयामसि।

-अथर्व०, १/१५/३

सम्+✓स्रु-गतौ।

## संहितः

असौ वा आदित्यः संहितः। एष ह्यहोरात्रे सन्दधाति। -श० ब्रा०, ९/४/१/८

तद्देवाः संहितेन समदधुः यत्समदधुः तस्मात्संहितम्। -ता० ब्रा०, ८/४/९

तद् यद् उभयं धनं संहितं अजर्यस् तत् संहितस्य संहितत्वम्। -जै० ब्रा०, १/१५७

यत् समदधुस् तद् व एव संहितस्य संहितत्वम्।

-जै० ब्रा०, १/१५८

सं+✓हि-गतौवृद्धौ च, सं+✓डुधाञ् -धारणपोषणयोः।

## सचेतस्

सवीमनि क्रतुं सचन्ते सचितः सचेतसः।

-ऋ०, १०/६४/७

स (समानं)+✓चिति-सञ्ज्ञाने।

## सजाता

सजाता अङ्गान्यस्य तानि। अङ्गैर्हि सह जायते।

-जै० उ० ब्रा०, १/१५/३/३

स+✓जनी-प्रादुर्भावे।

## सजूः

तथैवैतद्यजमानो एताभिर्देवताभिः सयुग्भूत्वैताः प्रजाः प्रजनयति। तस्मादु सर्वास्वेव सजूः।

-श० ब्रा०, ८/२/२/७

स+✓जनी-प्रार्दुभावे।

## सञ्जयं

तद् यद् इमान् लोकान् समजयंस् तत् संजयस्य संजयत्वम्। -जै० ब्रा०, ३/१३२

देवाश्च वा असुराश्च समदधत यतरे नः सञ्जयांस्तेषान्नः पशवोऽसानिति ते देवा असुरान् सञ्जये न समजयन् यत्समजयंस्तस्मात्त्यञ्जयम्पशूनामवरुध्यै सञ्जयं क्रियते। -ता० ब्रा०, १३/६/७

सं+✓जि-जये।

## सतः

सतः संसृतं भवति। -निरु०, ३/२०

✓अस्-भुवि।

## सत्पतिं

सूनुंसत्यस्यसत्पतिम्। -ऋ०, ८/५८/४

सत्+✓पा-रक्षणे।

## सत्पतिश्चेकितानः

सत्पतिश्चेकितानः इति। अयमग्निः सतां पतिश्चेतयमान इत्येतत्।

-श० ब्रा०, ८/६/३/२०

सत्पतिः+✓कित-ज्ञाने।

## सत्यं

ऋतमर्षन्ति सिन्धवः सत्यं ततान।

-ऋ०, १/१०५/१२

एषां मरुतां महिमा सत्यो अस्ति।

-ऋ०, १/१६७/७

अथ नामधेयं, सत्यस्य सत्यमिति। प्राणा वै सत्यं, तेषामेव सत्यम्।

-वृहद० उप०, २/३/६

सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च। सत्यमभवत्। यदिदं किञ्च। तत्सत्यमित्याचक्षते। -तैत्ति० उप०, २/६

तानि ह वा एतानि त्रीण्यक्षराणि; सत्तियमिति। तद्यत् ''सत्'' तदमृतम्, अथ यत् ''ति'' तन्मर्त्यय्, अथ यत् ''यम्'' तनोते यच्छति। यदनेनोभे यच्छति तस्मात् ''यम्''। अहरर्वा एवंवित् स्वर्गं लोकमेति।

-छा० उप०, ८/३/५

तदतत् त्र्यक्षरं सत्यमिति। 'स' इत्येकमक्षरम् 'ति' इत्येकमक्षरम्, 'यम्' इत्येकमक्षरम्, प्रथमोत्तमे अक्षरे सत्यं, मध्यतोऽनृतं, तदेतदनृतमुभयतः सत्येन परिगृहीतंसत्यभूयमेव भवति। नैव विद्वांसमनृतं हिनस्ति।

-वृहद् उप०, ५/५/१

द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चा मृतं च स्थितं च यच्च सच्च त्यं च।

-वृ० उ०, २/३/२

ब्रूयात् किं यद्यत् सत्यमिति। यदन्यदेवेभ्यश्च प्राणेभ्यश्च। तत्सत् अथ यद्देवाश्च प्राणाश्च तद्यम्। तदेतया वाचाऽभिव्याद्रियते सत्यमिति।

-कौ० ब्रा० उप०, १/६

सत्यं कस्मात्? सत्सु तायते। सत्प्रभवं भवतीति वा। -निरु०, ३/१३

सत्+✓अस्-भुवि+✓इण्-गतौ।

## सत्रं

तद् यत् सद् अत्रायत तत् सत्रस्य सत्रत्वम्।

-जै० ब्रा०, ३/३११

सत्+✓त्रैङ्-पालने।

## सत्राजित्

यत् सत्राजयंस् तत् सत्राजितं सत्राजित्वम्।

-जै० ब्रा०, २/९२

सत्र+✓जि-जये।

## सत्रायणः

अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्, ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते।

-छा० उप०, ८/५/२

याह दीक्षा सा निषत् तत्सत्रम्, तदयनम्, तत्सत्रायणम्। -श० ब्रा०, ४/६/८/२

सत्र+✓इण्-गतौ।

## सत्रासाहीयं

य तद् यत् सत्रा सर्वान् असुरान् असहत तत् सत्रासाहीयस्य सत्रासाहीयत्वम्।

-जै० ब्रा०, १/१८२

यद्वा असुराणामसोढ़मासीत् तद्देवाः सत्रासाहीयेनासहन्त सत्रैनानसक्ष्महीति तत्सत्रासाहीयस्य सत्रासाहीयत्वम्।

-ता० ब्रा०, १२/९/२१

सत्र+✓षह-मर्षणे।

## सदः

ध्रुवे सदसि सीदति। -ऋ०, ९/४०/२

सदसि सीद जुहू रुपभृद ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदैता असदन्।

-तै० सं०, १/१/११/११

उदरमेवास्य सदः। तस्मात् सदसि भक्षयन्ति। यद्धीदं किञ्चाशनन्तिउदरऽएवेदं सर्वं प्रतितिष्ठति।

अथ यदस्मिन् विश्वेदेवाऽअसीदन् तस्मात्सदो नाम। -श० ब्रा०, ३/५/३/५, ३/६/१/१

✓षद्लृ-विशरणगत्यवसादनेषु।

## सदनं

अभ्यक्षि सद्म सदने पृथिव्याः। -ऋ०, ६/११/५

महीमपारां सदने ससत्थ। -ऋ०, ३/३०/९

सदने सादयध्वम्। सादयद्योनिं दम आ दीदिवांसं हिरण्यवर्णमरुषं सपेम। -ऋ०, ५/३/४३/१२

हरिर्मित्रस्य सदनेषु सीदति। -ऋ०, ९/८६/११

ऋतस्य सदने सीदामि। -ता० ब्रा०, १/२/२

सदसि सीदेत्याह। -तै० ब्रा०, ३/३/६/१०

सदने सादयमि। -जै० ब्रा०, १/७०

✓षद्लृ-विशरणगत्यवसादनेषु।

## सदस्यः

यद्दक्षिणतो विश्वेदेवा उपासीदंस्ततसदस्योऽभवतत्सदस्य सदस्यत्वम्। -गो० ब्रा०, १/२/१९

✓षद्लृ-विशरणगत्यवसादनेषु।

## सदस्सदः

अग्निस्वाताः पितर एह गच्छत् सदः सदः सदत सुप्रणीतयः। -अथर्व०, १८/३/४४

✓षद्लृ-विशरणगत्यवसादनेषु।

## सदान्वा

सदा नोनुवे शब्दकारिके। -निरु०, ६/३०

सदा+✓नु-शब्दे।

## सदोविशीयं

सदोविशीयेन वै देवा विशं असीदन्। -जै० ब्रा०, २/१०३

✓षद्लृ-विशरणगत्यवसादनेषु+✓विश् -प्रवेशने।

## सनिता

सनिता सनये स नोऽदात्। -ऋ०, १/३०/१६

सनेम तत् सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः। -ऋ०, १०/३६/९

✓षण्-सम्भक्तौ।

## सनुत्रीः

सनुत्रीर्यन्त्रायसे। -ऋ०, १०/७/४

✓षण्-संभक्तौ+✓त्रैङ्-पालने।

## सन्तनिः

तद् यत् सन्तनि भवति प्राणानाम् एवं सन्तत्यै वाचं प्राणैस् सन्तनवामेति। इमे वै लोकास् सन्तनय् इम उ लोका महानाम्नयः। तद् यद् सन्तनि भवत्येषां एव लोकानां सन्तत्यै। सम अस्मा इमे लोकान् तायन्ते य एवं वेद। -जै० ब्रा०, ३/११९

सन्तनि भवति पञ्चमस्याह्नः सन्तत्यै। -तां० ब्रा०, १३/५/९, १४/३/७

सं+✓तनु-विस्तारे।

## सन्धिः

त्वचा प्रावृत्य सर्वं तत् संधा समदधान् मही। -अथर्व०, ११/८/१५, ११/८/१५

ते एतद् राथन्तरं संधिं अपश्यन्। तेनाहोरात्रे उपरिष्टात् समदधुः। यत् समदधुः तत् संधेः संधित्वम्। -जै० ब्रा०, १/२०९

यत् समदधुस् तत् संधेस् संधित्वम्। -जै० ब्रा०, १/२०९

सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता। -सा० पू०, ३/२/१/२, मन्त्रसंख्या २४४

तेनैतत् समदधुः। यत् ननाह्वा। समदधुस्तदेव संहितस्य संहितत्वम्। -जै० ब्रा०, १/१५७

सम्+✓डुधाञ्-धारणपोषणयोः।

**सन्धितिः**

यज्ञस्य सन्धितिमनुयजमानः सन्धीयते, यजमानस्य सन्धि तिमन्वृत्विजः सन्धीयतः, ऋत्विजां सन्धितिमनु दक्षिणाः सन्धीयन्ते दक्षिणानां सन्धितमनुयजमानः पुत्र पशुभिः सन्धीयते, पुत्रपशुनाम् सन्धितमनुयजमानः स्वर्गेण लोकेन सन्धीयते। स्वर्गस्य लोकस्य सन्धितमनु तस्यार्द्धस्य योगक्षेमः सन्धीयते।

-गो० ब्रा०, १/१/१४

सम्+✓डुधाञ्-धारणपोषणयो।

**सन्नमः**

संन्नमः सं नमन्तु॥ -अथर्व०, ४/३९/१

सं+✓णम्-प्रह्वत्वे शब्दे च।

**सप्तनामा**

सप्तनामादित्यः। सप्तास्मै रश्मयो रसानभिसन्नामयन्ति। सप्तैनमृषयः स्तुवन्तीति वा। इदमपीतरन्नामैतस्मादेव। अभिसन्नामात्।

-निरु०, ४/२७

सप्त+✓णम्-प्रह्वत्वे च।

**सप्त**

सप्त सृप्ता संख्या। सप्तादित्यरश्यप इति वदन्ति।

✓सृप-गतौ।

**सप्तपुत्रं**

सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा।

-निरु०, ४/२६

सप्त+✓पूञ्-पवने।

**सप्रथस्**

सप्रथाः सर्वतः पृथुः। -निरु०, ६/७

स+✓पृथु-विस्तारे।

**सफः**

सफेन वै देवा इमा् लोकान् समाप्नुवन् यत्सामाप्नुवन् तत् सफस्य सफत्वमिमानेवैतेन लोकान् समाप्योत्तिष्ठन्ति।

-ता० ब्रा०, १५/११/५

स (सह)+✓आप्लृ-व्याप्तौ।

**सभः**

तासु सभम् यज्ञस्यैव सभतायै, यद्वा वै किञ्च यज्ञस्य इष्टतु दुःशस्तम् विधुरं, तस्य ह वा एतत् समतोये, सभमभिवम् असदिति ह वा एतेनस्तुवन्ति साभं हवा एतन्नाम।

-जै० ब्रा०, १/५१

समेन सभं आह्वानं अध्यकुर्वत। तत् सभस्य सभत्वम्। सोऽब्रवीत् सभो वै पशुभिर् अभूवं इति। तद् व एव सभस्य सभत्वम्।

-जै० ब्रा०, १/१६०

स+✓भा-दीप्तौ, ✓स (सह)+✓भू-सत्तायां।

**समदः**

समदः समदो वात्तेः। सम्मदो वा मदतेः।

-निरु०, ९/१७

स+✓अद्-भक्षणे, स+✓मदी-हर्षे।

**समनं**

ता आ चरन्ति समना पुरस्तात् समानतः समना पप्रथानाः। -ऋ०, ४/५१/८

समनं समननाद्वा। संमाननाद्वा। कल्दाण्यः स्मयमानासः। -निरु०, ७/१७

स+✓मन-ज्ञाने।

**समन्तं**

तस्यान्तौ समाहृत्य समधत्ताम्। यत् समधत्तां तत् समन्तस्य समन्तत्वम्। -जै० ब्रा०, ३/१८६

समन्तं भवति समन्तामेवास्मै विशं करोति।

-ता० ब्रा०, १९/१२/६

समानीं ऋद्धिं ऋध्नुयावेति। ताव् एत् सामापश्यतां। अर्धं अन्योऽपश्यत् अर्धं अन्यः। तस्यान्तौ समाहृत्य समधत्तां। यत् समधतां तत् समन्तस्य समन्तत्वम्। -जै० ब्रा०, ३/१८६

स+✓मन-ज्ञाने।

## समानः

अथ योऽयं स्थविष्ठमन्नधातुमपाने स्थापयत्यणिष्ठं चाङ्गेऽङ्गे समं नयत्येष वाव स समानः। -मैत्रा० उप०, २/६

यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति स समानः। -प्र० उप०, ४/४

ये समानाः समनसः। -यजु०, १९/४५

ये समानाः समनसो जीवा जीवेषु मामकाः। -यजु०, १९/४६

समानः सर्वं समीरण्यं करोति मुनिपुङ्गवः। -जा० उप०, ४/३१

समानं संमानमात्रं भवति। -निरु०, ४/२५

सम्+✓णीञ्-प्रापणे, स+✓माङ्-माने।

## समाप्तिः

समाप्तिम् तया समाप्नोति। -श० ब्रा०, ३/२/१/१०

सम्+✓आप्लृ-व्याप्तौ।

## समाम्नायः

समाम्नायः समाम्नातः स व्याख्यातव्यः। तमिमं समाम्नायं निघण्टव इत्याचक्षते। -निरु०, १/१

सम्+आ+✓म्ना-अभ्यासे।

## समितिः

यन्त्यस्य समितिं समित्यो भवति य वेद। -अथर्व०, ८/१०/११

सम्+✓इण्-गतौ।

## समिधः

प्राणा वै समिधः, प्राणानेवैतत्समिन्धे। -श० ब्रा०, १/५/४/१

प्राणा वै समिधः प्राणा हीदं सर्वं समिन्धते। -ऐ० ब्रा०, ६/४

प्राणा वै समिधः, प्राणा ह्येतं समिन्धते। -श० ब्रा०, ९/२/३/४४

समिध्यमानं समिधाः समिन्धते अग्निं सधस्थे सदनेषु सुक्रतुम्। -मैत्रा०, २/७/२३

सम्+✓ञिइन्धी-दीप्तौ।

## समिष्टयजुः

या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते, सर्वा वै तत्राः समिष्टा भवन्ति। तद् यद् तासु सर्वासु समिष्टासु अथैतज्जुहोति। तस्मात्समिष्टर्यजुनाम। -श० ब्रा०, १/९/२/२६

तद् यत् तासु सर्वासु समिष्टास्वथैतानि जुहोति तस्मात्समिष्ट यजूंषि नाम। -श० ब्रा०, ४/४/४/३

सं+इष्ट+✓यज्-देवापूजासङ्गतिकरणदानेषु।

## समुद्रः

अपः समुद्राद् दिवमुद्वहन्ति। -अथर्व०, ४/२७/४

समुद्रं वृत्वाऽतिष्ठंस्ताः प्राच्यो दक्षिणाच्यः प्रतीच्य उदीच्यः समवद्रवन्त। तद्यत्समद्रवन्त तस्मात्समुद्र उच्यते। -गो० ब्रा०, १/१/७

स यो ह वा समुद्रो य एवायं (वायुं) पवते। एष एव स समुद्रः। एतं हि संद्रवन्त सर्वाणि भूतानि अनुसंद्रवन्ति। तस्य द्यावापृथिवी एव रोधसी। अथ यथा नद्यां कंसानि वा प्रहीणानिस्युः सरांसि वा एवमस्यायं पार्थिवः स समुद्रः। -जै० उ० ब्रा०, १/८/१/४-५

समुद्द्रवन्त्यस्मादापः। समभिद्रवन्त्येनमापः। संमोदन्तेऽस्मिन्भूतानि। समुदको भवति। समुनत्तीति वा। -निरु०, २/१०

समुदितारमिति। -निरु०, १०/३२

सम्+✓उन्दी-क्लेदने, सम्+उत्+✓द्रु-गतौ।

## सम्पद्

यो ह वै संपदं वेद सं हास्मै कामाः पद्यन्ते। देवाश्च मानुषाश्च। श्रोत्रं वाव सम्पद्।

-छान्दो० उप०, ५/१/४

यो ह वै सम्पद् वेद सं हास्यै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः। -बृहद० उप०, ६/१/४

सम्+✓पद्-गतौ।

## सम्पा

ते ह स्मैतऽउभये देवमनुष्याः पितरः सम्पिबन्ते। सैषा सम्पा। -श० ब्रा०, ३/६/३/२६

सम्+✓पा-पाने।

## सम्पातः

एतैर्वै संपातैरेत ऋषयः इमान् लोकान् समपतन्।

-गो० ब्रा०, २/६/१

तान्क्षिप्रं समपतद्यत्क्षिप्रं समपतत्तत्संपातानां सम्पातत्वम्। इति।। -ऐ० ब्रा०, २९/२

संपातैः समपतद्यत्संपातैः समपतत्तत्संपाता-नांसपातत्वम्। -ऐ० ब्रा०, २०/२

सम्+✓पत्लृ-गतौ।

## सम्पृक्

सम्पृचौ स्थः सं मा भद्रेण पृङ्क्तम्।

-यजु०, ९/४

सम्+✓पृची-सम्पर्के।

## सम्भरणः

तद्यत्तमाह सम्भरण इति। संवत्सरो हि सर्वाणि भूतानि सम्भृतः। -श० ब्रा०, ८/४/१/१७

सम्+✓भृञ्-भरणे।

## सम्भारः

तमेतावच्छः समभरन् यथ्यसंभाराः।

-तै० ब्रा०, २/२/२/८, ६

यदु सम्भारैः सम्भृतैर्भवति, तदु भवति। तस्मादु समेव भरेत्। -श० ब्रा०, २/१/१/१४

स यद्वा इतश्चेतश्च सम्भरति तत् सम्भराणा सम्भारत्वम्। -श० ब्रा०, २/१/१/१

सम्+✓भृञ्-भरणे।

## सम्भृतः

प्रजापतिः सम्भ्रियमाणः सम्राट् सम्भृतो वैश्वदेवः।

-यजु०, ३९/५

सम्+✓डुभृञ्-धारणपोषणयोः।

## सम्राट्

एष (साम) ह वै वायुर्भूत्वा ऽन्तरिक्ष लोके सम्राजति। तद् यत्सम्राजति तस्मात् सम्राट्, तत्सम्राजस्य सम्राट्त्वम्।

-गो० ब्रा० २/५/१३

तस्य यो रसो व्यक्षरत्। तं पणिभिः संममृजुः। तस्मात्सम्राट्। -श० ब्रा०, १४/१/१/११

सम्राडेको विराजति। -यजु०, १२/११७

सम्राडेको विराजति। -तै० ब्रा०, २/४/१/९

सम्+✓राजृ-दीप्तौ, सम्+✓मृज्-शुद्धौ।

## सरण्यूः

सरण्यूः सरणात्। -निरु०, १२/९

✓सृ-गतौ।

## सररूकं

सररूकं वा स्यात्। सर्तेरभ्यस्तात्।

-निरु०, ६/३

✓सृ-गतौ।

## सरस्वती

अपामोषधीनां रसस्थेत्याह राष्ट्रमेव मधव्यमकः। सारस्वतं ग्रहं गृह्णाति। एषा वा अपां पृष्ठम्। यत्सरस्वती। -तै० ब्रा०, १/७/५/५

वाग्वै सरस्वती। वागु हैवानुममाद प्रहर 'जहि' इति तस्मात्सारस्वत चरु भवति।

-श० ब्रा०, २/५/४/६

सरस्वती। सर इत्युदकनाम। सर्तेः। तद्वती।

-निरु०, ९/२६

✓सृ-गतौ।

## सरित्

सम्यक् स्रवन्ति सरितः। -ऋ०, ४/५८/६

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः -यजु०, १७/९४

समित् स्रवन्ति सरितो न धेनाः।

-तै० सं०, ४/२/९/६

समित् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। -मैत्रा०, २/७/२४४-२४६

सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। -का० सं०, ४०/४७

सरित् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा यश्चिकित्रे। -का० सं०, १६/२०५

सर्वाः स्रवन्तीः सरितः।

-तै० ब्रा०, ३/१२/७/३

✓सृ-गतौ।

## सर्गः

तमृत्विया उप वाचः सचन्ते सर्गो न यो देवयतामसर्जि। -ऋ०, १/१९०/२

पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत।

-ऋ०, ९/६४/७

पवमानस्य ते कवे वाजिन्सर्गा असृक्षत।

-ऋ०, ९/६६/१०

दिवो न सर्गा अससृग्रमह्नां राजा न मित्रं प्र मिनाति धीरः।

-ऋ०, ९/९७/३०

✓सृज-विसर्गे।

## सर्पः

इमे वै लोकाः सर्पाः। ते हानेन सर्वेण सर्पन्ति।

-श० ब्रा०, ७/४/१/२५

✓सृप्लृ-गतौ।

## सर्पिः

ये सर्पिषः संस्रवन्ति क्षीरस्य चोदकस्य च तेभिर्मे सर्वैः संस्रावैर्धनं सं स्रावयामसि।

-अथर्व०, १/१५/४

यन्नवमैत् तन्नवनीतमभवद्यादसर्पत् तत् सर्पिरभवत्। -तै० सं०, २/३/१०/१

यन्नवमैत्तन्नवनीतमभवद्यदसर्पत् तत् सर्पिः। यदध्रियत तद घृतम्।

-मैत्रा०, २/३/१३, २/३/२०

✓सृप्लृ-गतौ।

## सर्वः

सर्वः संसृतम्। -निरु०, २/२४

✓सृ-गतौ।

## सर्वगणं

सर्वगणं सर्वनामानम्। गणो गणनात्।

-निरु०, ६/३६

सर्व+✓गण-संख्याने।

## सर्वजितः

यो वै सर्वं जयति विजयते सः। सर्वजित् सर्वमेव जयति। -जै० ब्रा०, १/९५

सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वञ्जयति।

-ता० ब्रा०, १६/७/२

सर्वजिता सर्वमजयन्। -ता० ब्रा०, २२/८/४

सर्व+✓जि-जये।

## सर्वरूपः

यो विद्युत पुरुषः ससर्वरूपः। सर्वाणि ह्येतस्मिन् रूपाणि। -जै० उ०, १/२७/६

सर्व+✓रुच्-दीप्तौ।

## सर्ववेदसी

यो वै सर्वं विन्दमानः सर्वं ददाति स सर्ववेदसी। सर्वं वा एष विन्दते यत् सर्वान् स्तोमान् सर्वान् ग्रहान् सर्वाणि पृष्ठानि सर्वाणि छन्दांसि विन्दते। -जै० ब्रा०, २/१८०

सर्व+✓विद्-सत्तायां लाभे, ज्ञाने, विचारणे च।

## सर्वव्यापी

अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव सर्वाल्लोकान्व्याप्नोति स्नेहो यथा पललपिण्डमिव शान्तोरूपमोतप्रोतमनुप्राप्तो व्यतिषकश्च तस्मादुच्यते सर्वव्यापी।

-अ० शि० उप०, ४, वटु० उप०, १

वि+✓आप्लृ-व्याप्तौ।

## सर्वस्तोमः

ता एकैन स्तोमेनोपागृह्णात्। ता अत्यरिच्यन्त, ता द्वाभ्यान्ताः सर्वैः। तस्मात् सर्वस्तोमः।

-गो० ब्रा०, २/५/९

सः सर्वस्तोभो भवति। सर्वं हि तत् यत् सर्वस्तोमः। सर्वं एवैतेनाप्येति।

सर्व्वस्तोमेनातिरात्रेण बुभूषन्यजेत सर्व्वस्याप्तयै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति।

-ता० ब्रा०, २०/२/२

सर्व+✓ष्टुञ्-स्तुतौ।

## सललूकं

सललूकं संलुब्धं भवति। पापकमिति नैरुक्ताः। सररुकं वा स्यात्। सर्तेरभ्यस्तात्।

-निरु०, ६/३

✓सृ-गतौ।

## सवः

एष वै सवः। एतद्वै तत्सूयते यमस्मै तमेता देवताः सवमन्युमन्यते। याभिरनुमतः सूयते।

-श० ब्रा०, ९/४/१/१३, ९/४/४/८

✓षुञ्-अभिषवे, ✓षु-प्रसवैश्वर्ये, ✓षू-प्रेरणे।

## सवर्यः

आदित्याश्चाङ्गिरसश्च सुवर्गे लोके ऽस्पर्धन्त। तेऽङ्गिरस् आदित्येभ्यः अमुमादित्यमश्वं श्वेतं भूतं दक्षिणामनयन्। तेऽब्रुवन् यं नोऽनेष्ट। स वर्योऽभूदिति। तस्मादश्वं सवर्येत्याह्वयन्ति।

-तै० ब्रा०, १३/९/२१

स+✓वर्-ईप्सायां, स+✓वृ-वरणे।

## सविता

अद्या नो देव सवितः प्रजावत् सावीः सौभगम्। परादुःष्वप्न्ये सुव। -ऋ०, ५/८२/४

आ सव सवितुर्यथा भगस्येव भुजिं हुवे। -ऋ०, ५/९१/६

ग्रावाणः सविता नु वो देवः सुवतु धर्मणा। यजमानाय सुन्वते॥ -ऋ०, १०/१७६/४

अस्मै वो धाता सविता सुवाति। तत्सविता वोऽमृतत्वमासुवत्।

-ऋ०, १/११०/३, १/१००/३

ते हि देवस्य सवितुः सवीमनिक्रतुं सचन्ते सचितः सचेतसः। -ऋ०, १०/६४/७

देवस्य सवितुःसवे। -ऋ०, ५/८२/६

सत्यसवं सवितारम्। -ऋ०, ५/८२/७

परा दुःष्वप्न्यं सुव। -ऋ०, ५/८२/४

सवितर्दुरितानि परा सुव। -ऋ०, ५/८२/५

प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्नक्तुभिर्जगत्। -ऋ०, १०/१७६/१

प्रासावीद् भद्रम्। -ऋ०, ५/८१/२

सुवाति सविता भगः। -ऋ०, ५/८२/३

प्र च सुवाति सविता। -ऋ०, ५/८२/९

सवितः प्रजावत्सावी सौभगम्।
-ऋ०, ५/८२/४

प्र च सुवाति सविता।
-ऋ० ५/६/८२, का० सं० १०/२२, मै० सं०, ४/१२/१८०

ये ते त्रिरहन्त्सवितः सवासो दिवे दिवे सौभगमासुवन्ति। -ऋ०, ४/५५/६

स नो वसूनि प्रयता हितानि चन्द्राणि देवः सविता सुवाति। -ऋ०, ५/३/४२/३

स हि रत्नानि दाशुषे सुवाति सविता भगः।
-ऋ०, ५/६/८३/३

श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम्। -ऋ०, १/१६४/२६

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय।
-यजु० ९/१, ११/७, का० सं०, १३/७७, १५/३९ काण्व० सं०, १२/७, मै० सं०, १/११/१

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वं सुवसि भागमुत्तमम्। आदिद्दामानं सवितर्व्यूर्णुषेऽनुचीना जीविता मानुषेभ्यः। -यजु०, ३३/५४

सविता भगः॥ -यजु०, ३३/२०

सविता त्वा सवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम्। -यजु०, ९/३९

सवितासि सत्यप्रसवः। -यजु०, १०/२८

सवित्रा प्रसवित्रा। -यजु०, १०/३०

शमिता नो वनस्पतिः सविता प्रसुवन् भगम्।
-यजु०, २१/२१

युक्त्वाय सविता देवान्त्स्वर्य्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान्॥
-यजु०, ११/३

सविता प्रसवानामधिपतिः।
-अथर्व०, ५/२४/१

श्रेष्ठं सवं सविता साविषत्।
-अथर्व०, ७/७३/७

यत्त आत्मनि तन्वां घोरमस्ति यद्वा केशेषु प्रतिचक्षणे वा सर्वं तद् वाचाप हन्मो वयं देवस्त्वा सविता सूदयतु। -अथर्व०, १/१८/३

निररणिं सविता साविषत् पदोनिहस्तयो र्वरुणो मित्रो अर्यमा। निरस्मभ्यमनुमती रराणा प्रेमां देवा असाविषु सौभगाय। -अथर्व० १/१८/२
-अथर्व०, १४/१/३३

यथा प्रसूता सवितुः सवाय।
-सा० मं० सं०, १७४९, सा० उ० ८/३/१४/१

देवस्य सवितुः सवम्।
-सा० पू०, ५/१/५/९, (४३५)

एताभिर्वै सविता सर्वस्य प्रसवमगच्छत्।
-तां० ब्रा०, २४/१५/२

चित्राः येतुर्दाता प्रदाता सविता प्रसविता अभिशास्ता अनुमन्तेति एतेऽनुवाका मुहुर्तानां नामधेयानि। -तै० ब्रा०, ३/१०/१०/३

देव सवितः प्रसुव यज्ञम्।
-छा० ब्रा०, १/१/१

देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानां प्रसविता सवित्रा प्रसूता इदमनुमन्त्रयामह इति वदन्तः।
-जै० उ० ब्रा०, ३/४/४/३

प्र नक्षत्राय देवाय। इन्द्रायेन्दु हवामहे। स नः सविता सुवत्सनिम्। पुष्टिदां वीरवत्तमम् इति॥
-तै० ब्रा०, ३/१/३/३

बृहज्ज्योतिः करिष्यतः। सविता प्रसुवाति तान्।
-काण्व सं०, १२/३

बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान्।
-तै० सं०, ४/१/१/३

यद् सावित्राणि तेन सावित्रात् प्रसवात्रैति।
-मैत्रा०, ३/१/१

यदद्य सूर उदितेऽनागा मित्रोऽअर्यमा। सुवाति युक्त्वाय सविता देवान् स्वर्यतो धिया दिवम्। बृहज्ज्योतिः करिष्यतस्सविता प्रसुवाति तान्।
-का० सं०, १५/३५

युक्त्ववाय सविता देवान्त्स्वर्यतो धिया दिवम्। बृहज्जोतिः करिष्यतः सविता प्रसुवातितान्।
-मै० सं०, २/७/३

राष्ट्राण्यस्मा आधेहि यान्यासन् सवितुस्सवे।
-का० सं०, ७/४५

शमिता नो वनस्पतिः सविता प्रसुवन् भगम्।
-मै० सं०, ३/११/१२२

सवनात्सविता। -मै० उ०, ५/७

सविता त्वा प्रसवानां सुवतामग्निर्गृहपतीनां सोमो वनस्पतीनाम्। -काण्व सं०, ११/९

सविता त्वा प्रसवानां सुवता।
-मैत्रा०, २/७/१५-१६

सविता प्रासुवत प्रजननाय, संवत्सरो वै सविता द्वादश मासाः संवत्सरः।
-मै० सं०, १/१०/२८

सविता वै प्रसवानामीश, सवितृप्रसूततायै।
-शां० ब्रा०, ५/२

सविता वै प्रसविता, कर्मण एव प्रसवाय।
-शां० ब्रा०, ६/१४

सविता वै देवानाम् प्रसविता।
-शा० ब्रा०, १११/२/१७, १/७/१/४

सविता वै देवानां प्रसविता। सवितृप्रसूता एवैतत् संवत्सरं आरभन्ते। -जै० ब्रा०, २/३७१

सविता सत्यप्रसवः प्रसविताऽऽ सविता।
-आ० श्रौ० सू० उ०, ४/६/१०

सवितृप्रसूततायै। -शां० ब्रा०, ८/१

सवितृप्रसूता बृहस्पतये स्तुतः।
-ता० ब्रा०, १/९/१-१२, १/१०/१-१२

सवित्रा प्रसवित्रा सरस्वत्या वाचा।
-काण्व सं०, ११/४२

सवित्रे प्रसवित्र एकादशपालं मध्यंदिने। सवित्रे प्रसवित्रे द्वादशकपालमपराह्णे।
-मा० श्रौ० सू०, ९/२/२/४

'सावीर्हि देव प्रथमाय पित्रे' सावित्रीं प्रथमामन्वाह सवितृप्रसूततायै; सवितृ प्रसूतस्य ह वै न काचन रिष्टिभवति। -शां० ब्रा०, ९/५

सुवाति सविता भगः।
-काण्व सं०, ३२/२०, सा० उ०, ६/१/२/१, मं० सं० (१३५१)

हस्तः प्रयच्छत्वमृतं वसीयः। दक्षिणेन प्रति गृभ्णीम एनत्। दातारमद्य सविता विदेय। यो नो हस्ताय प्रसुवाति यज्ञम्। इति।।
-तै० ब्रा०, ३/१/१/९

सर्वस्य प्रसवितारम्। -निरु०, ७/३१

सविता सर्वस्य प्रसविता। -निरु०, १०/३१

✓षु-प्रेरणे, ✓षूङ्-प्राणिप्रसवे, ✓षूञ्- अभिषवे, ✓षू-प्रसवैश्वयर्योः।

## सवीमन्

प्र बाहू अस्राक् सविता सवीमनि निवेशयन् प्रसुवन्नक्तुभिर्जगत्। -ऋ०, ४/५३/३

सवीमनि प्रसवे। -निरु०, ६/७

✓षूञ्-प्रसवे।

## सस्निं

सस्निं संस्नातं मेघम्। -निरु०, ५/१

स (सम्) ✓ष्णा-शौचे।

## सहः

अपीच्येन सहसा सहन्ते। -ऋ०, ७/६०/१०

त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै। -ऋ०, ६/१/१

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम्। ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः। -ऋ०, ६/६६/९

य सुहार्त तेन नः सह। -अथर्व०, २/७/५

सहो विश्वस्मै सहसे सहध्यै।
-तै० ब्रा०, ३/६/१०/१

सहमस्मि सहमानाथ त्वमसि सासहि। उभे सहस्वती भूत्वी सपत्नीं मे सहावहै।।
-ऋ०, १०/१४६/५

✓षह्-मर्षणे।

## सहस्रं

यत् सहेत्य् अब्रवीत् तत् सहस्रस्य सहस्रत्वम्।
-जै० ब्रा०, २/२५४

सहस्रं सहस्वत्। -निरु०, ३/१०

✓षह्-मर्षणे।

## सहस्रम्भरः

सहस्रम्भर शुचिजिह्वो अग्निरित्येषा ह वा अस्य सहस्रम्भरता यदेनमेकं सन्तं बहुधा विहरन्ति। इति। -ऐ० ब्रा०, ५/२

सहस्र+✓भृञ्-भरणे।

## सहस्रसनिः

परमा वा एषा सनीनां यत् सहस्रसनिः। -श० ब्रा०, २/३/४/१५

सहस्र+✓षण्-सम्भवतौ।

## ससृवांसं

सरिष्यन्तमिति वा अग्र आह सरिष्यन् इव हि तर्हि भवति। अथात्र संसृवांसम् इति सृसवेव ह्यत्र भवति। तस्मादाह ससृवांसमिति। -श० ब्रा०, १/८/२/६

✓सृ-गतौ।

## साकमेधः

ता अस्य प्रजा वृत्रात् पाप्मनो मुमुचानाः सर्वाः साकं समैधयन्त। यत् साकं समैधयन्त तत् साकमेधनां साकमेध त्वम्। साकं ह वै प्रजया पशुभिः एधते य एवं वेद। -जै० ब्रा०, २/२३२

यत्सोमश्च राजा छन्दांसि च समैधन्त। तत्साकमेधानां साकमेधत्वम् इति। -तै० ब्रा०, १/४/१०/६७

साकम्+✓एधृ-वृद्धौ।

## साकमश्वः

तानग्निरश्वो भूत्वाऽभ्यद्रवद्यदग्निरश्वो भूत्वाऽभ्यत्यद्रवत्तत्साकमश्वं सामाभवत्तत्साकमश्वस्यसाकमश्वत्वं। इति। -ऐ० ब्रा०, १५/५

तेऽग्निमुखं कृत्वा साकमश्वेनाभ्यक्रामन् यत्साकमश्वेजाभ्यक्रामं तस्मात् साकमश्वम्। -ता० ब्रा०, ८/८/४

तेऽब्रुवन् स्वर्गं लोकं गत्वा साकं वा अश्वेन स्वर्गं लोकं अगन्मेति। तद् एव साकमश्वस्य साकमश्वत्वम्। तद् एतत् स्वर्ग्यं साक। अश्नुते स्वर्गं लोकं य एवं वेद। -जै० ब्रा०, १/१८२

सोऽब्रवीदिमे वा असुरा उक्थेषु श्रितास्तान्वो न कश्चन पश्यतीति। तानग्निरश्वो भूत्त्वाऽभ्यत्यद्रवद्यदग्निरश्वोभूत्वाऽभ्यत्यद्रवत्तत्साकमश्वं सामाभवत्तत्साकमश्वस्य साकमश्वत्वम् इति। -ऐ० ब्रा०, १५/५

साकम्+✓अशूङ्-व्याप्तौ, ✓अश्-भोजने।

## सांग्रहणी

सांग्रहण्येष्ट्या यजते। इमां जनतां संगृह्णानीति। -तै० ब्रा०, ३/८/१/१

सांग्रहण्येष्ट्रया यजते। इयं जनतां संगृह्णानीति। -जै० उ० ब्रा० ३/८/१/१

सम्+✓गृह-उपादाने।

## सांवर्त

यद् उ संवर्त आङ्गिरसोऽपश्यत् तस्मात् सावंर्तं इत्याख्यायते। एनान् सार्धं संवृत्याहन्। तद् व् एव सांवर्तस्य सांवर्तत्वम्। -जै० ब्रा०, ३/२३३

यत् संवर्तमपावपन्तस्मात् सांवर्त्तम्। -तां० ब्रा०, १४/१२/७

सं+✓वृतु-वर्तने।

## साधुः

अयं वै साधुः। योऽयं पवते। एष हीमाँल्लोकान्तिसद्धोऽनुपवते। -श० ब्रा०, १४/१/२/२३

एवंविदं पुण्याय साधवे। तां एनं पुण्यं एव साधु कारयन्ति। -जै० उ० ब्रा०, १/३/४/३

साधुः साधयिता। -निरु०, ६/३५

✓ साध-संसिद्धौ।

## साध्यादेवाः

प्राणा वै साध्यादेवाः। त एतमग्र एवमसाधयन् एतदेव बभूषन्त।

-श० ब्रा०, १०/२/२/२

साध्या+✓दिवु-क्रीडादिषु।

## साध्रं

यद् व, एवैषां एतेन साम्ना कृतंकृतं असिध्यत् तस्मात् साध्रं इत्याख्यायते। यद् उ सध्रिर् वैरुपोऽपश्यत् तस्मात् साध्रं इत्याख्यायते।

-जै० ब्रा० ३/२७२

साध्रम् भवति सिद्धयै।

-ता० ब्रा०, १५/५/२८

✓साध-संसिद्धौ।

## सानुः

सानु सामुच्छ्रितं भवति। समुन्नुन्नमिति वा।

-निरु०, २/२३

✓षण-सम्भक्तौ, सम्+उत्+✓श्रिञ्-सेवायां, सम्+उत्-✓णुद्-प्रेरणे।

## सान्तपना

मरुतः सान्तपनाः सन्तपन्ति। तस्मान्मरुद्भ्यः सान्तपनेभ्यः। -श० ब्रा०, २/५/३/३

सम्+✓तप-सन्तापे।

## सान्तपनीया

उरः सान्तपनीया। उरसा हि समिव तप्यते।

-श० ब्रा०, ११/५/२/४

सम्+✓तप-सन्तापे।

## सान्नाय्यं

तपोषधिभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्म च ब्राह्मणाः सन्नयन्ते तस्मासान्नायस्य सान्नायत्वम्।

-ष० ब्रा०, ५/६/३

सम्+✓णीञ्-प्रापणे।

## साम

अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साथयन्नीलं परः कृष्णं तदमस्तत्साम।

-छा० उप०, १/७/४

अन्तरिक्षमेव सा, वायुरमस्तत्साम।

-छा० उप०, १/६/२

इयमेवर्गग्निः सामः तदेतदेतस्यामृच्यध्यूढं साम, तस्मादृच्यध्यूढं साम गीयते। इयमेव साग्निरमस्तत्साम। -छा० उप०, १/६/१

ऋक् च वा इदमग्रे साम चाऽऽस्तां सैव नाम ऋगासीदमो नाम साम .... यद्वै तत्सा चामश्च समभवतां तत्सामाभवत्तत्साम्नः सामत्वम्। इति॥

-गो० ब्रा०, २/३/२०, ऐ० ब्रा०, १२/१२

एतस्मिन् हीदं सर्वं समानम्।

-श० ब्रा०, ०/५/२/२०

एतं ह तं हीदं सर्वं समेतं। तस्मात् एष एव साम। -जै० ब्रा०, ३/३७९

चक्षुरेव सात्माऽमस्तत्साम।

-छा० उप०, १/७/२

समेत्य साम प्राजनयताम्। तद् यत् समेत्य साम प्राजनयतां तत्साम्नः सामत्वम्।

-जै० उ० ब्रा०, १/७/२

तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रेष्ठ्याय सन्नमन्ते। -को० ब्रा० उप०, २/६

यद् यदेतत् सर्वं वाचमेवाभिसमयति तस्माद् वागेवसाम। स ह वै सामवित्। स साम वेद। य एवं वेद। तस्या एतस्यै वाचः प्राणा एव स्युः। एषु हीदं सर्वमसूत। एषु हीदं सर्वमसूतेति॥

-जै० उ० ब्रा०, १/१३/१/६-७

द्यौरेव सादित्योऽमस्तत्साम।

-छा० उप०, १/६/३

चक्षत्राण्येव सा, चन्द्रमा अयस्तत्साम।

-छा० उप०, १/६/४

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साथयन्नीलं परः कृष्णं तदमस्तत्साम।

-छा० उप०, १/६/६

यद्व तत्सा चामश्च समभवतां (समवदतां) तत्सामाभवत्, तत्साम्नः सामत्वम्॥ इति।
-गो० ब्रा०, २/३/२०, १२/१२

वा एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा अमावस्यां रात्रीमादित्यं प्रविशत्यादित्योऽग्निम्। तद्यत् संयन्ति तस्मात् साम।
-जै० उप० ब्रा०, १/११/१६-७

वागेव सा प्राणोऽमस्तत्साम।
-छा० उप०, १/७/१

वाग्वै सा। अमैषः। सा चामश्चेति तत्समाम्न सामत्वम्। यत् उ एव समः प्लुषिणा। समो मशकेन। समो नागेन। सम एभिस्त्रिभिलोकैः। समोऽनेन सर्वेण। तस्मात् उ एव साम।
-श० ब्रा०, १४ १/१/२४

श्रोत्रमेव सा मनोऽमस्तत्साम।
-छा० उप०, १/७/३

स उ एव साम वाग्वै सामेषसा चामश्चेति, तत्साम्नः सामत्वम्। यद्वैव समः प्लुषिणा, समोमशकेन, समो नागेन सम एमिस्त्रिभिर्लोकेः सम़ोऽनेन सर्वेण तस्माद् वेवं सामाश्नुते साम्नः साजुज्यं सलोकतां य एवमेतत्साम वेद।
-बृहद० उप०, १/३/२२

स एष सर्वैर्लोकैः समः। तद् यदेष सर्वैर्लोकैः समः तस्मादेष एव साम। स ह वै सामवित्। स साम वेद य एवं वेद।
-जै० उ० ब्रा०, १/३/२/५

समतां चापद्यते। तस्मादेतत् सामेत्याह। समा उ ह वा अस्मिन् छन्दांसि साम्यादिति तत्साम्नः सामत्वम्॥
-सा० वि० ब्रा०, १/१/१३, १/१/१५

समस्तस्य खलु साम्न उपासनं साधु। यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति।
-छा० उप०, २/१/१

समानं साम भवति। -तां० ब्रा०, ४/३/७-८

स हैवं षोडशधात्मानं विकृत्यं सार्धं समैत्। तद्यत् सार्धं समैत् तत्साम्नः सामत्वम्॥
-जै० उ० ब्रा०, १/१५/३/७

साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि। सम्यञ्चि हास्मै सर्वाणि भूतानि श्रेष्ठायाम कल्पसे।
-बृहद् उप०, ५/१३/३

साम सम्मितमृचा। अस्यतेर्वा। ऋचा समं मेन इति नैदानाः। -निरु०, ७/१२

साम्ना समानयन्। तत्साम्नः सामत्वम्।
-तै० ब्रा०, २/२/९/७

साम्ना समानयन् तत्साम्नः सामत्वम्।
-तै० ब्रा०, २/२/८/७

सेयमृक् इदं सामाभ्यप्लवत। तामपृच्छत्। का त्वमसीति। साहमस्मीत्यब्रवीत्। अथ वा अहममोऽस्मीति। तद् यत् सा चामश्च तत् साम्नः सामत्वम्॥
-जै० उ० ब्रा०, १/१८/१/२

हन्त सार्धं समेत्य यच्छ्रेष्ठं तत्सामेति। ता एतस्मिन् प्राण ओकारे वाच्यकारे समायन्। तद्यत् समायन् तत् साम्नः सामत्वम्।
-जै० उ० ब्रा०, ४/८/३/२

साम सम्मितमृचा। अस्यतेर्वा। ऋचा समं मेन इति नैदानाः। -निरु०, ७/१२

सम्+✓अञ्चु-गतिपूजनयोः, ✓षू-प्रसवैश्वर्ययोः, सा+✓अम्-गत्यादिषु, ✓साम-सान्त्वप्रयोगे।

## साहस्री

तद् यत्रैत्रिरात्रे सहस्रं ददातितदेता साहस्री क्रियते।
-श० ब्रा०, ४/५/८/१

✓षह-मर्षणे।

## साह्नः

तं सहैवाह्ना संस्थापयेयुः साह्नो वै नाम।
-ऐ० ब्रा०, १४/६

यो वा एष तपत्येषोऽग्निष्टोम एष साह्नः तं सहैवाह्ना संस्थापयेयुः।
-ऐ० ब्रा०, १४/६, गो० ब्रा०, २/४/१०

✓षह्-मर्षणे, स+अह्न।

## सामराजम्

साम राजं भवति साम्राज्यमाधिपत्यं गच्छति सामराज्ञा तुष्टुवानः। -ता० ब्रा०, १५/३/४५

साम+✓राजृ-दीप्तौ।

## सामिः

सामि स्यतेः। -निरु०, ६/२३

✓सो-वधकरणे ✓षोऽन्तः कर्मणि।

## सामिधेनी

एता हि वा इदं समिन्धते। एताभिरिदं सर्वं समिद्धम्। तस्मात्सामिधेन्यो नाम। -श० ब्रा०, ११/२/७/६

समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम। -श० ब्रा०, १/३/५/१

समेवैनं तेनेन्धे, वीर्यमेवास्मिन् दधाति। -श० ब्रा०, १/४/१/२०

सम्+✓जिइन्धी-दीप्तौ।

## सायंधृतिः

ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। यत्सायंधृतीर्जुहोति अश्वस्य यत्यै धृत्यै। -तै० ब्रा०, ३/९/१३/३

सायम्+✓धृ-धारणे।

## सावित्रः

तद् यदेतया सवितारं प्रीणातितस्मात्सावित्राणि। -श० ब्रा०, ६/३/१/६

तद्यदेतया सवितारं रेतोभूतं सिञ्चंति। तस्मात्सावित्राणि। -श० ब्रा०, ६/३/१/७

तत्सर्वं सीव्यति। तस्मात्सावित्रः। -तै० ब्रा०, ३/१०/११/७

स यद् एते देवेते अन्तरेण। तत्सर्वं सीव्यति तस्मात्सावित्रः। -तै० ब्रा०, ३/१०/११/४९

सवितृप्रसूत एवैतद्भिषज्यति। तस्मात्सावित्रो भवति। -श० ब्रा०, ५/५/४/३०

✓षुञ्-अभिषवे, प्रसवे च, ✓षिवु-तन्तुसन्ताने

## सावित्री

अथ सावित्री, सवितृप्रसूतः सूयाता इति। -जै० ब्रा०, २/१९८

दुष्करं वा एष करोति यः सर्वं ददाति यत् सावित्री भवति सवितृप्रसूतं मे कर्मासदिति सवितृप्रसूतमेवास्य कर्म करोति। -ता० ब्रा०, १६/५/७

✓षूञ्-प्रसवे।

## सिंहः

प्रत्यक्ते सिंहं सह्वं प्रत्यासेवेते। -निरु०, ८/१५

सिंहः सह्नात्। हिंसेर्वा स्याद् विपरीतस्य। संपूर्वस्य वा हन्तेः। संहाय हन्तीति वा। -निरु०, ३/१८

✓षह-मर्षणे, ✓हन्-हिंसागत्योः, ✓षिच्-क्षरणे।

## सिनं

सिनमन्नं भवति। सिनाति भूतानि। -निरु०, ५/५

✓षिञ्-बन्धने।

## सिनीवाली

सिनीवाली सिनमन्नं भवति। सिनाति भूतानि। वालं पर्व वृणोतेः। तस्मिन्नन्नवती। वालिनी वा। वालेनेवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो भवतीति वा। -निरु०, ११/३१

✓षिञ्-बन्धने+✓वृञ्-वरणे।

## सिन्धुः

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। -यजु०, १७/९५

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः। -अथर्व०, १/१५/१

अवासृजत् सर्तवे सप्तसिन्धून् इति। सप्त ह्येते सिन्धवः। तैरिदं सर्वं सितम्। तद्यदेनैरिदं सर्वं सितं तस्मात् सिन्धवः। -जै० उ० ब्रा०, १/९/२/८

यत्सीमनु प्र मुचो बद्धधाना दीर्घामनु प्रसितिं स्यन्दयध्यै।

सिन्धुः स्रवणात्। -निरु०, ५/२७

सिन्धुः स्यन्दनात्। -निरु०, ९/२६

सिन्धोः स्यन्दमानानां नदीं। -निरु०, १४/३३

✓स्यन्दू-प्रस्रवणे, ✓षिञ्-बन्धने।

## सिमा

अश्वस्य वाजिनस्त्वचि सिमाः शम्यन्तु शम्यन्तीः॥ -यजु०, २३/३७

ता ऊध्वाः सीम्नोऽभ्यसृजत; यदूर्ध्वाः सीम्नोऽभ्यसृजत, तत्सिमा अभवंस्तत्सिमानां सिमात्वम्। इति। -ऐ० ब्रा०, २२/२

यत् सीमानमभिनत्तस्मात् सिमाः, अथो हैनाःसीमतः एव ससृजे। सिम इति वै श्रैष्ठमाचक्षते। -जै० ब्रा०, ३/१११

स ( प्रजापतिः ) तपोऽतप्यत स तपस्तप्त्वात्मन् सिंसिमायद् अवापश्यत्, तत् सिमानां सिमात्वम्। -जै० ब्रा०, ३/१०४

सीमानमभिनत् तत् सिमा। -ता० ब्रा०, १३/४/१

✓षिञ्-बन्धने।

## सिलिकमध्यमाः

सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा। -निरु०, ४/१३,

✓सृ-गतौ+मध्यमाः।

## सिषासवः

रेवतीरनाधृषः सिषासवः सिषासथ। -अथर्व०, ६/२१/३

✓षण्-संभक्तौ।

## सीदन्तीयं

इमान् लोकान् सीदति सीदन्तीयेन तुष्टुवानः। -ता० ब्रा०, ११/१०/१२

तासु सीदन्तीयं। देवा अकामयन्त स्वर्गे लोके सीदेमेति। त एतत् सामापश्यन्। तेनास्तुवत। ततो वै ते स्वर्गे लोके ऽसीदन्। स्वर्गे लोके सीदामेति। सत्रं आसते। स्वर्गे एव लोके सीदन्ति। यद् उ देवा एतेन नाम्ना स्वर्गे लोकेऽसीदन् तस्मात् सीदन्तीयं इत्याख्यायते। -जै० ब्रा०, ३/३०

✓षद्लृ-विशरणगत्यवसादनेषु।

## सीमन्

सीमा मर्यादा। विषीव्यति देशाविति। -निरु०, १/७

✓षिञ्-बन्धने।

## सीमिका

सीमिका स्यमनात्। -निरु०, ३/२०

✓स्यमु-गतौ शब्दे च।

## सीरः

त्वं धुनिरिन्द्र धुनिमतीर्ऋणोरपः सीरा न स्रवन्तीः। -ऋ०, १/१७४/९

अथ यः सम्वत्सरस्य प्रजितस्य रस आसीत्तत्सीरम्। -श० ब्रा०, २/६/३/२

सेरं हैतद्यत् सीरम्। इरामेवास्मिन्नेतद् दधाति। -श० ब्रा०, ७/२/२/२

सीरः आदित्यः सरणात्। -निरु०, ९/४०

✓षिञ्-बन्धने।

## सुकृतं

सुकृता तच्छमितारः कृण्वन्तु। -ऋ०, १/१६२/१०

ततो वै सदजायत तदास्मानं स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। -तैत्ति० उप० ब्रह्म०, २/७/१

सुकृतं सूमयं सुसुखं धनुः। -निरु०, ६/३३

सु+✓डुकृञ्-करणे।

## सुक्षितिः

अथो अग्निर्वै सुक्षितिः। अग्निर्ह्येवास्मिंलोके सर्वाणि भूतानि क्षियति।

-श० ब्रा०, १४/१/२/२४

अयं वै लोकः सुक्षितिः। अस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति।

-श० ब्रा०, १४/१/२/२४

सु+✓क्षि-निवासे।

## सुक्ष्मा

सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च।

-यजु०, १/२७

सु+✓क्षमूष्-सहने।

## सुखं

सुखं कस्मात्? सुहितं खेभ्यः।

-निरु०, ३/१३

सुखमिति कल्याण नाम। कल्याणं पुण्यं सुहितं भवति। -निरु०, ९/२

सु+ख-इन्द्रियार्थे।

## सुगन्धिं

सुगन्धिं सुष्ठुगन्धिम्। -निरु०, १४/३३

## सुजातं

अनु जायन्तां बहवः सुजातम्।

-अथर्व०, २/१३/५

सु+✓जनी-प्रादुर्भावे।

## सुज्ञानः

सुज्ञानोऽसीति ह स्माहुः तद् एव सुज्ञानस्य सुज्ञानत्वम्।

तत् संज्ञानं वा एतत् साम। संज्ञानं एवास्मै तेन भवति, येन कामयतेऽनेन संज्ञानीयेति, य एवं वेदा। -जै० ब्रा० ३/३१

सु✓ज्ञा-अवबोधने।

## सुदत्रः

सुदत्रः कल्याणदानः। -निरू० ६/१४

सु+✓दा-दाने।

## सुदासः

सुदासे अह वा उ लोकं दाता वसु मुहुरा दाशुषे भूत्। -ऋ० ७/२०/२

सु+✓दाशृ-दाने।

## सुदीतिः

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि। -ऋ० ७/१/२१

सुदीतिभिः सु दीदिहि। ऋ० ६/४८/३

सु+✓दीङ्-क्षये।

## सुदुघा

सुदुघामिव गोदुहे। ऋ० १/४/१

सु-✓दुह-प्रपूरणे।

## सुधा

सुधायां ह वै वाजी सुहितो दधाति।

-ऐ० ब्रा० १४/१

सु+✓डुधाञ्-धारणपोषणयोः।

## सुपर्णः

सुपतना आदित्य रश्मयः। -निरु० ४/३

सुपर्णाः सुपतना आदित्य रश्मयः।

सुपर्णाः सुपतनानिन्द्रियाणि। -निरु० ३/१२

सुपर्ण्यः सुपतनाः। -निरु० ७/३१

सु+✓पृ-पालनपूरणयोः।

## सुपारः

सुपारः सुन्वतः सखा। -ऋ० १/५/१०

## सुपुना

समिद्धो अग्निः सुपुना पुनाति।

-अथर्व० १२/२/११

सु+✓पूञ्-पवने।

## सुपोषः

सुपोषः पौषैः। -यजु० ३/३७

सु+✓पुष-पुष्टौ।

## सुप्रजाः

सुप्रजाः प्रजाभिः।

-यजु० ३/३७, ७/२९, ८/५३

सु+प्र+✓जनी-प्रादुर्भावे।

## सुमतिं

सुमतिं कल्याणीं मतिम्। -निरु० ११/११

सु+✓मन्-ज्ञाने।

## सुमायाः

सुमायाः कल्याणकर्माणो वा। कल्याणप्रज्ञा वा।

-निरु० ११/१४

सु+✓माङ्-माने शब्दे च।

## सुमिती

सुमिती मीयमानः। -तै० ब्रा० ३/६/१/१

सु+✓मा-माने।

## सुमेकः

सुमेकः संवत्सरः। स्वेको ह वै नामैतत्यत्सुमेकः इति। -श० ब्रा० १/७/२/२६

सु+✓डुमिञ्-प्रक्षेपणे।

## सुरा

सुन्वन्नश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सुरा सोमान्। -ऋ०, २१/५९

सुरा सुनोतेः। -निरु०, १/११

✓षुञ्-अभिषवे।

## सुरुक्म

सुरुक्म सुरोचने -निरु० ८/११

सु+✓रुच्-दीप्तावभिप्रीतौ च।

## सुरुचः

सुरुच आदित्यरश्मयः सुरोचनात्।

-निरु० १/७

सु+✓रुच्-दीप्तावभिप्रीतौ च।

## सुरूपं

तेऽब्रुवन् सुरुपा वा अभूमेति तद् एव सुरूपस्य सुरुपत्वम्। तैः एषां रूपाण्यं अदधात्। तत् सुरूपाणां सुरूपत्वम्। यद् उ सुरूप आङ्गिरसोऽपश्यत् तस्मात् सुरूपं इत्याख्यायते।

-जै० ब्रा० ३/२२३

सु+✓रूप्-विमोचने।

## सुवर्गः

को ह वै प्रजापतिः। अथ हैवंविदेव सुवर्गः। स हि सुवर्गच्छति। -जै०उ०ब्रा०, ३/३/४/४

सुवः+✓गम्लृ-गतौ।

## सुवर्ग्यं

तस्या उ हैतेन प्रब्रवीत। कोऽहमस्मि। सुवस्त्वम्। स त्वां सुवर्ग्यं सुवर्गामिति।

जै० उ० ब्रा० ३/३/४/३

सुवः+✓गम्लृ-गतौ।

## सुवितः

सुविते सु इते सूते सुमते। प्रजायामिति वा।

-निरु० ४/१७

सुविता सु प्रसूतानि वः कर्माणि।

-निरु० ६/१८

✓षूञ्-अभिषवे, ✓षु-प्रसवैश्वर्ययोः।

## सुविदत्रः

सुविदत्रः कल्याणविद्यः -निरु० ६/१४

सुविदत्रं धनं भवति। विन्दतेवैकोपसर्गात्। ददातेर्वा स्याद् ह्युपसर्गात्। -निरु० ७/९

सु+✓विद्-सत्तायां लाभे च, सु+✓दा-दाने।

## सुवृक्तिः

सुप्रवृक्ताभिः [ शोभनाभिः ] स्तुतिभिः।
-निरु० २/२४

सु+✓वृजी-वर्जने।

## सुवेदं

तद्यदब्रवीत् महद्वै यक्षं सुवेदमविदामह इति, तस्मात् सुवेदोऽभवतं वा एतं सुवेदं सन्तं स्वेद इत्याचक्षते। परोक्षेण परोक्षप्रियाइव हि देवा भवन्ति प्रत्यक्षद्विषः। -गो० ब्रा० १/१/१

सु+✓विद्-ज्ञाने, लाभे।

## सुवेनी

वाज्यसि वाजिनेना सुवेनीः सुवितः स्तोमं सुवितो दिव गाः। सुवितो धर्म प्रथमानुसत्या सुवितो देवान्त्सुवितोऽ नु पत्म। -ऋ० १/५६/२

सु+✓वेनृ-गतिज्ञानचिन्तानिशामनवादिग्रहणेषु।

## सुशेवः

सूनुः शवसा पृथुप्रगामा सुशेवः।
-ऋ० १/२७/२

सु+✓शीङ्-शये।

## सुश्रवा

देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। सुश्रवा वै नाम। -तै० ब्रा० १/२/१/६

सु+✓श्रु-श्रवणे।

## सुषोमा

सुषोमा सिन्धुः। यदेनामभिप्रसुवन्ति नद्यः।
-निरु०, ९/२६

सु+✓षूञ्-अभिषवे।

## सुष्टुतं

यदर्वाक् स्तुवन्ति तदस्तुतं यत्संप्रति स्तुवन्ति तत् स्तुतं यदतिष्टुवन्ति तत्सुष्टुतम्।।
-ता० ब्रा०, ९/३/७

सु+✓ष्टुञ्-स्तुतौ।

## सुष्ठुवाहः

भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः। -ऋ०, १०/१०८/११

सुष्ठु ✓वह-प्रापणे, सु+✓ष्ठा-गतिनिवृत्तौ+✓वह-प्रापणे।

## सुष्वयन्ती

सेष्मीयमाणे इति वा। सुष्वापयन्त्याविति वा। सीदतामिति वा। न्यासीदतामिति वा।
-निरु०, ८/११

सु+✓अम्-गतौ, ✓षूञ्-अभिषवे।

## सुहवां

अहं सुहवां सुष्टुती हुवे। -ऋ०, २/३२/४

सुहवानां सुष्टुत्याह्वये। -निरु०, ११/३२

सु+✓हु-दानादानयोः।

## सुहितं

सुहितं गम्यतीति वा। हसैता वा पाता वा पालयिता वा। -निरु०, ९/२

सु+✓धृ-धारणे।

## सूक्तं

तान् होता सूक्तैः सूते। तत् सूक्तानां सूक्तत्वम्।
-जै० ब्रा०, २/२४

सूक्तं बतावोचतेति तत्सूक्तमभवत्तस्मात्सूक्तं तस्मात्सूक्तमित्याचक्षत एतमेव सन्तम्।
-ऐ० आ०, २/२/२

सु+✓वच्-परिभाषणे।

## सूची

सीव्यत्वपः सूच्याच्छिद्यमानया।
-ऋ०, २/३२/४

सूची सीव्यतेः। -निरु०, ११/३१

✓षिवु-तन्तुसन्ताने।

## सूतः

एते वै देवानां सूता एते सवपतय एते सवस्येशते त एनं सुवते। -मै० सं०, ४/३/९

✓षूङ्-प्राणिप्रसवे।

## सूत्रं

सूचनात्सूत्रं। -आ० उप०, १/३

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम्। -ना० प० उप०, २/७७

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम्। -ना० प० उप०, ३/७८

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम्। -ब्र० उप०, ७

सूचनात्सूत्रमित्युक्तं सूत्रं नाम परं पदम्। -प० ब्र० उप०, २

✓सूत्र-वेष्टनेविमोचने च।

## सूनृता

सुम्नावरी सूनृता ईरयन्ती। -ऋ०, १/११३/१२

सु+✓ऊन-परिहाणे+ऋत्, सून्+✓ऋ-गति-प्रापणयोः।

## सूरिः

सुमहतो बलस्य ईरयिता। -निरु०, १२/३

सु+✓ईर्-गतौ कम्पने च।

## सूर्यः

स्वरन्ति ता उपरिताति सूर्यमा निम्रुच उषस्तक्रवीरिव। -ऋ०, १/१५१/५

तं (इन्द्रं) देवा अब्रुवन्। सुवीर्यो मर्य्या यथा गोपायत् इति। तत्सूर्यस्य सूर्यत्वम्। -तै० ब्रा०, २/२/१०/४

तं सर्वाणि भूतानि सोऽर्यः सोर्य इत्यायन्। तत्सोर्यस्य सोर्यत्वम्। सोऽर्यो ह वै नामैष, तं सूर्य इति परोक्षमाचक्षते। -जै० ब्रा०, ३/३५७

सूयमानत्वात् सूर्यः। -मै० उप०, ५/७

सूर्यः सर्तेर्वा। सुवतेर्वा। स्वीर्यतेर्वा। -निरु०, १२/१४

सूसर्तिभ्यां, सरतेरुत्वं, सुवतेर्वा रुडागमः सरणाद्वा सुवतिकर्मणीति वा। -पा० म० भा०, ३/१/११४

✓स्वृ-शब्दोपतापयोः, ✓षू-प्रेरणे, सु+✓ईर्-गतौ कम्पने च।

## सृक्वाणं

सृक्वाणं सरणम्। -निरु ११/४२

✓सृ-गतौ, ✓सृज्-विसर्गे।

## सृणिः

सृणिरङ्कुशो भवति सरणात्। -ऋ०, १/१५१/५

✓सृ-गतौ।

## सृप्रः

सृप्रः सर्पणात्।। इदमपीतरत् सृप्रमेतस्मादेव। सर्पिर्वा। तैलं वा। -निरु०, ६/१७

✓सृप्लृ-गतौ।

## सृष्टिः

देवा अधि सृष्टीः सृजन्ते। -अथर्व०, १३/१/२५

यदसृजत तस्मात्सृष्टयः। -श० ब्रा०, ८/४/३/२०

सोऽवेदहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति। ततः सृष्टिरभवत्। -बृहद्० उप०, १/४/५

✓सृज्-विसर्गे।

## सेना

सेना सेश्वरा, समानगतिर्वा। -निरु०, २/११

स+✓इण्-गतौ।

## सैध्रकं

सैध्रकं मुसलं भवति। कर्म कर्मैवास्मै साधयति। -तै० ब्रा०, ३/८/४/११

✓ साध-संसिद्धौ।

## सैन्धुक्षितं

यद् उ सिन्धुक्षिद् भारतो राजापश्यत् तस्मात् सैन्धुक्षितं इत्याख्यायते। -जै० ब्रा०, ३/८२

सिन्धुक्षिद्वै राजन्यर्षिर्ज्योगपरुऽवश्चरन् स एतत सैन्धुक्षितमपश्यत् सोऽवागच्छत् प्रत्यतिष्ठदवगच्छति प्रतितिष्ठति सैन्धुक्षितेन तुष्टुवानः। -ता० ब्रा०, १२/१२/६

सैन्धु (सिन्धु)+✓क्षि-निवासगत्योः।

## सोता

सोता सुनोतु। -ऋ०, ८/३३/१२

✓षुञ्-अभिषवे।

## सोमः

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांसि। -ऋ०, ३/३०/१

दक्षायविश्वेचदेवाः। -ऋ०, ९/१०९/१

अद्रिभिः सुतं सोमं पवित्र आ सृज। -ऋ०, ९/५१/१

अनु हि त्वासुतंसोममदामसिमहेसमर्यराज्ये।। -ऋ०, ९/११०/२

अयं सोम इन्द्र तुभ्यं सुन्व आ तु प्रयाहि। -ऋ०, ७/२९/१

अयं सोमइन्द्रतुभ्यं सुन्वेतुभ्यं पवतेत्वमस्यपाहि। -ऋ०, ९/८८/१

आ सुवानः सोमकलशेषुसीदसि। -ऋ०, ९/८७/१

आ सोम सुवानो अद्रिभिस्रिरो वाराण्यव्यया। -ऋ०, ९/१०७/१०

इन्द्रायसुनुथ सोममद्रयः वामं वामं वो दिव्याय धाम्ने वसुवसुवः पार्थिवाय सुन्वते। -ऋ०, १०/७७/८

इन्द्रायसोमंसुषुतंभरन्तीः। -ऋ०, १०/३०/१३

इम इन्द्राय सुन्विरे सोमासो दध्याशिरः। -ऋ०, ७/३२/४

उक्थे उक्थेसोम इन्द्रं ममाद नीथे-नीथे मघवानं सुतासः। -ऋ०, ७/२६/२

एते सोमास इन्दवः प्रयस्वन्तश्चमू सुताः। -ऋ०, ९/४६/३

त उ सुतस्य सोम्यस्यान्धसोशोः पीयूषं प्रथमस्यभेजिरे। -ऋ०, १०/९४/८

तंतेसोतारोरसंमदाय पुनन्तिसोमं महे द्युम्नाय। -ऋ०, ९/१०९/११

ते सुतासोमदिन्तमाः शुक्रावायुमसक्षत।। -ऋ०, ९/६७/१८

त्वं हि सोम वर्धयन्त्सुतो मदाय भूर्णये। -ऋ०, ९/५१/४

द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि। -ऋ०, ७/२४/२

न सोम इन्द्रमसुतो ममाद। -ऋ०, ७/२६/१

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुवाव हर्यश्वाद्रिः। -ऋ०, ७/२२/१

परीतोषिञ्चतासुतं सोमो उत्तमं हविः। -ऋ०, ९/१०७/१

परिप्रसोमतेरसो सर्जिकलशेसुतः। -ऋ०, ९/६७/१५

पवमानः सुतोनृभिः सोमोवाजमिवासरत्। -ऋ०, ९/६२/१६

प्रसोमयाहिधारयासुतइन्द्रायमत्सरः। -ऋ०, ९/६६/७

ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः सुतावन्तो ह्वामहे। -ऋ०, ८/१७/३

भद्रंसोमः सुवानो अद्याकृणोतुनः। -ऋ०, १०/३५/२

भुवन्मदे सुतस्य सोम्यस्यान्धसः। -ऋ०, १०/५०/७

मृज्यसे सोम सातये। -ऋ०, ९/५६/३

ये सोमासः परावतिये अर्वावति सुन्विरे। -ऋ०, ९/६५/२२

वृषाणं वृषभिर्यतं सुन्वन्ति सोममद्रिभिः। दुहन्ति शक्मना पयः।। -ऋ०, ९/३५/३

श्येनाभृतः सुतः। -ऋ०, १/८०/२

सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना।
-ऋ०, ८/३५/१६-१८

सुत इन्द्राय विष्णवे सोमः कलशे अक्षरत्।
-ऋ०, ९/६३/३

सुत एति पवित्र आ। सोमो याति विचर्षणिः।
-ऋ०, ९/४४/३

सुतं सोम ऋषिभिर्मतिभिर्धीतिभिर्हितम्।
-ऋ०, ९/६८/७

सुताइन्द्राय वज्रिणे सोमासोदध्याशिरः।
-ऋ०, ९/६३/१५

सुता सोमधुमत्तमाः सोमाइन्द्राय मन्दिनः।
-ऋ०, ९/१०१/४

सुनोत मधुमत्तमं सोममिन्द्राय वज्रिणे।
-ऋ०, ९/३०/६

सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे।
-ऋ०, ७/३२/८

सोमंमधुमन्तं सुनोत। -ऋ०, १०/३०/३

सोमंमनीषा अभ्यनूषतस्तुभः। -ऋ०, ९/६८/८

सोममिन्द्राय वज्रिणे। सुनोता मधुमत्तमम्।
-ऋ०, ९/५१/२

सोममिन्मा सुन्वतोयाचता वसुनमेपूरवः। सख्येरिषाथन। -ऋ०, १०/४८/५

सोमः सुतः पूयते अज्यमानः।
-ऋ०, ९/९७/३५

सोमः सुतोधारयात्योनहित्वासिन्धुर्न निम्नमभिवाज्यक्षाः। -ऋ०, ९/९७/४५

सोमं सुनुत। -ऋ०, १०/१४/१३

सोमोदेवोन सूर्योद्रिभिः पवते सुतः।
-ऋ०, ९/६३/१३

सोमो मरुत्वते सुतः। -ऋ०, ९/१०७/१७

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः। -ऋ०, ९/१/१

अध्वर्योऽअद्रिभिः सुतं सोमं पवित्राऽआ नय। पुनीहीन्द्राय पातवे॥ -यजु०, २०/३१

ब्रह्म क्षत्रं पवते तेज इन्द्रियं सुरया सोमः सुतः आसुतो मदाय। -यजु०, १९/५

यत्र सोमः सूयते यत्र यज्ञे घृतस्यधारा अभि तत्पवन्ते। -यजु०, १७/९७

वाजस्येमं प्रसवः सुषुवेऽग्रे सोमं राजानमोषधीष्वप्सु।
-यजु०, ९/२३

सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवतऽ इष ऽ ऊर्जे पवतेद्भयऽयओषधीभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते। -यजु०, ७/२१

सुनोता सोमपाव्ने सोमम्। -अथर्व०, ७/२/३

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि।
-सा० पू०, ४/२/१/६, ३४७

अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः।
-काण्व सं०, १३/४८

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा।
-काण्व सं०, ७/८

असावि सोमो अरुषो वृषा हरी।
-सा० पू०, ६/२/२/९, ५६२

इन्द्रसुतेषु सोमेष्विति कौत्सं।
-ता० ब्रा०, ९/२/२१

इन्द्रस्ते सोम सुतस्यपेयाः। कत्वे इन्द्राय सोम सुषुत परि स्रवापामीवा भवतु रक्षसा सह। -सा० पूर, ६/२/२/८, ५६१

ते श्रोत्रं सुन्वता सोमस्य त्वा धुम्नेनाभिषिञ्चाभ्यग्ने।
-तै० सं०, १/८/१४/१

पितेव सोम सूनवे सुशेवः।
-मा० श्रौ० सू०, २/४/१/४५

पिबा सोममिन्द्र मन्दतु त्वां यं ते सुषाव हर्यश्वाद्रिः सोतुबार्हुभ्यां सुयतो नार्वा।
-तै० सं०, २/४/१४/१

पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः सोतुर्बाहुभ्यां सुयतो नार्वा।
-सा० पू०, ५/१/१/८, (३९८)

पयः सोमः परिस्रुता घृतं मधुः।
-काण्व० सं०, २३/३६

परीतो षिञ्चता सुत ँ सोमो य उत्तम ँ हविः।
-काण्व सं०, २१/३

पाहि सोमं यथा शार्याते अपिंब सुतस्य।
-काण्व सं०, ७/३५

प्रत्यङ् सोमो अतिसुतः इन्द्रस्य युज्यः सखा।
-काण्व सं०, ११/४४

मित्रावरुणा सुतः सोम ऋतावृधा।
-तै० सं०, १/४/४

यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा।
-काण्व सं०, १९/१०

यत्र सोमस्सूयते यत्र यज्ञो घृतस्य धारा अभि तत् पवन्ते। -काण्व० सं०, ४०/५०

यत् सोमः सूयते। -गो० ब्रा०, २/३/९

यत् सोमं आ सुते नर इत्यच्छावाकस्य।
-गो० ब्रा०, २/५/१२

षिञ्चता सुत सोमो य उत्तमं हविः। दधन्वान् यो नर्यो अप्स्वाइन्तरा सुषाव सोममद्रिभिः।
-सा० पू०, ६/१/३/२, ५१२

स सुन्वे यो वसूनां यो रायामानेता य इडानाम्। सोमो यः सुक्षितीनाम्।
-सा० पू०, ६/२/४/५, ५८२

सुतं सोम मदामसि।
-सा० पू०, ५/१/५/६, ४३२

सुतासुताभ्याममृतः सोम इन्दुः।
-काण्व सं०, २१/९२

सुवानः सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन्। -तै० सं०, २/२/१२/४

सोममिन्द्र चमू सुतम्। -तै० सं०, १/४/३०/१

सोमाः सुतासो ये च सोत्वाः।
-सा० पू०, ३/१/२/९

सोमोऽभिषूयते। -गो० ब्रा०, १/२/९

सोमो वै राजा सधमादं इवान्याभिर् आसीत्। सोऽकामयत सर्वेषां देवानां राज्याय सूयेयेति स एतत् सामापश्यत्। तेनास्तुत ततो वै स सर्वेषां देवानां राज्यायासूयत। सूयते स्वानां श्रेष्ठतायै य एवं वेद। -जै० ब्रा०, ३/१५

सोमस्य शुष्मः सुरया सुतस्य।
-काण्व सं०, २१/३३

सोमस्येन्द्राग्नी पिबतँ सुतँ स्वाहा।
-मा० श्रौ० सू०, ३/६/१३

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः। -सा० पू०, ५/२/४/२

स्वा वै मऽएषेति। तस्मात्सोमो नाम।
-श० ब्रा०, ३/९/४/२२

ओषधिः सोमः सुनोतेः। यदेनमभिषुन्वन्ति।
-निरु०, ११/२

समानां संवत्सराणां मास आकृतिः सोमः। रूपविशेषैरोषधिः। चन्द्रमा वा।
-निरु०, ११/५

✓षूञ्-अभिषवे, ✓षू-प्रेरणे, ✓षु-प्रसवैश्वर्ययोः।

## सोमक्रयणी

तामनुकृतिमस्कन्नां वत्सतरीमाजन्ति सोमक्रयणीं तया सोमं राजानं क्रीणन्ति। इति।
-ऐ० ब्रा०, ५/२

यद् अधिकर्णी सोमक्रयणी भवति तेनैवैषां षोडशी क्रीतस् तेनावरुद्ध। अधिकर्ण्या सोमं क्रीणन्ति। -जै० ब्रा०, १/१९९

सोम+✓डुक्रीञ्-द्रव्यविनिमये।

## सोमपाः

सोमस्य सोमपाः पिब। -ऋ०, १/४/२

सोमपाः सोमपाव्नाम्। -ऋ०, १/३०/११

सोमपा सोमपीतये। -ऋ०, १/२१/३

सोम+✓पा-पाने रक्षणे च।

## सोमभृत्

सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्-तेन सा श्येनः सोमभृत्। -श० ब्रा०, ३/४/१/१२

सोम+✓डुभृञ्-धारणपोषणयोः।

## सोमसाम

सोमसाम भवति। यथा वा इमा अन्या ओषधय एवं सोम आसीत् सन्तपोऽतप्यत स एतत्सोमसामापश्यत्। -तां० ब्रा०, ११/३/८९

यद् उ सोमो राजा अपश्यत् तस्मात् सोमसामेत्य आख्यायते। -जै० ब्रा० ३/१५

सोम+✓षोऽन्तःकर्मणि।

## सोमयाजिन्

सोमेन नु मा याजयत् तस्मादप्यसोमयाजी समेव नयेत्। -श० ब्रा०, १/६/४/११

सोम+✓यज्-देवपूजासंगतिकरणदानेषु।

## सोम्यासः

सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम। -ऋ०, १०/१४/६

✓षुञ्-प्रसवैश्वर्ययोः।

## सौत्रामणी

तं पाप्मनोऽत्रायंत। सुत्रातं बतैनं पाप्मनोऽत्रासातामिति। तद्वाव सौत्रामण्यभवत्। तत्सौत्रामण्यै सौत्रामणीत्वम्। त्रायते मृत्योरात्मानम्। अप पाप्मानं हते। य एवमेतत्सौत्रागषयै सौत्रामणीत्वं वेद। -श० ब्रा०, १२/७/१/१४

सुत्रातं बतैनमत्रासातामिति। तस्मात् सौत्रामणी नाम। -श० ब्रा०, ५/५/४/१२

सु+✓त्रैङ्-पालने।

## सौपर्णं

ते सुपर्णा भूत्वोदपतंस्ते यत्सुपर्णा भूत्वोदपतंस्तदेतत्सौपर्णमित्याख्यानविद आचक्षते। इति।। -ऐ० ब्रा०, १३/१

यज्ञो वै देवेभ्योऽपाक्रामत्स सुपर्णरुपं कृत्वा चरन्तं देवा एतैः सामभिरारभन्त। -तां० ब्रा०, १४/३/१०

यद् व एवैनं एतेन सुपर्णं भूतं परिप्लवमानं आरम्भन्ते तस्मात् सौपर्णं इत्याख्यायते। -जै० ब्रा०, ३/१४७

सु+✓पर्ण-हरितभावे, सु+✓पृ-पालनपूरणयोः।

## सौभरं

ता अब्रुवन् सुभृतन्नोऽर्षीरिति तस्मात्सौभरम्। -ता० ब्रा०, ८/८/१६

सोऽब्रवीत् सुभृतं वा इमाः प्रजा अभार्षम् इति। तद एव सौभरस्य सौभरत्वम्। सुभृतां प्रजां बिभर्ति य एवं वेद। -जै० ब्रा०, १/१८७

सु+✓भृञ्-भरणे।

## सौमित्रं

सुमित्र सन् क्रूरमकरित्येनं वागभ्यवदत्त शुगार्थत्सतपोऽ तप्यत स एतत्सौमित्रमपश्यत्तेन शुचमपाहतापशुचं हते सौमित्रेण तुष्टुवानः। -ता० ब्रा०, १३/६/१०

सु+✓ञिमिदा-स्नेहने।

## सौमेधं

अथ सौमेधम्। देवा वा असुरान् हत्वापूता इवामेध्या अमन्यत। तेऽकामयन्त पूता मेध्याः स्यायेति। य एतत् सामापश्यन्। तेनास्तुवत। ततो वै पूता मेध्या अभवन्। तेऽब्रुवन् सुमेध्या वा अभूमेति। तद् एव सौमेधस्य सौमेध त्वम्। पूतो मेध्यो भवति य एवं वेद। -जै० ब्रा०, १/२२७

सु+✓मेधृ-संगमे।

## सौश्रवसं

यद् उ सुश्रवा स्थोरायणोऽपश्यत्तस्मात् सौश्रवसं इत्याख्यायते। -जै० ब्रा०, ३/२०२

सु+✓श्रु-श्रवणे।

## सौहविषं

तेऽब्रुवन् सुहविषो वा अभूमेति। तद् एव सौहविषस्य सौहविषत्वम्। -जै० ब्रा०, ३/१९६

सुहविर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत्। -तां० ब्रा०, १४/५/२५
सु+✓हू-दानादानयो:।

## स्कन्ध:

स्कन्धो वृक्षस्य समास्कन्नो भवति। अयमपीतर: स्कन्ध एतस्मादेव एतस्मादेव। आस्कन्नं काये।
-निरु०, ६/१७
✓स्कन्दिर्-गतिशोषणयो:।

## स्कन्ना

अथ यस्याज्यमुत्पूतं स्कन्दति। सा वै स्कन्ना नाम आहुति:। -ष० ब्रा०, ५/१/७
✓स्कन्दिर्-गतिषोषणयो:।

## स्कन्नाहुति:

अथ यस्याज्यमुत्पूतं स्कन्दिति सा वै स्कन्नाहुति।
-सा० वि० ब्रा०, ४/१
स्कन्न+✓हू-दानादानयो:।

## स्कम्भ:

त्रय: स्कम्भास: स्कभितास: आरभे।
-ऋ०, १/३४/२
उप द्यां स्कम्भयु: स्कम्भनेन। -ऋ०, ६/७२/२
चास्कम्भ चित्स्कम्भनेन स्कभीयान्।
-ऋ०, १०/१११/५
✓स्कभि-प्रतिबन्धे।

## स्तन:

तद् अभ्यस्तनयत्। तत् प्राक् प्रैषत्। तौ स्तनाव अभवताम्। यद् अभ्यस्तनयत् तत् स्तनयो स्तनत्वम्। -जै० ब्रा०, २/२२८
✓स्तन-देवशदे।

## स्तनयित्नु:

तत: स्तनयित्नुर् अजायत्। तस्मात् यदा विद्योतसेऽथ स्तनयति। -जै० ब्रा० ३/३८०
✓स्तन-देवशब्दे।

## स्तम्भ:

तद् यद् एषा देवतोभयान् देवासुरान् अन्तरा स्तब्ध्वा तिष्ठति तस्मात् एतत् स्तम्भ:।
-जै० ब्रा०, ३/३५९
✓स्तम्भु-स्तम्भार्थे।

## स्तावा:

दक्षिणा वै स्तावा:। दक्षिणाभिर्हि यज्ञ: स्तूयते। अथो यो वै कश्च दक्षिणां ददातिस्तूयत एव स:। -श० ब्रा०, ९/४/१/११
✓ष्टुञ्-स्तुतौ।

## स्तिपा

स्तिपा स्तियापालन:। उपस्थितान्। पालयतीति।
✓स्त्यै-शब्दसंघातयो:+✓पा-रक्षणे।
-निरु० ६/१७

## स्तिया

स्तिया आपो भवन्ति। स्त्यायनात्।
-निरु०, ६/१७
✓स्त्यै-शब्दसंघातयो:।

## स्तुक:

स्तुक: स्त्यायते: संघात:। -निरु०, ११/३२
✓स्त्यै-शब्दसंघातयो:, ✓ष्टुञ्-स्तुतौ।

## स्तूप:

स्तूप: स्त्यायते: संघात:। -निरु०, १०/३३
✓स्त्यै-शब्दसंघातयो:, ✓ष्टुञ्-स्तुतौ।

## स्तृ

स्तृभिस्तीर्णानीव ख्यायन्ते। -निरु०, ३/२०
✓स्तृञ्-आच्छादने।

## स्तेनः

स्तेनः कस्मात्? संस्त्यानमस्मिन्पापकमिति नैरुक्ताः। -निरु०, ३/१९

✓स्त्यै-शब्दसंघातयोः।

## स्तोता

स्तोता स्तवनात्। -निरु०, ३/१९

✓ष्टुञ्-स्तुतौ।

## स्तोमः

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम्॥ -ऋ०, १/७/७

मनो ह वाव तपः। तत्तप्यमानं वाचमसृजत। ताभ्यां अस्तुत स्तीमे स्तोम इति। यत् स्तोम इयब्रवीत् तत् स्तोमस्य स्तोमत्वम्। -जै० ब्रा०, ३/३३४

यद्धि किं च स्तुवते-एतमेव तेन स्तुवन्ति। -श० ब्रा०, ८/५/३/२

स्तोमः स्तवनात्। -निरु०, ७/१२

✓ष्टुञ्-स्तुतौ।

## स्तोमभागः

तद्यदेतस्मै स्तोमायैतं भागं प्रायच्छत्तस्मात् स्तोमभागः। -श० ब्रा०, ८/५/३/२

स्तोम+✓भज-सेवायां।

## स्तोम्यं

एतोन्विन्द्रं स्तवाम सखायः स्तोम्यं नरम्। -सा० पू०, ४/२/५/७, (३८७)

✓ष्टुञ्-स्तुतौ।

## स्थाणुः

स्थाणुस्तिष्ठतेः। -निरु०, १/१८

✓ष्ठा-गतिनिवृत्तौ।

## स्थूरः

स्थूरः। समाश्रितमात्रो महान्भवति। -निरु०, ६/२२

✓ष्ठा-गतिनिवृत्तौ।

## स्परं

अथैतानि पराणि। परैर्वै देवा आदित्यं सुवर्गं लोकमपारयन्। यद्पारयन्। तत्पराणां परत्वम्। पारयन्त्येनंपराणि। य एवं वेद। अथैतानि स्पराणि। स्परैर्वै देवा आदित्यं सुवर्गं लोकमस्पारयन्। यदस्पारयन् तत्स्पराणां स्परत्वम्। स्पारयन्त्येनं स्पराणिं। य एवं वेद। इति॥ -तै० ब्रा०, १/२/४/३

✓स्पृ-प्रीतिसेवनयोः।

## स्पृतः

यद् स्पृणोत्तस्मात् स्पृतः। -श० ब्रा०, ८/४/२/२

✓स्पृ-प्रीतिसेवनयोः।

## स्मयाकः

तद्देवा ओषधीषु न्यमृजुः। ते श्यामाका अभवन्। स्मयाका वै नामैते। तत् स्मयाकानां स्मयाकत्त्वम्। -तैत्ति० आ०, ५/१/३-४

✓स्मिङ्-ईसद्धसने।

## स्यं

स्यं शूर्पं, स्यतेः। -निरु०, ६/९

✓षोऽन्तः कर्मणि।

## स्यालः

स्याल आसन्नः संयोगेनेति नैदानाः। स्याल्ला-जानावपतीति वा। -निरु०, ६/९

✓षद्लृ-विशरणगत्यवसादनेषु+✓युजिर्-योगे।

## स्योनं

स्योनासि सुषदासि क्षत्रस्य योनिरसि। स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद। -यजु०, १०/२६

स्योनमिति सुखनाम स्यतेः। अवस्यन्त्येतत्। सेवितव्यं भवतीति वा। -निरु०, ८/९

✓षिवु-तन्तुसन्ताने।

## स्वः

स्वरादित्यो भवति। सुअरणः। सु ईरणः। स्वतो रसान्। स्वृतो भासं ज्योतिषाम्। स्वृतो भासेति वा। -निरु०, २/१४

स्वः इति द्यौ नाम

## स्वञ्चस्

स्वञ्चाः सु अञ्चनः। -निरु०, ५/७

सु+✓अञ्चु-गतिपूजनयोः।

## स्वपितिः

यत्रैतत्पुरुष स्वपिति नाम सता सौम्य। तदा सम्पन्नो भवति; स्वमपीतो भवति। तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति।

-छा० उप०, ६/८/१

सु+अ (नञ्)+✓पा-पाने।

## स्वप्नः

स्वप्न स्वप्नाभिकरणेन सर्वं नि ष्वापया जनम्।

-अथर्व०, ४/५/७

स्वप्नं सुप्त्वा यदि पश्यासि।

-अथर्व०, १०/३/६

स यदा स्वपिति अथैनमेते प्राणाः स्वाः अपियन्ति। तस्मात् स्वाप्ययः। स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते। -श० ब्रा०, १०/५/२/१४

✓ञिष्वप्-स्वप्ने।

## स्वप्ननंशनः

स्वप्ननंशनः। स्वप्नान्नाशयति।

-निरु०, १२/२८

स्वप्न+✓णश्-अदर्शने।

## स्वरः

ऐष ह वै सूर्यो भूत्वाऽमुष्मिन् लोके स्वरति तद्यत् स्वरति तस्मात् स्वरस्तत् स्वरस्य स्वरत्वम्।

-गो० ब्रा०, १/५/१४

तद् वाव स्वरस्य स्वरत्वं यत् स्वरयन् वैत्।

-जै० ब्रा० ३/३५७

यद् (देवाः) अस्पृण्वंस् तत् स्वराणां स्वरत्वम्।

-जै० ब्रा० २/६

✓स्वृ-शब्दोपतापयोः।

## स्वरसामन्

इमे वै लोकाः स्वरसाम इमान्वै लोकान्स्वरसाम-भिरस्पृण्वंस्तत्स्वरसाम्नां स्वरसामत्वम्।

-ऐ० बा०, १८/५

एतैर्ह वा अत्रय आदित्यं तमसोऽपस्पृण्वत; तद् यदपस्पृण्वत, तस्मात् स्वरसामानः।

-शां० ब्रा०, २४/३

स्वरसाम्न उपयन्तीमे वै लोकाः स्वरसामन इमान्वै लोकान्स्वर सामभिरस्पृण्वंस्तत्स्वरसाम्नां स्वरं सामत्वं तद्यत्स्वर साम्न उपयन्त्येष्वेवैनं तल्लोकेष्वभजन्ति इति। -ऐ० ब्रा०, १८/५

स्वर+स+✓मा-माने।

## स्वरुः

तस्यैतत् स्वमेवारुर्भवति। तस्मात् स्वरुर्नाम।

-श० ब्रा०, ३/७/१/२४

✓स्वृ-शब्दोपतापयोः।

## स्वर्कः

स्वर्कै स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा। -निरु०, ११/१४

सु+✓अर्क-स्तवने, ✓अर्च-पूजायां।

## स्वर्ग्यं

तदेतत् सूक्तं स्वर्ग्यमेतेन सूक्तेन देवाश्च ऋषयश्च स्वर्गं लोकमायन्।

-गो० ब्रा०, २/६/२

स्वर्+✓गम्लृ-गतौ।

### स्वसरं

स्वसराण्यहानि भवन्ति। स्वयं सारीण्यपि वा। स्वरादित्यो भवति। स एनानि सारयति।

-निरु०, ५/५

स्व+✓सृ-गतौ।

### स्वसृ

स्वसा सु असा। स्वेषु सीदतीति वा।

-निरु० ११/३२

सु+✓असु-क्षेपणे, स्व+✓षद्लृ-विशरण-गत्यवसादनेषु।

### स्वस्तिः

स्वस्तये। स्वस्तीत्यविनाशनाम। अस्तिरभिपूजितः। सु अस्तीति। -निरु०, ३/२१

सु+✓अस-भुवि।

### स्वाङ्कृतः

स स्वयमेव कृतः, स्वयं जातः। तस्मादाह स्वाङ्कृतोऽसीति। -श० ब्रा०, ४/१/१/२२

स्वां+✓डुकृञ्-करणे।

### स्वादः

स्वादोः स्वादीय स्वादुना सृजा।

-अथर्व०, ५/२/३

✓ष्वद्-आस्वादने।

### स्वाशिरामर्कः

स्वाशिरामर्कोऽन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्धयै। स्वाशिरो वै नामाप्सरस इमा एवौषधयः। यद् उ स्वाशिरोऽप्सरसोऽपश्यं स् तस्मात् स्वाशिरामर्क इत्याख्यायते। -जै० ब्रा०, ३/२२६

स्वाशिरामर्को भवति। अन्नं वा अर्कोऽन्नाद्यस्यैवरुध्यै प्राणा वै स्वाशिरो प्राणानामवरुध्यै। -तां० ब्रा०, १४/११/८९

स्वाशिरां+✓अर्क-स्तवने।

### स्वाहा

तं स्वो महिमाऽभ्युवादजुहुधीर्ति स प्रजापतिः विदाञ्चकार स्वो वै मा महिमाऽऽहेति। स स्वाहेत्येवाजुहोत् तस्मादु स्वाहेत्येव हूयते।

-श० ब्रा०, २/२/४/६

स्वाहाकृतयः। स्वाहेत्येतत्सु आहेति वा। स्वा वागाहेति वा। स्वं प्राहेति वा। स्वाहुतं हविर्जुहोतीति वा। -निरु०, ८/२०

सु+आङ्+✓हु-दानादानयोः।

### स्विष्टकृत्

यत्त्वय्यमुत्र सत्ययक्ष्महि तन्नः स्विष्टं कुर्वीति। तदेभ्यः स्विष्टमकरोत्। तस्मात् स्विष्टकृत् इति।

-श० ब्रा०, १/७/३/९

स्विष्ट ( सु + इष्ट )+✓डुकृञ्-करणे।

### हंसः

हंसो हनतेर्घ्नन्त्यध्वानम्। -निरु०, ४/१३

✓हन्-हिंसागत्योः।

### हथः

हननात्। -निरु०, ६/२७

✓हन्-हिंसागत्योः।

### हनुः

हनुर्हन्ते। -निरु०, ६/२७

✓ हन्- हिंसागत्यो।

### हरः

अग्ने यत्ते हरस्तेन तं प्रति हर।

-अथर्व०, २/१९/२

आपो यद्वो हरस्तेन तं प्रति हरत।

-अथर्व०, २/२३/२

जगद्धरणाद्धरो भव। -ग० उ० ता० उप०, ३

हरो हरतेः। ज्योतिर्हर उच्यते। उदकं हर उच्यते। लोका हरांस्युच्यन्ते। असृगहनी हरसी उच्येते।

-निरु०, ४/१९

✓हृञ्-हरणे।

## हरि:

आ रोदसी हर्यमाणो महित्वा नव्यं नव्यं हर्यसि मन्म नु प्रियम्। प्र पस्त्यमसुर हर्यतं गोराविष्कृधि हरये सूर्याय।।

-ऋ०, १०/९६/११ तथा च १०/९६ समस्तं सूक्त

हर्यतो हन्त इष्यति। -ऋ०, १०/११/६

युक्ता ह्यस्य हरयश्शता दशेति। सहस्रं हैत आदित्यस्य रश्मय:। हरिरसि हारियोजनो हरिभ्यां त्वा। हर्योर्धाना स्थसहसोमाऽइन्द्राय।।

-यजु०, ८/११

हर्यतं हरिं बभ्रुं पुनन्ति वारेण।

-सा० पू०, ६/२/१/८, ५५२

हरिरसि हार्योजनो हरिवान् हर्यो स्थाता।

-मैत्रा०, १/३/८३

हरि: हरन्तम्। -श० उप०, ५

तेऽस्य युक्तास्तैरिदं सर्वं हरति। तद् यदेतैरिदं सर्वं हरति तस्माद्धरय:।।

-जै० उ० ब्रा०, १/१४/३/३

हरि: सोमो हरितवर्ण:। अयमपीतरो हरिरेतस्मादेव। -निरु०, ४/१९

✓हृञ्-हरणे।

## हरिणी:

हरितो हरिणीराविवेश:। -अथर्व०, १०/८/३

✓हृञ्-हरणे।

## हरित्

तस्या रुपेणेमे वृक्षा हरिता हरितस्रज:।

-अथर्व०, १०/८/३१

हैरण्यैरन्यं हरितो वहन्ति।

-अथर्व०, १३/२/११

हरणानादित्यरश्मीन् हरितोऽश्वानिति वा।

-निरु०, ४/११

✓हृञ्-हरणे।

## हरिवान्

स वै हरिवान् भवति। प्राणो वै हरि:, स हि हरति; तस्माद्धरिवान् भवति।

-शां० ब्रा०, १७/१

✓हृञ्-हरणे।

## हरी

हरी त इन्द्र श्मश्रूण्युतौ ते हरितौ हरी।

-सा० पू०, ६/३/४/९, (६२३)

पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां हीदं सर्वं हरति। -ष० ब्रा०, १/१/१३

प्राणायानौ वास्य हरी। तौ हीदं सर्वं हर्तारौ हरत:। अथो अहोरात्रौ वास्य हरी। तौ हीदं सर्वं हर्तारौ हरत:। -जै० ब्रा०, २/७९

✓हृञ्-हरणे।

## हरिश्रीर्निधनं

अथ हरिश्रीर्निधनं। श्रीर् वै हरिश्रीर्निधनं। एतेन वा इन्द्र: सर्वेषां देवानां श्रियं अगच्छत्।

-जै० ब्रा०, २/१३

तेन हरिश्रीर इति प्रजायते श्रियं अहरत्। तद् हरिश्रीर्निध नस्य हरिश्रीर्निधनत्वम्।

-जै० ब्रा०, ३/२४९

हरिश्रीर्निधनं भवति। पशवो वै हरिश्रिय: पशूनामवरुध्यै श्रियञ्च हरश्चोपैति तुष्टुवान:।

-तां० ब्रा०, १५/३/९-१०

हरि+श्री:+निर्+✓डुधाञ्-धारणपोषणयो:।

## हवि:

अग्निमग्निं हवीमभि: सदाहवन्त विश्पतिम् हव्यवाहं पुरुप्रियम्। -ऋ०, १/१२/२

अतन्द्रोहव्यावहसिहविष्कृत आदिद्देवेषु राजसि।।

-ऋ०, ८/४९/१५

आस्मिन्हव्या जुहोतन। -ऋ०, ८/४४/१

एवेन्द्राग्निभ्यामहावि हव्य। -ऋ०, ५/८६/६

जुहुता हवि:। -ऋ०, १०/१४/१३

यमाय घृतवद्धविर्जुहोत। -ऋ०, १०/१४/१४

विश्वमा हूयते हविः। -ऋ०, १/३६/६

हवन्त उ त्वा हव्यं विवाचि।

-ऋ०, ७/३०/२

हवं त्वां हवन्ते अध्वरे। -ऋ०, १/१४२/१३

हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परियास्यध्वरम्। -ऋ०, ९/८३/५

हवीमभिर्हवते यो हविर्भिश्व स्तोमेभी रुद्रं दिषीय।

-ऋ०, २/३३/५

हव्यं जुहोतन। -ऋ०, १०/१४/१५

हव्यं वह तुप्रजानन्। -ऋ०, १०/१६/९

हव्यं वीर हव्या हवन्ते। -ऋ०, ६/२१/१

हूयते हविः।

-ऋ०, १/२६/६, १/३४/१०, का० स्मृ० ९/११

घृतवत् पयो राज्ञे हविर्जुहोतन।

-अथर्व०, १८/२/३

आज्यस्याज्यमसि हविषो हविः।

-मैत्रा०, १/१/२७

चैव जुहुयाद्धविः। -का० स्मृ०, १७/१४

देवेभ्यो जुहुताद हविः स्वाहा।

-ता० ब्रा०, २१/१०/१०-२२

श्रद्धया हूयते हविः। -तै० ब्रा०, २/८/८/७

श्रद्धां देवा यजमानाः। वायुगोपा उपासते। श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया हूयते हविः, इति।

-तै० ब्रा०, २/८/८

हविराहुतयः स्मृताः।

-कात्या० स्मृ०, २६/११

हविर्यत्सान्तपनेऽग्नौ हूयते।

-गो० ब्रा०, १/२/२२

हविषो हविर्यत्।

-सा० पू०, ६/३/२/५ (५९९)

हवे हवे सुहवं शूरमिन्द्रम्। हुवे न शक्रं पुरुहूत।

-सा० पू०, ४/१/५/२, ३३३

✓हु-दानादानयोः।

## हविर्दानं

अथ यदस्मिन् सोमो भवति। हविर्वै देवानाम् सोमः। तस्माद्धविर्दानं नाम।

-श० ब्रा०, ३/५/३/२

हविः+✓दा-दाने।

## हविर्धानं

हविर्धाने हविषां निधाने। -निरु०, ९/३६

हविः+✓डुधाञ्-धारणपोषणयोः।

## हव्यं

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय। -अथर्व०, ३/१५/३

जुषस्व हव्यमाहुतम् प्रजा देवि दिदिड्ढि नः।

-अथर्व०, ७/४६/१

✓हु-दानादानयोः।

## हव्यदाता

यो अग्नये ददाश हव्यदातये।

-सा० पू०, २/१/१/८

हव्य+✓दा-दाने।

## हव्यवाट्

बर्हिस्त्वामिमे हव्यवाहो हवन्ते।

-ऋ०, ३/४३/१

अग्निमंग्निं हवीमभिः सदाहवंन्त विश्पतिम्। हव्यवाह पुरुप्रियम्।।

-अथर्व०, २०/१०१/२

तूर्णिर्ह व्याडिति शंसति, वायु र्वै तूर्णिर्ह व्यवाड्वायुर्हीदं सर्व सद्यस्तरति यदिदं किंच; वायुर्देवेभ्यो हव्यं वहति, वायुमेव तदन्तरिक्षलोक आयातयति। इति।।

-ऐ० ब्रा०, १०/२

हव्य+✓वह-प्रापणे।

### हस्तः

हस्तो हन्तेः। प्राशुर्हनने। -निरु०, १/०७

✓हन्-हिंसागत्योः, ✓हसे-हसने।

### हस्तघ्नः

हस्ते हन्यते। -निरु०, ९/१४

✓हन्-हिंसागत्योः।

### हारायणं

अथ हारायणम्। देवासुरा अस्पर्धन्त। ते देवा अकामयन्त हरोऽसुराणां हरमेति। तेनासुराणां हरोऽहरन्। तद् यद् हरोऽहरन् तद् हारायणस्य हारायणत्वम्। -जै० ब्रा०, ३/२१७

इन्द्रस्तेजस्कामोहरस्कामस्तपसोऽतप्यत स एतद्धारायणमपश्यत्तेन तेजो हरोऽवारुन्ध तेजस्वी हरस्वो भवति हारायणेन तुष्टुवान।

-ता० ब्रा०, १४/९/३४

✓हृञ्-हरणे, ✓हर्य-गतिकान्त्योः।

### हारिवर्णं

यद् उ हरिवर्ण आङ्गिरसोऽपश्यत् तस्मात् हारिवर्णं इत्याख्यायते। -जै० ब्रा०, १/१८३

हरिवर्णो वा एतत्पशुकामः सामापश्यत्।

-ता० ब्रा० ८/९/४

आङ्गिरसः स्वर्गं लोकं यतो रक्षांसि अन्वसचन्त तान्येतेन हरिवर्णोऽपाहन्त।

-ता० ब्रा० ८/९/५

हरि (हारि)+✓वृ-वरणे।

### हाविष्कृतं

यद् उ हविष्मांश्च हविष्कृत चाङ्गिरसाव् अपश्यतां तस्मात् हाविष्मत हाविष्कृते इत्याख्यायते। -जै० ब्रा०, ३/२९

हवि+✓डुकृञ्-करणे।

### हाविष्मतं

हाविष्मतं भवति। हविष्मांश्च वै हविष्कृच्चाङ्गिरसावास्तां द्वितीयेऽहनि हविष्मानराध्नोन्नवमेऽहनि हविष्कृत्।

-तां० ब्रा०, ११/१०/९

हवि+मतुप्।

### हासमाना

हासतिः स्पर्धायाम्, हर्षमाणे वा।

-निरु०, ९/३९

✓ह्वेञ्-स्पर्धायां शब्दे च।

### हिङ्कारं

तं वा एतं हिङ्कारं हिंभा इति हिङ्कुर्वन्ति।

-जै० उ० ब्रा०, १/१/४/१

तं हैतमेके हिङ्कारं हिंभा ओवा इति बहिर्धेव हिङ्कुर्वन्ति। बहिधवः वै श्रीः। श्रीर्वै साम्नो हिङ्कार इति। -जै० उ० ब्रा०, १/१/४/६

यद्धिङ्करोति तद्धिङ्कारस्य रूपम्।

-श० ब्रा०, १/४/१/१

सा हैनानुदीक्ष्य हिञ्चकार।

-श० ब्रा०, २/२/४/१२

✓हि-गतौ वृद्धौ च, ✓हिक्क-हिक्कते+✓डुकृञ्-करणे।

### हिमः

हिमं पुनर्हन्तेर्वा हिनोतेर्वा। -निरु०, ४/२७

✓हि-गतौ वृद्धौ च, ✓हन्-हिंसागत्योः।

### हिरण्यं

तद्यदस्यैतस्यां रम्यायां तन्वां देवा अरमन्ततस्माद्धिरम्यम्। हिरण्यं ह वै तद्धिरण्यम्।

-श० ब्रा०, ७/४/१/१६

हिरण्यं कस्मात्? ह्रियत आयम्यमानमिति वा। ह्रियते जनाज्जनमिति वा। हितरमणं भवतीति वा। [ हृदयरमणं भवतीति वा ] हर्यतेर्वा स्यात् प्रेप्साकर्मणः। -निरु०, २/१३

✓हर्य-गतिकान्त्योः, ✓हि-गतौ वृद्धौ च+रमु-क्रीडायां, हित+✓रमु-क्रीडायां, ✓हृञ्-हरणे।

## हिरण्यस्तूपः

हिरण्यस्तूपो हिरण्यमयस्तूपो हिरण्यमयस्तूपोऽस्येति वा स्तूपः स्त्यायतेः सङ्घातः। -निरु०, १०/३३

हिरण्य+✓स्त्यै-शब्दसंघातयोः।

## हीनः

हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति। -ता० ब्रा०, १७/३/२

✓हा-त्यागे, अनाहते च।

## हुतः

ह्रियमाणः आग्नेयो हूयमानो वाग्धुतः। -यजु०, ३९/२

✓हु-दानादानयोः।

## हृदयं

स वा एष आत्मा हृदि, तस्यैतदेव निरुक्तम्, हृदयमिति तस्माद्हृदयम्। -छा० उप०, ८/३/३

एष प्रजापतिर्यद् हृदयमेतद् ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरं हृदयमिति। 'हृ' इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद। 'द' इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद। 'यम्' इत्येकमक्षरमेति स्वर्गं लोकं य एवं वेद।

-श० ब्रा०, १४/८/४/१,बृ० उ०, ५/३/१

✓हृञ्-हरणे, ✓हृञ्-हरणे+✓दा-दाने+✓इण्-गतौ।

## हेतिः

हेतिर्हन्तेः। -निरु ६/३

✓हन्-हिंसागत्योः।

## हेमन्तः

हेमन्तो हिमवान्। -निरु०, ४/२७

✓हन्-हिंसागत्योः।

## होता

होता हुवानो अत्र सुभगाय देवान्। -ऋ०, ७/३०/३

आ वो होता जोहवीति। -ऋ०, ७/५६/१८

युवं होत्रामृतुथा जुह्वते। -ऋ०, १०/४०/४

एवा होत सत्यपर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व। -ऋ०, १/७६/५

न होता हुवानो अत्र सुभगाय देवान्। -ऋ०, ७/३०/३

य इमा विश्वा भुवनानि जुह्वद् ऋषिर्होता न्यसीदत् पिता नः। -यजु०, १७/१७

अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि॥ -सा० पू०, १/१/१

पौर्णमासात्यये हव्यं होता वा यदहर्भवेत्। तदहर्ज्जुहुयादेवम मावास्यात्ययेऽपि च। -का० स्मृ०, १८/७

य द्वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति। तदेव होतुर्होतृत्वं होता भवति। इति। -ऐ० ब्रा०, १/३

यद् वा स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्या वाहयति तदेव होतुर्होतृत्वम्। -ऐ० ब्रा०, १/२

होतुर्ह्वातव्यस्य। -निरु०, ४/२६

होतारं ह्वातारम्। जुहोतेर्होतेत्यौर्णवाभः। -निरु०, ७/१५

✓हु-दानादानयोः, ✓ह्वेञ्-स्पर्द्धायां शब्दे च।

## होतृषदनं

अथ होतृषदने उपविशति। इदमहमर्वावसोः सदने सीदामि इति। अर्वावसुर्वै नाम देवानाम् होता, तस्यैवैतत् सदने सीदति।

-श० ब्रा०, १/५/१/२४

होतृ+✓षद्लृ-विशरणगत्यवसादनेषु।

## होमः

इमं होमा यज्ञमवतेमं संस्रावणा उत। यज्ञमिमं वर्धयता गिरः संस्राव्येण हविषा जुहोमि।

-अथर्व०, १९/१/२

✓हु-दानादानयोः।

## ह्यः

ह्यः हीनः कालः। -निरु०, १/६

✓ओहाक्-त्यागे।

## ह्रदः

ह्रदो ह्रदतेः शब्द कर्मणः। ह्लादतेर्वा स्याच्छीतीभावकर्मण। -निरु०, १/९

✓ह्लाद-अव्यक्ते शब्दे।

## ह्रस्वः

ह्रस्वो ह्रसतेः। -निरु०, ३/१३

✓ह्रस्-शब्दे।



